

महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशः ।

# विज्ञापनम् ।

हन्त श्रीमन्तः ! गुणग्राहिणो भवन्तः सद्गुणानेवानुसरन्तो गृहीत-वन्तः खल्वस्मदीयमेव मेघदूतम्; न पुनर्वातपीवरीकृतं शरीरमिव द्रुवं ह्यभारभूतं निरर्थं कविविविधविषयविशालायतनं तत्पुस्तकान्तरम्। प्रेक्षावन्तो हि यदृच्छयागतं पुञ्जीभूतमपि लोष्टं विहाय सूक्ष्ममपि स्वर्णं परिगृह्णन्ति। कवयोऽपि कृशाङ्गीमेव व्यक्तिं स्तुवन्ति। तदिदं साभिनिवेशं संशोध्य सम्पादितं द्वितीयं संस्करणम्। अत्र च भवतां सुविधाविधानाय ग्रन्थस्थवाक्यराशिं विन्यस्तानि, 'कागज' इतीदमपि विशेषोत्तममेव दत्तम्; तथापि भवतां ग्रहणसौकर्यार्थं मूल्यं कियदपि न वर्धितमिति।

१८६१ शकाब्दीयसौरवैशाखस्य पञ्चविंशदिवसीयम्।

कलिकाता ४१ संख्यक-
सुरिवर्मणि

विनीत—
श्रीहरिदासदेवशर्मणः।

# अथ कविसमयनिरूपणम् ।

इह खल्वैहिकनश्वरसुखविमुखानां चरमोन्नतिमुक्तिपथ-पथिकानां प्राचीनानामार्य्याणां केवलदृष्टान्तप्रदर्शनद्वारेण लेशत एवैहिकसुख-समृद्धिमात्रसाधनप्रयोजनेषु खल्वितिहासेषु नासीत् कियानपि यत्नः; आसीच्च वेदानुबन्धिषु नानाविधोपाख्यानसरसीकृतेषु क्रियायोगोपयोगिषु पुराणेषु प्रभूततमः प्रयत्नः । तेन हि भारतेऽस्मिन्नार्य्यजातेरितिहासाना-मभाव एव सामान्यतः पुराणानाञ्च प्रचुरतरः प्रचारः परिलक्ष्यते। अतएव इदानीमतीतविषयविशेषनिरूपणं सुदुष्करं विविधमतभेद-समाकुलञ्च स्यादित्यवश्यमभ्युपेयम् । अतएव कालिदासकालनिरूपणे-ऽपि सुदुष्करताऽनुभूयते मतभेदाश्च दृश्यन्ते ।

मालवदेशान्तःपातिन्यामुज्जयिनीनामराजधान्यां सर्वगुणाकरो विक्रमादित्यो नरपतिरासीत् (१)। तस्य च धन्वन्तरिप्रभृतयो नवसंख्यकाः पण्डितरत्नभूताः सभासदो बभूवुः, कालिदासस्तु तेषामन्यतम इत्यर्थे नास्ति प्रायेण कस्यचिदपि विप्रतिपत्तिः (२)। तेन तु विक्रमादित्यकाल-निर्णयेनैव कालिदासकालो निर्णीतः स्यादिति स एव प्रथमं निर्णेयः ।

---

(१) "मत्तोऽधुना कृतिरियं सति मालवेन्द्रे
श्रीविक्रमार्कनृपराजवरे समासीत् ॥"

"यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी ।" ज्योतिर्विदाभरणम्।

(२) "धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्ट-घटकर्पर-कालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥" ज्योतिर्विदाभरणम् ।

सन्ति च विक्रमादित्यसमयनिरूपणे विविधा मतभेदाः। तथा च—

केचित्, विक्रमादित्येति न खलु पितृकृतं नाम, अपि तु उपाधिमात्रमेतत्। तथा च ५३३ खृष्टाब्दे मालवराजो यशोधर्म्मदेवः, मालवदेशस्य पूर्वतः कियन्तमंशं विजितवतस्तोरामणनाम्नो नरपतेर्मरणानन्तरं तदात्मजं मिहिरकुलं विजित्य तमपहृतमंशमासादयन् मिहिरकुलं चिरायैव मालवदेशान्निष्काशयामास; तथा तस्मिन् समरे सूर्य्यसमानतेजःप्रकाशात् आदितेयतुल्यविक्रमप्रदर्शनाद्वा 'विक्रमादित्य'-मुपाधिञ्च धारयामास; तथा मालवदेशे खृष्टजन्मनः सप्तपञ्चाश-(५७) वत्सरपूर्वतः प्रवर्त्तितं नवत्यधिकपञ्चशतसंख्यातं (५९०) मालवसंवत् (१) विक्रमसंवन्नाम्ना च परिवर्त्तयामास। तथा च सति यदेव ५९० संख्यातं मालवसंवदासीत्, तदेव तदानीं परिवर्त्तितं सत् ५९० संख्यातं विक्रमसंवत् बभूव।

ईदृशानुमाने चायमेव हेतुः, यत्, तत् समरात् पूर्ववर्त्तिनीषु शिलालिपिषु मालवसंवत् दृश्यते, दृश्यते च तत्समरात् परवर्त्तिनीषु शिलालिपिषु विक्रमसंवदिति। (२)

अतएव खृष्टीयषष्ठशताब्दीमध्यवर्त्तिनो यशोधर्म्मदेवस्य सभासत् कालिदासोऽपि खृष्टीयषष्ठशताब्दीमध्य एव प्रादुर्बभूव।

---

(१) "संवद्वर्षे" इत्यव्ययवर्गेऽमरः।

2 "With regard to the introduction of the Vikrama era, I challenged the production of any single inscription prior to 543 A.D. dated according to the Vikrama era. No such inscriptions were then known and yet it was supposed that this era had been in use ever since 56 B. C. however."

Max Muller's "India—what can it teach us?" Preface to the second edition.

युक्त्यन्तरस्यातावतारयन्ति ; यत्, विक्रमादित्यसभासदामन्यतमो ज्योतिर्विंद् वराहमिहिरः सप्ताधिकपञ्चशतशकाब्दे ( ५०७ शाके ) लोकान्तरमवाप, (१) खृष्टीयाष्टसप्ततितमवर्षे च (७८ खृष्टाब्दे ) शकाब्दारम्भः ; तथा च ५८५ खृष्टाब्दे वराहमिहिरमरणात् तत्समसामयिकः कालिदासोऽपि खृष्टीयषष्ठशताब्दीय एवासीदिति ।

६०७ खृष्टाब्दे राजत्वमधिगच्छतः कान्यकुब्जेश्वरस्य हर्षवर्द्धनस्य सभासन्महाकविः कादम्बरीप्रणेता तत्रभवान् बाणभट्टः स्वकीयहर्षचरितभूमिकायां कवित्वे कालिदासमतीवप्रशशंस (२)। अतः कालिदासस्य तत्पूर्ववर्त्तित्वाभावे सा प्रशंसैव नोपपद्यते ।

अतः खृष्टीयषष्ठशताब्दीसमय एव कालिदासाविर्भावकाल इति सिद्धमिति इउरोपीया भारतीयाश्च पुरावृत्तविद्विशेषा निरूपयन्ति । अत्राद्भुतमनुमानम्, सन्ति च बहवः प्रतिवादविषयाः ।

कालिदासाविर्भावकालः खृष्टीयपञ्चमशताब्दीसमय इतीतरे । चतुर्थशताब्दीत्यपरे । तृतीयशताब्दीत्यन्ये ।

प्रमातारस्तु, खृष्टजन्मनः सप्तपञ्चाशद्वर्षपूर्वे मालवदेशे भारतललामभूतायामुज्जयिनीनामधेयायां नगर्य्यामार्य्याणां गौरवसूर्य्यः सकलगुणाकरो विक्रमादित्यनामा नरपतिरासीत् । तस्य सभासदां नवसंख्यकानां कविपण्डितशिरोमणीनामन्यतमः कालिदासो बभूव । स च खृष्टजन्मनस्त्रयस्त्रिंशद्वत्सरपूर्वे ज्योतिर्विदाभरणं नाम ग्रन्थं निर्म्मातुमारभत । तथा च ज्योतिर्विदाभरणशेषाध्याये—

---

(१) ब्रह्मगुप्तविरचितखण्डखाद्यटीकाऽनुसन्धेया ।

(२) "निर्गतासु नवा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥"

हर्षचरितभूमिकायाम् ।

"वर्षे सिन्धुरदर्शनाम्बरगुणैर्याते कलौ सम्मिते
मासे माधवसंज्ञितेऽत्र विहितो ग्रन्थक्रियोपक्रमः ॥" (१)

तथा च इदानीं ( १९२० खृष्टाब्दे ) कलेर्गताब्दाः ५०२१। ततश्च उक्तवचनोक्तासु ३०६८ संख्यासु हृतासु, १९५३ वर्षसंख्या अवशिष्यन्ते। ततोऽपि च १९२० खृष्टाब्दसंख्यासु हृतासु ३३ वत्सरास्तिष्ठन्ति। एवञ्च सति खृष्टजन्मनस्त्रयस्त्रिंशद्वत्सरपूर्वं ज्योतिर्विदाभरणारचनारम्भ इति निःसन्देहमेव सिद्धम्। ज्योतिर्विदाभरणारचनारम्भाच्चतुर्विंशतिवत्सरपूर्वं च विक्रमादित्यराज्याभिषेकसमये विक्रमसंवत्प्रवर्त्तनमभूदित्यनुमीयते। तेनेदानीं १९७७ विक्रमसंवत्, ततश्च १९२० खृष्टाब्दसंख्यासु हृतासु ५७ संख्या अवशिष्यन्ते।

तत् सिद्धं खृष्टजन्माऽव्यवहितपूर्वशताब्दीकाल एव विक्रमादित्यस्य कालिदासस्य च प्रादुर्भावकाल इति।

न चायमपरः कश्चन कालिदास इत्यपि वक्तुं युज्यते,

"काव्यत्रयं सुमतिकृत् रघुवंशपूर्वं
जातं यतो ननु कियच्छ्रुतिकर्मवादः।
ज्योतिर्विदाभरणकालविधानशास्त्रं
श्रीकालिदासकवितो हि ततो बभूव ॥"

इत्यनेन ज्योतिर्विदाभरणश्लोकेन रघुवंश-कुमारसम्भव-मेघदूतकर्त्तुः कालिदासस्यैव ज्योतिर्विदाभरणकर्त्तृतया स्पष्टाभिधानात्। न वा राजान्तराश्रितोऽयं कालिदास इत्यपि शक्यते वक्तुम्,

(१) सिन्धुरो हस्ती अष्टौ (८) "सिन्धुरः (पुं) हस्ती"ति शब्दकल्पद्रुमः। दर्शनानि षट् (६) अम्बरं शून्यं (०) गुणास्त्रयः सत्त्वरजस्तमांसि (३) "अङ्कस्य च वामा गति"रिति ज्योतिर्विदां नियमः। तथा च कलियुगारम्भात् अष्टषष्ट्युत्तरत्रिसहस्रवर्षवृन्दे (३०६८) अतीते माधवसंज्ञिते वैशाखे मासि ज्योतिर्विदाभरणग्रन्थरचनारम्भः कृत इत्यर्थः।

"मत्तोऽधुना कृतिरियं सति मालवेन्द्रे
श्रीविक्रमार्कनृपराजवरे समासीत् ॥"
"धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्ट-घटकर्पर-कालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥"

इति ज्योतिर्विदाभरणे स्पष्टमभिदधता कालिदासेन स्वयमेवात्मनो विक्रमादित्याश्रिततया परिचायितत्वात् ।

अत्र तु बहुपरिकरत्वेन भारतीयसभ्यताया अर्वाचीनतां प्रतिपादयितु-मीहमानानां प्रतिवचनमधरस्फुरितं "प्रक्षिप्तमेत"दिति वचनोच्चारण-मन्तरेण नास्ति कश्चित् प्रतिवादोपाय इति सुसमञ्जसमिति ।

अथ तत्रभवान् सकलकविकुलमुकुटमहामणिरसौ जन्मना कतमं वंशं देशं वा समलञ्चकारेति निरूपणमिदानीमसम्भवमेव तादृश-मूलानुपलम्भात् । तत्र ये च सन्ति विविधाः परस्परविरुद्धा लोकप्रवादाः, ते तु प्रायेणैव विश्वासपदवीं नावगाहन्ते । अतएव जीवनचरितसङ्कलन-मप्यसम्भवमेव ।

कालिदास इति वङ्गीयनामदर्शनात् वङ्गदेशीय इति केचित् । मगधदेशीय इतीतरे । मालवदेशीय एवेति चान्ये । अपरे तु, विक्रमादित्यस्य प्रियसखो मातृगुप्तनामा कश्चिन्महाकविः काश्मीरराज-दायादे द्वितीयप्रवरसेने राज्याभिषेकात् पूर्वमेव काश्मीरमपहाय तीर्थ-पर्य्यटनपरायणे मृते च तदीयपितृव्ये तदानीन्तनकाश्मीरराजे हिरण्य-राजे काश्मीरस्य राजशून्यतया तदीयसिंहासने विक्रमादित्येनैव प्रतिष्ठा-पितः । अथ गच्छति कियति काले मातृगुप्तः प्रियसुहृदो विक्रमादित्यस्य मरणमाकर्ण्य शोककातरः काश्मीरराज्यमपहाय काशीवासमङ्गीकुर्वन्

तत्र स्थितेन द्वितीयप्रवरसेनेन सह परमां मैत्रीमापद्यमानः प्राकृतभाषया "सेतुबन्ध"नामकं महाकाव्यं विरचय्य द्वितीयप्रवरसेनकृतमिदमिति प्रख्यापितवान्। कालिदास इति तस्यैव मातृगुप्तस्य नामान्तरमिति वदन्ति।

अस्ति कश्चिदीदृशः सम्प्रदायः, यः खल्वौश्वरेच्छावशादेवोत्कर्षमपकर्षं वा समापन्नानामपि कालिदासकाव्यानामुत्तममध्यमाधमतादर्शनादेव कालिदासत्रयं मन्यते (१)। मन्ये, स पुनः सम्प्रदाय इतः परं तादृश-विविधकाव्यदर्शनात् वङ्किमत्रयं मधुसूदनत्रयमपि मन्येत। हन्त! राजशासनभयाभावात् यत् किमप्युच्चारयितुमायासविशेषविरहाच्च यः कश्चिदेव यथेष्टमाचष्टां नाम; तत्र कः प्रतिबन्धुं चेष्टेत इति।

---

(१) "एकोऽपि जीयते हन्त! कालिदासो न केनचित्।
शृङ्गारे मधुरोद्गारे कालिदासत्रयी किमु॥"

## अथ नायकादिनिरूपणम् ।

अत्र यक्षो धीरप्रशान्तः अनुकूलश्च नायकः । यथा साहित्यदर्पणे—

"सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात् ।"

"अनुकूल एकनिरतः ।"

तस्य पत्नी स्वीया नायिका । यथा तत्रैव—

"विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।"

प्रवासाख्यो विप्रलम्भशृङ्गारो रसः । तथा च तत्रैव—

"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।"

"प्रवासो भिन्नदेशित्वं कार्याच्छापाच्च सम्भ्रमात् ।"

अत्र तु शापादेव प्रवासः ।

प्राधान्येन प्रसादो गुणः । क्वचित्तु माधुर्यमपि लक्ष्यते । तथा च तत्रैव—

"चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।
स प्रसादः समस्तेषु रसेषु रचनासु च ॥"

वैदर्भी रीतिः । तथा च तत्रैव—

"माधुर्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥"

तदयं संग्रहश्लोकः—

नेता धीरप्रशान्तः परममनुगुणो यक्ष उक्तस्वभावः,
भार्या तस्य स्वकीया तदभिहितगुणा नायिका चात्र मध्या ।
प्राधान्येन प्रसादः, प्रसरति च रसो विप्रलम्भः प्रवासः
वैदर्भी नाम रीतिर्जगति निरुपमं खण्डकाव्यं किलेदम् ॥

# मेघदूतम् ।

—:o◡o:—

पूर्व्वमेघः ।

—::o::—

**कश्चित् कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः**
**शापेनास्तंगमितमहिमा वर्षभोग्येण भर्त्तुः ।**
**यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु**
**स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु ॥१॥**

---

**अन्वयः**—स्वाधिकारप्रमत्तः कान्ताविरहगुरुणा वर्षभोग्येण भर्त्तुः शापेन अस्तंगमितमहिमा कश्चित् यक्षः जनकतनयास्नानपुण्योदकेषु स्निग्धच्छायातरुषु रामगिर्य्याश्रमेषु वसतिं चक्रे ॥१॥

चञ्चला—

वामाङ्गसङ्गिनीं वामां वामदेवाय बिभ्रते ।
उच्छेत्तुमिव विच्छेदं भवच्छेदकृते नमः ॥
चञ्चलाऽतिसरला स्वलङ्कृतिः सूक्ष्ममूर्त्तिं गुणदोषग्राहिणी ।
मल्लिनाथजनितां किलाग्रणीं सौहृदादनुपदं गमिष्यति ॥

कश्चिदिति । स्वाधिकारात् स्वकर्त्तव्यात् प्रमत्तः अनवधानः अनव-

---

(१) स्वाधिकारात् प्रमत्त इति पाठान्तरम् ।

धानतया स्वकीयकर्त्तव्यकार्य्यमकुर्वन्नित्यर्थः, अतएव कान्ताविरहेण प्रियतमाविच्छेदेन गुरुणा दुर्वहेन, वर्षभोग्येण एकवत्सरं यावदनुभवनीयेन, भर्त्तुरधिपतेः कुवेरस्य, शापेन अभिसम्पातेन, अस्तंगमितो लोपं प्रापितो महिमा माहात्म्यं क्षमता यस्य स तादृशः, कश्चिद् यक्षो देवयोनिविशेषः, जनकतनयायाः सीतायाः स्नानेन पुण्यानि पवित्राणि उदकानि जलानि येषु तेषु तथोक्तेषु, तथा स्निग्धा घनाः छायातरवो नमेरुतरवो रुद्राक्षवृक्षा येषु तादृशेषु, रामगिरेश्चित्रकूटपर्व्वतस्य आश्रमेषु वसतिं निवासं चक्रे कृतवान् ।

अत्र शापं प्रति स्वाधिकारप्रमत्त इति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

चित्रकूटपर्व्वतस्तु वुन्देलखण्डे वर्त्तते । अन्ये तु व्याख्यातारः—रामगिरिपदस्यार्थः—"रामतेक्" "रामटेङ्गा" "रामघर्" इत्यादिकमाचक्षाणाः परस्परं विवदन्ते ।

"न नामग्रहणं कुर्य्यात् कृपणस्य गुरोस्तथा ।
अभिशप्तस्य पत्न्याश्च मातापित्रोर्विशेषतः ॥"

इति सम्प्रदायसिद्धवचनात् यक्षस्य अभिशप्ततया नामनिर्द्देशो न कृतः ।

पुरा किल यक्षराजेन कुवेरेण शिवपूजनसाधनानि मानससरोवरपद्मानि परिरक्षितुं कोऽपि यक्षो नियुक्तः, स तु कदाचिदतीवमदनार्त्तः सन् भवनमागत्य वहुसमयमेव प्रियतमया सह सङ्गतः । अत्रान्तरे ऐरावतेन हस्तिना उपेत्य सर्वाण्येव पद्मानि भग्नानि । इतश्च रोषाविष्टो यक्षराजस्तं प्रियाविरहेण संवत्सरं यावदवस्थातुं शशाप । ततश्चासौ यक्षो रामगिरिमागत्य तत्रावितिष्ठति किं वदन्ती ॥१॥

सञ्जीवनी—

मातापितृभ्यां जगतो नमो वामार्द्धजानये ।
सद्यो दक्षिणदृक्पात-सङ्कुचद्वामदृष्टये ॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥
शरणं करवाणि शर्म्मदं ते चरणं वाणि ! चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब ! कृतार्थसार्थवाहम् ॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥

"आशीर्नमस्क्रिया वस्तुनिर्द्देशो वापि तन्मुखम्" इति शास्त्रात् काव्यादौ वस्तुनिर्द्देशात् कथां प्रस्तौति कश्चिदिति । स्वाधिकारात् स्वनियोगात् प्रमत्तोऽनवहितः "प्रमादोऽनवधानता" इत्यमरः । "जुगुप्सा-विरामप्रमादार्थानामुपसंख्यानम्" इत्यपादानत्वात् पञ्चमी । अतएवाप-राधाद्धेतोः, कान्ताविरहेण गुरुणा दुर्भरेण दुस्तरेणेत्यर्थः । "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति विश्वः । वर्षं संवत्सरं भोग्येन "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । "अत्यन्तसंयोगे च" इति समासः । "कुमति च" इति णत्वम् । भर्त्तुः स्वामिनः शापेन अस्तं-गमितो महिमा सामर्थ्यं यस्य सः अस्तंगमितमहिमा । अस्तमिति मकारान्तमव्ययम्, तस्य "द्वितीया" इति योगविभागात् समासः । कश्चित् अनिर्द्दिष्टनामा यक्षो देवयोनिविशेषः, "विद्याधराप्सरोयक्षरक्षो-गन्धर्वकिन्नराः । पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥" इत्य-मरः । जनकतनयायाः सीतायाः स्नानैरवगाहनैः पुण्यानि पवित्राणि उदकानि येषु तेषु पावनेष्वित्यर्थः । छायाप्रधानास्तरवः छायातरवः शाकपार्थिवादित्वात् समासः । स्निग्धाः सान्द्राः छायातरवो नमेरुवृक्षा

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनक-वलय-भ्रंश-रिक्त-प्रकोष्ठः ।
आषाढ़स्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीड़ा-परिणत-गजप्रेक्षणीयं ददर्श ॥२॥

येषु तेषु वसतियोग्येष्वित्यर्थः । "स्निग्धन्तु मसृणे सान्द्रे" इति "छाया-वृक्षो नमेरुः स्यात्" इति च शब्दार्णवे । रामगिरेश्चित्रकूटस्य आश्रमेषु वसतिं "वहिवस्यर्त्तिभ्यश्च" इत्यौणादिकः अतिप्रत्ययः । चक्रे कृतवान् । अत्र रसो विप्रलम्भाख्यः शृङ्गारः, तत्रापि उन्मादावस्था, अतएव एकत्रानवस्थानं सूचितम् आश्रमेष्विति बहुवचनेन । सीतां प्रति रामस्य हनूमत्सन्देशं मनसि निधाय मेघसन्देशं कविः कृतवान् इत्याहुः । अत्र काव्ये सर्वत्र मन्दाक्रान्ता वृत्तम्—"मन्दाक्रान्ता जलधिषड़गैर्म्भौ नतौ ताद् गुरू चेत्" इति ॥१॥

हिन्दी—अपने अधिकारसे असावधान (अतएव) स्वामीके अभिशापसे एकवर्षतक (नारीभोगका) सामर्थ्यविहीन (अर्थात् यह अभिशाप सालतक जारी रहेगा) स्त्रीके भारीविरहसे बड़ा कातर कोई यक्ष, जनकपुत्रीके अवगाहनोंसे जहां पानी पवित्र है ऐसे निविड़ छायावाले वृक्षोंसे युक्त चित्रकूट पहाड़के आश्रममें निवास करता था ॥१॥

বাঙ্গালা—কোনও যক্ষ অনবধানতানিবন্ধন নিজের কর্ত্তব্যকার্য্য করিয়াছিলেন না বলিয়া, যক্ষাধিপতি কুবের তাঁহাকে অভিশাপ দেন যে, 'তুমি এক বৎসর পর্য্যন্ত স্থানান্তরে বাস কর।' প্রিয়তমার সহিত বিচ্ছেদ হওয়ায় এই অভিশাপ তাঁহার পক্ষে দুর্ব্বহ হইয়াছিল এবং এই অভিশাপেই তাঁহার সমস্ত ক্ষমতা নষ্ট হইয়াছিল। এই অবস্থায় সেই যক্ষ চিত্রকূট-

পর্ব্বতের আশ্রমে গিয়া বাস করিতে লাগিলেন। সেই আশ্রমের সন্নিহিত নদী ও হ্রদপ্রভৃতির জল সীতাদেবীর অবগাহনে পবিত্র হইয়াছিল এবং সে স্থানে নমেরুবৃক্ষসমূহ ঘনসন্নিবিষ্ট ছিল ॥১॥

**अन्वयः**—अबलाविप्रयुक्तः कनक-वलय-भ्रंश-रिक्त-प्रकोष्ठः कामी स (यक्षः) तस्मिन् अद्रौ कतिचित् मासान् नीत्वा आषाढ़स्य प्रथमदिवसे आश्लिष्टसानुं वप्रक्रीड़ा-परिणतगजप्रेक्षणीयं मेघं ददर्श ॥२॥

**चञ्चला**—तस्मिन्निति। अबलया प्रियतमया विप्रयुक्तो विरहितः, अतएव विरहात् कृशतया कनकवलययोः स्वर्णनिर्म्मितवलययुगलस्य भ्रंशेन पतनेन रिक्तौ शून्यौ प्रकोष्ठौ कफोणिद्वयादधोदेशौ यस्य सः, कामी कामुकः, स यक्षः, तस्मिन् अद्रौ चित्रकूटे पर्वते, कतिचित् कतिपयान् अष्टौ मासान् इत्यर्थः, नीत्वा अतिवाह्य आषाढ़स्य मासस्य प्रथमदिवसे, आश्लिष्टो लम्बमानैकदेशेन संस्पृष्टः सानुः समतलभागो येन तम्, अतएव च वप्रो मृत्तिकास्तूपस्तस्य क्रीड़ायाम् उत्तोलनात्मकखेलायां परिणतस्तिर्य्यग्भावेन दन्तप्रहारकारी यो गजो हस्ती तद्वत् प्रेक्षणीयं दर्शनीयम्, मेघं ददर्श।

अत्र वप्रक्रीड़ापरिणतगजप्रेक्षणीयतां प्रति आश्लिष्टसानुपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तच्च वप्रक्रीड़ेत्यादौ औपम्यवाचि-सामान्यधर्म्मयोर्लोपे लुप्तोपमां सम्पादयतीत्युभयोरङ्गाङ्गिभावेन सङ्करः; एवं कनक-वलय-भ्रंशं प्रति अबलाविप्रयुक्तपदस्यार्थो हेतुरित्यपरं काव्यलिङ्गम्, तेन च सह प्रदर्शितसङ्करस्यापि पुनः संसृष्टिः परस्पर-नैरपेक्ष्येणावस्थानात्। संसृष्टिसङ्कराभ्यामपि यथासम्भवं पुनः संसृष्टिसङ्करौ सम्भवत इति विवेचितमस्माभिः साहित्यदर्पणटीकायाम्।

तथा प्रेक्षणीयमिति ईक्षधातुना प्रक्रम्य ददर्शेति पुनर्दृशधातो-

रभिधानात् प्रकृतिविषयो भग्नप्रक्रमतादोषः । स च "वप्रक्रीड़ापरिणत-मिवानेकपं सन्ददर्श" इति पाठेन समाधेयः ॥२॥

सञ्जीवनी—तस्मिन्निति । तस्मिन्नद्रौ चित्रकूटाद्रौ, अबलाविप्रयुक्तः कान्ताविरही, कनकस्य वलयः कटकं "कटकं वलयोऽस्त्रियाम्" इत्यमरः । तस्य भ्रंशेन पातेन रिक्तः शून्यः प्रकोष्ठः कूर्परादधःप्रदेशो यस्य स तथोक्तः, "कक्षान्तरे प्रकोष्ठः स्यात् प्रकोष्ठः कूर्परादधः" इति शाश्वतः । विरहदुःखात् कृश इत्यर्थः । कामी कामुकः, स यक्षः, कतिचित् मासान् अष्टौ मासानित्यर्थः । "शेषान् मासान् गमय चतुरः" इति वक्ष्यमाणत्वात् । नीत्वा यापयित्वा, आषाढ़ानक्षत्रेण युक्ता पौर्णमासी आषाढ़ी, "नक्षत्रेण युक्तः कालः" इत्यण्, "टिड्ढाणञ्" इत्यादिना ङीप् । सा आषाढ़ी अस्मिन् पौर्णमासी इति आषाढ़ो मासः, "सास्मिन् पौर्णमासीति संज्ञायाम्" इत्यण् । तस्य प्रथमदिवसे, आश्लिष्टसानुम् आक्रान्ततटम्, वप्रक्रीड़ा उत्खातकेलयः, "उत्खात-केलिः क्रीड़ाद्यैर्वप्रक्रीड़ा निगद्यते" इति शब्दार्णवः । तासु परिणतः तिर्य्यग्दन्तप्रहारः "तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति हलायुधः । स चासौ गजश्च तमिव प्रेक्षणीयं दर्शनीयम्, मेघं ददर्श । गजप्रेक्षणीयमित्यत्र इवलोपात् लुप्तोपमा ।

केचित् "आषाढ़स्य प्रथमदिवसे" इत्यत्र "प्रत्यासन्ने नभसि" इति वक्ष्यमाणनभोमासप्रत्यासत्त्यर्थं "प्रशमदिवसे" इति पाठं कल्पयन्ति ; तदसङ्गतम्, प्रथमातिरेके कारणाभावात् । नभोमासस्य प्रत्यासत्त्यर्थ-मित्युक्तमिति चेत्, न ; प्रत्यासत्तिमात्रस्य मासप्रत्यासत्त्यैव प्रथम-दिवसस्याप्युपपत्तेः । अत्यन्तप्रत्यासत्तेरुपयोगाभावेनाविवक्षितत्वात् । विवक्षितत्वे वा स्वपक्षेऽपि प्रथमदिवसातिक्रमेण मेघदर्शनकल्पनायां प्रमाणाभावेन तदसम्भवात् । प्रत्युत, अस्मत्पक्ष एव कुशलसन्देशस्य

तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो:
अन्तर्वाष्पश्चिरमनुचरो राजराजस्य दध्यौ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥३॥

भाव्यनर्थप्रतीकारार्थस्य पुरत एवानुमानमुक्तं भवतीत्युपयोगसिद्धिः। ननु उन्मत्तस्य नायं विवेक इति चेत्, न; उन्मत्तस्य नानर्थस्य प्रतीकारार्थं प्रवृत्तिरपीति सन्देश एव माभूत् तथा च काव्यारम्भ एवाप्रसिद्धः स्यात्; इत्यहो मूलोच्छेदी पाण्डित्यप्रकर्षः। कथं तर्हि "शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ" इत्यादिना भगवत्प्रबोधावधिकस्य शापस्य मासचतुष्टयावशिष्टस्योक्तिः, दशदिवसाधिक्यादिति चेत्, स्वपचेऽपि कथं सा? किं प्रतिदिवसैकत्वानृत्वादिति सन्तोष्टव्यम्। तस्मात् ईषद्वैषम्यविवक्षितमिति सुष्ठूक्तम्—"प्रथमदिवसे" इति ॥२॥

हिन्दी—तिस पहाड़में स्त्रीविरहकातर सुवर्णवलयसे शून्यप्रकोष्ठ होकर (यानी विरहदुःखसे अत्यन्त कृश होकर) वह कामुक कितेक महीनोंको व्यतीत करके आषाढ़-मासके पहलादिनमें पर्व्वतका समभाग जिसने आच्छादित किया, ऐसे खननकी क्रीड़ाओं सो वक्रदांत मारनेवाला हस्तीसदृश दर्शनयोग्य (यानी अत्यन्त सुन्दर) मेघको देखा था ॥२॥

বাঙ্গালা—প্রিয়তমার বিরহে যক্ষের শরীর কৃশ হইয়া গিয়াছিল; সুতরাং হস্ত হইতে স্বর্ণবলয় পড়িয়া গিয়াছিল। এই অবস্থায় সেই কামুক যক্ষ, সেই চিত্রকূটপর্ব্বতে কয়েক মাস অতিবাহিত করিয়া, আষাঢ়-মাসের প্রথম দিন এক খণ্ড মেঘ দেখিয়াছিলেন; সেই মেঘখণ্ড পর্ব্বতের

(१) कौतकाधानहेतोरिति पाठान्तरम्।

সমতলভূমি স্পর্শ করিয়াছিল ; সুতরাং মৃত্তিকাস্তূপ উত্তোলনরূপ খেলায় প্রবৃত্ত হইয়া, তাহার ভিতরে তির্য্যক্‌ভাবে ( তেরচা করিয়া ) দন্তপ্রহারকারী হস্তীর ন্যায় সেই মেঘখণ্ডকে দেখা যাইতেছিল ॥২॥

**অন্বয়:**—राजराजस्य अनुचरः अन्तर्वाष्पः ( सन् ) कौतुकाधानहेतोः तस्य पुरः कथमपि स्थित्वा चिरं दध्यौ। मेघस्य आलोके सुखिनः अपि चेतः अन्यथावृत्तिः भवति, कण्ठाश्लेषप्रणयिनि जने दूरसंस्थे ( सति ) किं पुनः ( वक्तव्यमस्ति ) ॥३॥

**चञ्चला**—तस्येति। राजराजस्य कुवेरस्य अनुचरः स यक्षः, अन्तर्वाष्पः अन्तर्निरुद्धाश्रुजलः सन्, कौतुकाधानहेतोः कामोत्पादनकारणीभूतस्य, तस्य मेघस्य, पुरः अग्रे, कथमपि यत्नबाहुल्येन स्थित्वा, चिरं बहुकालं यावत्, दध्यौ चिन्तयामास। कथमेतदित्याह—मेघस्य आलोके दर्शने सति, सुखिनोऽपि प्रियजनसम्मेलनेन सुखशालिनोऽपि जनस्य, चेतश्चित्तम्, अन्यथा अस्थिरीभूता वृत्तिर्व्यापारो यस्य तत्तादृशं भवति, कण्ठाश्लेषप्रणयिनि कण्ठालिङ्गनाभिलाषिणि जने, दूरसंस्थे दूरदेशावस्थिते सति, किं पुनर्वक्तव्यमस्तीत्यर्थः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, स पुनः प्राकरणिकार्थादप्राकरणिकार्थापतनरूपया अर्थापत्त्या सङ्कीर्य्यते। तथा दध्याविति पदांशगतो दुःश्रवत्वदोषः, स च "अन्तर्वाष्पश्चिरमनुचरोऽचिन्तयद्यक्षराजः" इति पाठेन परिहार्य्यः ॥३॥

**सञ्जीवनी**—तस्येति। राजानो यक्षाः "राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः" इति विश्वः। राज्ञां राजा राजराजः कुवेरः "राजराजो धनाधिपः" इत्यमरः। "राजाहः सखिभ्यष्टच्" इति टच्-प्रत्ययः। तस्यानुचरो यक्षः, अन्तर्वाष्पो धीरोदात्तत्वादन्तःस्तम्भिताश्रुः सन्, कौतुकाधानहेतोः अभिलाषोत्पादनकारणस्य, "कौतुकञ्चाभिलाषे स्यादुत्सवे नर्म्महर्षयोः" इति विश्वः। तस्य मेघस्य पुरः अग्रे कथमपि

प्रत्यासन्ने नभसि दयिता जीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम्।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥४॥

---

गरीयसा प्रयत्नेनेत्यर्थः "ज्ञानहेतुविवक्षायामप्यादि कथमव्ययम्। कथमादि तथाप्यन्तं यत्नगौरववाढ़योः॥" इत्युज्ज्वलदत्तः। स्थित्वा चिरं दध्यौ चिन्तयामास। "ध्यै चिन्तायाम्" इति धातोर्लिट्। मनोविकारोपशमनपर्य्यन्तमिति शेषः। विकारहेतुमाह—मेघालोक इति। मेघालोके मेघदर्शने सति सुखिनोऽपि प्रियादिजनसङ्गतस्यापि चेतश्चित्तम्, अन्यथाभूता वृत्तिर्व्यापारो यस्य तदन्यथावृत्तिर्भवति विकृतिमापद्यत इत्यर्थः। कण्ठाश्लेषप्रणयिनि कण्ठालिङ्गनार्थिनि जने, दूरे संस्था स्थितिर्यस्य तस्मिन्, दूरसंस्थे सति, किं पुनः विरहिणः किमुत वक्तव्यमित्यर्थः। विरहिणां मेघदर्शनमुद्दीपनं भवतीति भावः। अर्थान्तरन्यासोऽलङ्कारः। तदुक्तं दण्डिना—"ज्ञेयः सोऽर्थान्तरन्यासो वस्तु-प्रस्तुत्य किञ्चन। तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः॥" इति ॥३॥

हिन्दी—अन्तरमें अश्रु रोध कर कुवेरका वह अनुचर अभिलाषोत्पादक तिसे मेघका आगे किसी प्रकारसे (अत्यन्त यत्नसे) खड़ा होके बहु समयतक चिन्ता किया था। (क्यों कि) मेघदर्शनसे सुखी मानवका भी चित्तविकृत होता है; (अतः) कण्ठालिङ्गनसे प्रणय देखाते हुये मनुष्य (स्त्री) अगर दूरमें हों; तो विरह मानवकी दशा क्या कहना है? ॥३॥

---

(४)……लम्बनार्थीम्……लम्बनार्थम्, इति पाठभेदौ। सम्प्रत्यग्रैरिति क्वचित् पाठः।

বাঙ্গালা—কুবেরের অনুচর সেই যক্ষ, কামোদ্দীপনার হেতু সেই মেঘের সম্মুখে অতি কষ্টে অবস্থান করিয়া, অন্তরেই অশ্রুজল নিরুদ্ধ রাখিয়া, বহুকাল যাবৎ চিন্তা করিলেন। কারণ—মেঘ দেখিলে সুখী-জনের চিত্তবৃত্তিও অন্যরূপ হইয়া যায়; আর যাহার কণ্ঠালিঙ্গনাভিলাষী প্রিয়জন দূরে অবস্থান করে, তাহার পক্ষে আর বলিবার কি আছে ॥৩॥

অন্বয়:—স: নভসি প্রত্যাসন্নে (সতি) দয়িতা জীবিতালম্বনার্থী (সন্) জীমূতেন স্বকুশলময়ীং প্রবৃত্তিং হারয়িষ্যন্ কুটজকুসুমৈ: কল্পিতার্ঘায় তস্মৈ প্রীতিপ্রমুখবচনং স্বাগতং প্রীত: (সন্) ব্যাজহার ॥৪॥

চঞ্চলা—প্রত্যাসন্ন ইতি। স যক্ষ:, নভসি শ্রাবণে মাসি প্রত্যাসন্নে বর্ত্তমানমাসাৎ পরমেব সন্নিহিতে সতি, দয়িতায়া: প্রিয়-ভার্য্যায়া: জীবিতালম্বনার্থী আত্মন: কুশলবার্ত্তাপ্রেরণেন জীবন-রক্ষণার্থী সন্, জীমূতেন প্রযোজ্যকর্ত্রা মেঘেন, স্বকুশলময়ীং নিজমঙ্গল-প্রধানাম্, প্রবৃত্তিং বার্ত্তাম্, হারয়িষ্যন্ প্রেরয়িষ্যন্, প্রত্যগ্রৈর্নূতনৈ:, কুটজ-কুসুমৈর্গিরিমল্লিকাপুষ্পৈ:, কল্পিত: কৃত: অর্ঘ: পূজাবিধির্যস্য তস্মৈ, তস্মৈ মেঘায়, প্রীতিপ্রমুখানি প্রীতিপূর্ব্বকাণি বচনানি বাক্যানি যস্মিন্ কর্ম্মণি তদ্যথা স্যাত্তথা, স্বাগতং সুখেনাগমনং সুখেন তব আগমনং কিমিতি বাক্যমিত্যর্থ:, প্রীত: স্বয়মপি সন্তুষ্ট: সন্, ব্যাজহার উক্তবান্।

অত্র প্রীত: প্রীতীতি ব্যঞ্জনসঙ্ঘস্য স্বরূপত: ক্রমতশ্চ সকৃৎ সাম্যাৎ ছেকানুপ্রাস: ॥৪॥

সঞ্জীবনী—অথ সমাহিতান্ত:করণ: সন্ কিং কৃতবানিত্যত আহ প্রত্যাসন্ন ইতি। স যক্ষ: যশ্চিরং দধ্যৌ স ইত্যর্থ:, নভসি শ্রাবণে "নভা: শ্রাবণিকশ্চ স:" ইত্যমর:। প্রত্যাসন্নে আষাঢ়স্যানন্তরং

सन्निकृष्टे प्राप्ते सतीत्यर्थः, दयिता जीवितालम्बनार्थी सन्, वर्षाकालस्य विरहदुःखजनकत्वात् उत्पन्नानर्थप्रतीकारात् अनर्थोत्पत्तिप्रतिबन्ध एव वरमिति न्यायेन प्रागेव प्रियाप्राणधारणोपायं चिकीर्षुरित्यर्थः। जीवनस्य उदकस्य मूतः पटबन्धो वस्त्रबन्धो जीमूतः पृषोदरादित्वात् साधुः। "मूतः स्यात् पटबन्धेऽपि" इति रुद्रः। तेन जीमूतेन जलधरेण प्रयोज्येन, स्वकुशलमयीं स्वक्षेमप्रधानां प्रवृत्तिं वार्त्ताम्, "वार्त्ता प्रवृत्ति-र्वृत्तान्तः" इत्यमरः। हारयिष्यन् प्रापयिष्यन्, "लृट् शेषे च" इति चकारात् क्रियार्थक्रियोपपदात् लृट् प्रत्ययः। जीवनार्थं कर्म्म जीवनप्रदेनैव कर्त्तव्यमिति भावः। "हृक्रोरन्यतरस्याम्" इति कर्म्मसंज्ञाया विकल्पात् पक्षे कर्त्तरि तृतीया। प्रत्यग्रैरभिनवैः, कुटजकुसुमैर्गिरिमल्लिकाभिः, "कुटजो गिरिमल्लिका" इति हलायुधः। कल्पितार्घाय कल्पितः अर्घः पूजाविधिर्यस्य तस्मै, "मूल्ये पूजाविधावर्घः" इत्यमरः। तस्मै जीमूताय, "क्रियाग्रहणमपि कर्त्तव्यम्" इति सम्प्रदानत्वाच्चतुर्थी। प्रीतिप्रमुखानि प्रीतिपूर्व्वकाणि वचनानि यस्मिन् कर्म्मणि तत् प्रीतिप्रमुखवचनं यथा तथा, शोभनमागतं स्वागतं स्वागतवचनं प्रीतः सन्, व्याजहार कुशलागमनं पप्रच्छेत्यर्थः। नाथेन त्वल "प्रत्यासन्ने मनसि" इति साधीयान् पाठः कल्पितः, प्रत्यासन्ने प्रकृतिमापन्ने सतीत्यर्थः। यस्तु तेनैव पूर्वपाठविरोधः प्रदर्शितः, सोऽस्माभिः "आषाढ़स्य प्रथमदिवसे" इत्येतत्पाठविप्लवसमाधानेनैव परिहृतः ॥४॥

हिन्दी—अपनी स्त्रीके प्राणका रक्षणेच्छुक वह यक्ष (आषाढ़महीनेके) समीपवर्त्ती श्रावणमास में अपनी शुभमयी वार्त्ता को ज्ञात करवाता हुआ आनन्दित हुआ। नवीन गिरिमल्लिका पुष्पों से पूजाविधि कल्पित है जिसका, ऐसे जलदके उपर प्रीतिपुरःसर स्वागतकी "आपका आगमन शुभदायी है" एवं पूछा था ॥४॥

বাঙ্গালা—সেই যক্ষ, নিকটবর্ত্তী শ্রাবণমাসে বিরহিণী প্রিয়তমার

**धूम-ज्योतिः-सलिल-मरुतां सन्निपातः क्व मेघः,**
**सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।**
**इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे**
**कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥५॥**

প্রাণ রক্ষা করিবার নিমিত্ত, তাহারই নিকট মেঘদ্বারা নিজের মঙ্গলসংবাদ পাঠাইবেন বলিয়া, নূতন কুড়চি ফুল দিয়া মেঘের পূজা করিলেন এবং সন্তুষ্টচিত্তে প্রণয়সূচকবাক্যে তাঁহাকে জিজ্ঞাসা করিলেন—"আপনার শুভাগমন ত ?" ॥৪॥

**अन्वयः**—धूम-ज्योतिः-सलिल-मरुतां सन्निपातः मेघः क्व ? पटुकरणैः प्राणिभिः प्रापणीया सन्देशार्थाः (च) क्व ? इत्यौत्सुक्यात् अपरिगणयन् गुह्यकः तं ययाचे । हि कामार्त्ता चेतनाचेतनेषु प्रकृतिकृपणाः ( भवन्ति ) ॥५॥

**चञ्चला**—धूमेति । धूमः अग्निसंयोगादार्द्रेन्धनप्रभवः पदार्थविशेषः, ज्योतिस्तेजः, सलिलं जलं मरुत् वायुश्च एतेषां सन्निपातः समष्टिरूपो मेघः क्व कुत्र, तथा पटूनि स्वस्वकार्य्यक्षमाणि करणानि इन्द्रियाणि येषां तैस्तादृशैः, प्राणिभिश्चेतनपदार्थैः, प्रापणीयाः प्रेरणीयाः, सन्देशार्थाः संवादविषयाश्च क्व कुत्र । मेघेन संवादप्रेरणमतीवासम्भवमिति भावः । इति एवम्, औत्सुक्यादुत्कण्ठिततया आग्रहातिरेकादित्यर्थः, अपरिगणयन् अविचारयन्, गुह्यको यक्षः, तं मेघं ययाचे स्वप्रियतमान्तिके गमनं प्रार्थितवान् । हि तथाहि, कामार्त्ता जनाः, चेतना अचेतनाश्च पदार्थास्तेषु विषये प्रकृत्या स्वभावेनैव कृपणाः क्षुद्राः निरूपणासमर्था इत्यर्थः । कामार्त्तानां सम्भवासम्भवविवेचनाभावादचेतनान्तिके प्रार्थनापि सम्भवत्येवेति भावः ।

अत्र पूर्व्वार्द्धे विरूपयोः सङ्घटनया विषमोऽलङ्कारः, चतुर्थपादे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः। तथा गुह्यकपदस्यैकदेशेन गुह्यशब्देन भग-लिङ्गोभयबोधकतया "पाणिः पल्लवपेलवः" इत्यादिवत् पदांशगतो व्रीडाव्यञ्जकोऽश्लीलतादोषः ; स च "तं ययाचे स यक्षः" इति पाठेन परिहार्य्यः ॥५॥

सञ्जीवनी—ननु चेतनसाध्यमर्थं कथमचेतनेन कारयितुं प्रवृत्त इत्यपेक्षायां कविः समाधत्ते धूमेति। धूमश्च ज्योतिश्च सलिलञ्च मरुद्वायुश्च तेषां सन्निपातः संघातो मेघः क्व, अचेतनत्वात् सन्देशानर्ह इत्यर्थः। पटुकरणैः समर्थैन्द्रियैः, "करणं साधकतमं चेत्रगात्रेन्द्रियेष्वपि" इत्यमरः। प्राणिभिश्चेतनैः, "प्राणी तु चेतनो जन्मी" इत्यमरः। प्रापणीयाः प्रापयितव्याः, सन्दिश्यन्त इति सन्देशाः त एव अर्थाः क्व, इत्येवम् औत्सुक्यात् इष्टार्थोद्युक्तत्वात्, "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः। अपरिगणयन् अविचारयन्, गुह्यको यक्षः तं मेघं ययाचे याचितवान्। तथाहि कामार्त्ता मदनातुराः, चेतनाश्च अचेतनाश्च तेषु विषये प्रकृति-कृपणाः स्वभावदीनाः ; कामान्धानां युक्तायुक्तविवेकशून्यत्वादचेतन-याच्ञा न विरुध्यत इत्यर्थः। अत्र मेघसन्देशयोर्विरूपयोर्घटनात् विषमालङ्कारः। तदुक्तम्—"विरुद्धकार्य्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत्। विरूपघटना चासौ विषमालङ्कृतिस्त्रिधा॥" इति। सा च अर्थान्तर-न्यासानुप्राणिता, तत्समर्थकत्वेनैव चतुर्थपादे तस्योपन्यासात् ॥५॥

हिन्दी—कहां धूम, ज्योतिः, सलिल और वायु इनके समूह मेघ? और कहां समर्थ-इन्द्रियवाले प्राणियोंके द्वारा पहुँचाने लायक समाचार? एवंप्रकार वाक्य स्वकार्य्यमें अत्यन्त उत्सुक होनेसे अविचारता हुआ वह यक्ष, तिस मेघके पास प्रार्थना किया था। (क्यों कि) कामार्त्त मनुष्यके चेतन या अचेतन वस्तुयों से विवेक नहीं रहता ॥५॥

जातं वंशे भुवनविदिते पुष्करावर्त्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे, नाधमे लब्धकामा ॥६॥

বাঙ্গালা—ধূম, তেজ, জল এবং বায়ু এই কয়টী পদার্থের সমষ্টিরূপ মেঘই বা কোথায়? আর যাহাদের ইন্দ্রিয়গুলি স্ব স্ব কার্য্য করিতে সক্ষম এইরূপ প্রাণিগণদ্বারা প্রেরণীয় বৃত্তান্তই বা কোথায়? উৎকণ্ঠা-বশতঃ যক্ষ, ইহা বিবেচনা না করিয়া মেঘের নিকট নিজের দৌত্য করিবার প্রার্থনা করিয়াছিলেন। কারণ—কামার্ত্ত ব্যক্তিগণ চেতন বা অচেতন পদার্থ নিরূপণ করিতে স্বভাবতই অসমর্থ হইয়া থাকে ॥৫॥

अन्वयः—त्वां भुवनविदिते पुष्करावर्त्तकानां वंशे जातं कामरूपं मघोनः प्रकृतिपुरुषं जानामि तेन विधिवशात् दूरबन्धुः, अहं त्वयि अर्थित्वं गतः अधिगुणे याञ्चा मोघा (अपि) वरं अधमे लब्धकामा (अपि) न ॥६॥

चञ्चला—जातमिति । हे मेघ ! त्वां भुवनविदिते जगद्विख्याते, पुष्करावर्त्तकानां तदाख्यानां श्रेष्ठमेघविशेषाणां वंशे जातम् उच्चकुल-सम्भूतमित्यर्थः, कामरूपं यथेप्सितशरीरधारणसमर्थम्, मघोन इन्द्रस्य, प्रकृतिपुरुषं प्रधानपुरुषं प्रधानकार्य्यकारिणमित्यर्थः, जानामि ; तेन उच्चकुलसम्भूतत्वादिना हेतुना, विधिवशात् दैवाधीनत्वात्, दूरे बन्धुः प्रियतमा यस्य स तादृशोऽहम्, त्वयि अर्थित्वं याचकत्वम्, गतः प्राप्तः । ननु याच्ञायां मम गुणातिरेकोदाहरणस्य किं प्रयोजनमित्याह याच्ञेति । तथा च अधिगुणे अधिकगुणशालिनि जने, याच्ञा प्रार्थना, मोघा व्यर्थापि सती वरम् ईषत्प्रिया ; किन्तु अधमे निर्गुणे

जने लब्धकामा प्राप्तफलापि सती न वरमित्यन्वयः। अतोऽधिकगुण-शालिनस्तव समीपे याच्ञाभङ्गेऽपि न मे लाघवदोषाशङ्का इत्येतदेव तव गुणातिरेकोदाहरणस्य प्रयोजनमिति भावः।

अत्र मेघस्य प्राधान्यं प्रति पुष्करावर्त्तकवंशजातत्वरूपे एकस्मिन् कारणे सत्यपि कामरूपत्व-देवेन्द्रप्रधानपुरुषत्वरूपकारणान्तरद्वयोपन्यासात् समुच्चयः, मेघं प्रति यक्षस्य रतिभावः, प्रकृतविप्रलम्भशृङ्गारस्याङ्गमिति प्रेयः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः। तथा 'मोघापि' 'लब्धकामापि' इत्यमपिशब्दद्वयमवश्यं वक्तव्यम्, किन्तु नोक्तमिति वाच्यानभिधानाख्य-दोषद्वयम्, एवं मोघेत्यभिधाय लब्धकामेत्यभिधानेन अधिगुण इत्यभिधाय अधम इत्यभिधानेन च क्रमभेदाद्भग्नप्रक्रमतादोषद्वयञ्चेति चत्वार एव दोषाः। ते च "याच्ञा व्यर्थाऽप्युपगुणि वरं नागुणे सार्थिकापि" इति पाठेन समाधेयः। किन्तु "नाधमे लब्धकामा" "नागुणे सार्थिकापि" इत्युभयपाठेऽपि भेदबोधकस्य तुशब्दस्य किन्तुशब्दस्य वा पाठाभावेऽपि सामर्थ्यादेवावगतिरिति न वाच्यानभिधानाख्यदोषान्तरम्, "क्वचिन्न दोषो न गुणः" इति दर्पणोक्तेः समानन्यायादिति सुधीभिर्विभावनीयम् ॥६॥

सञ्जीवनी—सम्प्रति याच्ञाप्रकारमाह जातमिति। हे मेघ! त्वां भुवनेषु विदिते भुवनविदिते, "निष्ठा" इति भूतार्थे क्तः "मतिबुद्धि-" इत्यादिना वर्त्तमानार्थत्वेऽपि "क्तस्य च वर्त्तमाने" इति भुवनशब्दस्य षष्ठ्यन्ततानियमात् समासो न स्यात्, "क्तेन च पूजायाम्" इति निषेधात्। पुष्कराश्च आवर्त्तकाश्च केचित् मेघानां श्रेष्ठाः तेषां वंशे जातं महाकुलप्रसूतमित्यर्थः कामरूपम् इच्छाधीनविग्रहं दुर्गादिसञ्चार-क्षममित्यर्थः मघोन इन्द्रस्य प्रकृतिपुरुषं प्रधानपुरुषं जानामि; तेन

महाकुलप्रसूतत्वादिगुणयोगित्वेन हेतुना, विधिवशात् दैवायत्तत्वात्, "विधिर्विधाने दैवे च" इत्यमरः। "वशमायत्ते वशमिच्छाप्रभुत्वयोः" इति विश्वः। दूरे बन्धुर्यस्य स दूरबन्धुः वियुक्तभार्य्योऽहं त्वयि अर्थित्वं गतः। ननु याचकस्य याच्ञायां याच्यगुणोत्कर्षः कुत उपयुज्यत इत्याशङ्क्य दैवात् याच्ञाभङ्गेऽपि लाघवदोषाभाव एवोपयोग इत्याह याच्ञेति। तथाहि अधिगुणे अधिकगुणे पुंसि विषये याच्ञा मोघा निष्फलापि वरम् ईषत्प्रियम्। दातुर्गुणाढ्यत्वात् प्रियत्वं याच्ञावैफल्यादीषत्प्रियत्वमिति भावः। अधमे निर्गुणे याच्ञा लब्धकामापि सफलापि न वरम् ईषत्प्रियमपि न भवतीत्यर्थः। "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक् प्रिये" इत्यमरः। अर्थान्तर-न्यासानुप्राणितः प्रेयोऽलङ्कारः। तदुक्तं दण्डिना—"प्रेयः प्रियतराख्यानम्" इति। एतदाद्यपादत्रये चतुर्थपादस्थेन अर्थान्तरन्यासेनोपजीवितमिति सुव्यक्तमेतत् ॥६॥

**हिन्दी**—दुनिया में प्रसिद्ध पुष्करावर्त्त नामधेय मेघके कुल में जन्म लिये (और) इन्द्रके प्रधान पुरुष, (और) सङ्कल्पानुसार रूप धारण करनेवाले, तुमको मैं जानता हूं; इसवास्ते विधिके प्रभुत्वानुसार से दूरीभूतबन्धु, मैं तुम्हारे पास याचकत्व प्राप्त हुआ। (क्योंकि) अधिकगुणशालियों के नजदीक प्रार्थना विफल भी अच्छी है; परन्तु नीचोंके पास कोइजी प्रार्थना सफल भी इजी तो भी अच्छी नहीं ॥६॥

**বাঙ্গালা**—হে মেঘ! তুমি পুষ্করাবর্ত্তকনামক মেঘগণের জগদ্বিখ্যাত বংশে জন্মিয়াছ, ইচ্ছানুসারে রূপ ধারণ করিতে পার এবং ইন্দ্রের প্রধান কর্ম্মচারী ইহা আমি জানি; সেই জন্যই আমি ভাগ্যবশতঃ প্রিয়াবিচ্ছিন্ন হইয়া তোমার নিকট প্রার্থী হইয়াছি। কারণ—গুণবানের নিকট প্রার্থনা বিফল হওয়াও ভাল; কিন্তু নির্গুণের নিকট প্রার্থনা সফল হওয়াও ভাল নহে ॥৬॥

सन्तप्तानां त्वमसि शरणं तत् पयोद ! प्रियायाः
सन्देशं मे हर धनपति-क्रोध-विश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
वाह्योद्यान-स्थित-हर-शिरश्चन्द्रिकाधौतहर्म्म्या ॥७॥

अन्वयः—(हे) पयोद ! त्वं सन्तप्तानां शरणम् असि, तत् धनपतिः-क्रोध-विश्लेषितस्य मे सन्देशं प्रियायाः हर । व्याह्योद्यान-स्थित-हर-शिर-चन्द्रिका-धौत-हर्म्म्या अलका नाम वसतिः ते गन्तव्या ॥७॥

चञ्चला—सन्तप्तानामिति । हे पयोद ! मेघ ! त्वम्, सन्तप्तानां ग्रीष्मेण विरहेण च सम्यक्तापप्राप्तानां जनानां सम्बन्धे, शरणं रक्षकोऽसि, वृष्टिकरणात् संयोगकरणाच्चेति भावः । तत् तस्मात् हेतोः, धनपतेः कुवेरस्य क्रोधेन विश्लेषितस्य प्रियया वियोजितस्य, मे मम सन्देशं वृत्तान्तम्, मम प्रियायाः समीपे इत्यर्थः, हर नय । ननु प्रियायै तव वृत्तान्तप्रदानाय मया कुत्र गन्तव्यम्? तत् स्थानञ्च कुतः परिचेतव्यमित्याह—गन्तव्येति । वाह्ये पुराद्बहिर्देशवर्त्तिनि, उद्याने उपवने स्थितस्य हरस्य महादेवस्य, शिरसि या चन्द्रिका चन्द्रीय-ज्योत्स्ना तया धौतानि परिष्कृतानि हर्म्म्याणि धनिगृहाणि यस्यां सा । एतेनालकायाः परिचयसौकर्य्यं सूचितम् । अलका नाम यक्षेश्वराणां यक्षश्रेष्ठानां वसतिर्वासस्थानं ते तव गन्तव्या ।

अत्र तृतीयचरणेनैव वाक्ये समाप्तेऽपि पुनस्तदन्तर्गतस्य वसति-रित्यस्य विशेषणतया चतुर्थचरणोपादानात् समाप्तपुनरात्तता दोषः । स च चतुर्थचरणं तृतीयस्थाने तृतीयचरणञ्च चतुर्थस्थाने पठित्वा समाधेयः ॥७॥

सञ्जीवनी—सन्तप्तानामिति। हे पयोद! त्वं सन्तप्तानाम् आतपेन प्रवासविरहेण वा संज्वरितानाम्, "सन्तापः संज्वरः समौ" इत्यमरः। शरणं पयोदानेन आतपखिन्नानां प्रोषितानां स्वस्थान-प्रेरणया च रक्षकोऽसि, "शरणं गृहरक्षित्रोः" इत्यमरः। तत् तस्मात् कारणात्, धनपतेः कुवेरस्य क्रोधेन विश्लेषितस्य प्रियया वियोजितस्य, मे मम सन्देशं वार्त्तां प्रियायाः हर प्रियां प्रति नयेत्यर्थः। सम्बन्ध-सामान्ये षष्ठी। सन्देशहरणेनावयोः सन्तापं नुदेत्यर्थः। कुत्र स्थाने सा स्थिता, तत्स्थानस्य वा किं व्यावर्त्तकं तत्राह गन्तव्येति। वहिर्भवं वाह्यम्, "वहिर्देवपञ्चजनेभ्यश्च" इति यञ्। वाह्ये उद्याने स्थितस्य हरस्य शिरसि या चन्द्रिका तया धौतानि निर्म्मलानि हर्म्याणि धनिकभवनानि यस्यां सा तथोक्ता, "हर्म्यादि धनिनां वासः" इत्यमरः। अनेन व्यावर्त्तकमुक्तम्। अलका नाम अलकेति प्रसिद्धा यक्षेश्वराणां वसतिः स्थानं ते तव गन्तव्या त्वया गन्तव्या इत्यर्थः। "कृत्यानां कर्त्तरि वा" इति षष्ठी ॥७॥

हिन्दी—हे जलद! अनुतापियों का तुम शरण हो; इसि लिये कुवेरके गुस्सासे वियोजित मेरी वार्त्ता (मेरी) स्त्रीको प्राप्त करो। (तेरी औरतको मकान कहा है—यह वतलाते है) वाहरकी वगीचामे वर्त्तमान महादेवके शिरकी चांदनी से धनियोंका मकल सफेद हो रहे है, जिसमें ऐसी यक्षेश्वर कुवेरकी राजधानी अलकामें जाना ठिक है ॥७॥

বাঙ্গালা—হে মেঘ! গ্রীষ্মে ও বিরহে সন্তপ্ত ব্যক্তিদিগের তুমিই রক্ষক। আমিও কুবেরের কোপবশতঃ প্রিয়তমার বিরহে সন্তপ্ত হইয়াছি। অতএব তুমি আমার সংবাদ প্রিয়তমার নিকট লইয়া যাও। সেই জন্য, তোমাকে শ্রেষ্ঠ যক্ষদিগের বাসস্থান অলকানগরীতে যাইতে

त्वामारूढ़ं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसत्यः ।
कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥८॥

হইবে, বাহিরের উদ্যানবর্ত্তী চন্দ্রশেখর মহাদেবের মস্তকস্থিত জ্যোৎস্নার আলোকে যে অলকার অট্টালিকাসমূহ আরও পরিষ্কৃত হইয়া থাকে ॥৭॥

अन्वयः—पथिकवनिताः प्रत्ययात् आश्वसत्यः उद्गृहीतालकान्ताः ( च सत्यः ) पवनपदवीं आरूढ़ं त्वां प्रेक्षिष्यन्ते । त्वयि सन्नद्धे ( सति ) कः विरहविधुरां जायां उपेक्षेत । अन्यः अपि यः अहम् इव पराधीनवृत्तिः न स्यात् ॥८॥

चञ्चला—त्वामिति । पथिकवनिताः प्रोषितभर्त्तृकाः स्त्रियः, प्रत्ययात् तवोत्थानदर्शनेन प्रियतमागमनविश्वासात्, आश्वसत्य आश्वस्तचित्ताः सत्यः, उद्गृहीता उत्सार्य्य धृताः अलकान्ताः स्खलितकेशप्रान्तदेशा याभिस्तास्तादृश्यश्च सत्यः, पवनपदवीं वायुपथम् आकाशमित्यर्थः, आरूढ़ं त्वां प्रेक्षिष्यन्ते सोत्कण्ठमवलोकयिष्यन्ति । ननु ममोत्थानदर्शने कथं तासां प्रियतमागमनविश्वास इत्याह क इति । त्वयि सन्नद्धे उत्थिते सति, को जनः, विरहेण विधुरां विह्वलाम्, जायां भार्य्याम्, उपेक्षेत परित्यज्य देशान्तरे तिष्ठेत् ? अपि तु कोऽपि नेत्यर्थः । ननु सर्व एव प्रवासी जनः किं ममोत्थाने जायान्तिकं यातुमर्हतीत्याह नेति । अन्योऽपि यो जनः अहमिव पराधीना वृत्तिर्जीवनं यस्य स तादृशो न स्यात् । स्वाधीनजीवन एव जायां यायादिति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, स चार्थापत्त्या सङ्कीर्य्यते । तथा चतुर्थचरणे अन्यो जनः स्यात् अहन्तु स्यामिति

पुरुषभेदात् "लतेव राजसे तन्वि !" इत्यादिवद्भग्नप्रक्रमतादोषः । स तु "अन्याधीना न भवति पुनर्यस्य वृत्तिर्ममेव" इति पाठेन परिहार्य्यः ॥८॥

सञ्जीवनी—मदर्थं प्रस्थितस्य ते पथिकाङ्गनाजनाश्वासनमानुषङ्गिकं फलमित्याह त्वामिति । पवनपदवीमाकाशम्, आरूढं त्वाम्, पन्थानं गच्छन्ति ये ते पथिकाः, "पथः ष्कन्" इति ष्कन्प्रत्ययः । तेषां वनिताः प्रोषितभर्त्तृकाः, प्रत्ययात् प्रियागमनविश्वासात्, "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । आश्वसत्यो विश्वसिताः श्वसिधातोः शत्रन्तात् "उगितश्च" इति ङीप् । तथा उद्गृहीतालकान्ता दृष्टिप्रसाराय मुखमध्य ऊर्द्ध्वं धृतालकाग्राः सत्यः प्रेक्षिष्यन्ते अत्युत्कण्ठतया द्रक्ष्यन्तीत्यर्थः । तथाहि मदागमनेन पथिकाः कथमागमिष्यन्ति इत्यत्राह—त्वयि सन्नद्धे व्यापृते सति, विरहेण विधुरां विवशाम्, जायाम्, क उपेक्षेत न कोऽपीत्यर्थः । अन्योऽपि मद्व्यतिरिक्तोऽपि यो जनः, अहमिव पराधीनवृत्तिः परायत्तजीवनको न स्यात् । स्वतन्त्रस्तु न कोऽपि उपेक्षेतेति भावः । अर्थान्तरन्यासोऽलङ्कारः । तदुक्तम्—"कार्य्यकारणसामान्यविशेषाणां परस्परम् । समर्थनं यत्र सोऽर्थान्तरन्यास उदाहृतः ॥" इति लक्षणात् ॥८॥

हिन्दी—( हे जलद ! ) आकाश प्राप्त हुये तुमको परदेशमें गये हुये मनुष्योंकि औरतें अपने स्वामीके आगमनमें विश्वसित हो कर ( तात्पर्य यह है मेघ) विरहीके विरहोद्दीपक है, जब वे मेघ देखते हैं तबही घर लौटते हैं ) और केश उपर फैलाये हुए देखेंगी । ( क्योंकि ) कौन तुम्हारे सामने ( व्याप्तावस्थामें ) अपनी विरहकातर औरतको त्याग करता है ; जो कि पराधीन मेरे माफिक नहीं है ( न स्यात् मत हो ) ॥८॥

বাঙ্গালা—হে মেঘ ! তুমি আকাশে উঠিলে, বিরহিণী রমণীগণ, প্রিয়তমের আগমনবিশ্বাসে আশ্বস্তচিত্ত হইয়া, স্খলিত-কেশকলাপের

**मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां**
**वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।**
**गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः**
**सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥९॥**

---

প্রান্তভাগ অপসারণপূর্ব্বক ধারণ করিয়া, তোমাকে দর্শন করিবে। কারণ, তুমি উদিত হইলে, আমারই তুল্য অন্য যে ব্যক্তি পরাধীন নহে, সেরূপ কোন্ ব্যক্তি বিরহবিহ্বলা প্রিয়তমাকে উপেক্ষা করিয়া থাকে ? ॥৮॥

**अन्वयः**—अनुकूलः पवनः यथा त्वां मन्दं मन्दं नुदति, सगन्धः चातकः ते वामः (सन्) मधुरं नदति। गर्भाधानक्षणपरिचयाः खे आबद्धमालाः बलाकाः नयनसुभगं भवन्तं नूनं सेविष्यन्ते ॥९॥

**चञ्चला**—मन्दमिति। अनुकूलः पृष्ठवर्त्ती पवनो वायुः, यथा याट्टशम्, त्वां मन्दं मन्दमल्पमल्पं नुदति चालयति ; यथा च सगन्धः सगर्वः मदमत्त इत्यर्थः, अयं चातकः पक्षी, ते तव वामो वामदिग्वर्त्ती सन्, मधुरं नदति शब्दायते ; तथैव गर्भाधानेन गर्भधारणेन यः क्षणः उत्सवस्तस्य परिचयात् अभ्यासात् पौनःपुन्येनानुभवादित्यर्थः, खे आकाशे आबद्धमालाः श्रेणीभावापन्नाः, बलाका बकपक्षिण्यः, नयनसुभगं नयनप्रीतिकरं भवन्तम्, नूनं निश्चितम्, सेविष्यन्ते पक्षपवनेन शुश्रूषिष्यन्ते। अनुकूलो वायुः, वामतो मधुरः पक्षिरवश्च शुभसूचकाविति बलाकाभ्यो भवतः सेवालाभरूपं शुभमवश्यम्भावीत्यनुमीयत इति भावः।

---

(९) अत्र 'चातकस्ते सगर्वः' 'चातकस्तोयगृध्नुः' 'गर्भाधानक्षमपरिचयम्' 'गर्भाधानस्थिरपरिचयम्' इत्येते पाठभेदाः।

तथा च शाकुनशास्त्रम्—"वामे मधुरवाक् पक्षी वृक्षः पल्लवितोऽग्रतः ।
अनुकूलो वहन् वायुः प्रयाणे शुभशंसिनः ॥"

अत्र शुभसूचनकार्य्यं प्रति अनुकूलपवनरूपे एकस्मिन् कारणे सत्यपि वामदिग्वर्त्तिनश्चातकस्य मधुरनदनरूपकारणान्तरोपन्यासात् समुच्चयः, तत्कृतविच्छित्तिवशाच्च तादृशशुभसूचनद्वारेण बलाकाकर्तृकसेवनजन्य-भाविसुखफलात्मकसाध्यस्य ज्ञानादनुमानालङ्कारः । तथा पूर्ववाक्ये यथाशब्दमुल्लिख्य परवाक्ये आकाङ्क्षितस्य तथाशब्दस्य अनुल्लिखितत्वात् न्यूनपदत्वदोषः । न च "यत्तदोर्नित्यः सम्बन्धः" इति न्यायेन तथा-शब्दस्य अवश्यं प्रतीतिरिति न न्यूनपदत्वमिति वाच्यम्, "यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा" इति दर्पणोदाहरणेऽपि कर्त्तारं विना क्रियाया असम्भवेन कर्त्तुरवश्यमेव प्रतीतेर्न्यूनपदत्वदोषाभावप्रसङ्गात् । उत्तरवाक्यस्थितस्यैव यच्छब्दस्य तच्छब्दनिराकाङ्क्षतया न दोषः । यथा—"आत्मा जानाति, यत् पापम्" इति सुधीभिर्भाव्यम् । इत्यस्य "खे तथा त्वां बलाकाः" इति पाठेनैवासौ दोषः समाधेयः ॥९॥

सञ्जीवनी—निमित्तान्यपि ते शुभानि दृश्यन्ते—इत्याह मन्दं मन्दमिति । अनुकूलः पवनो वायुः, त्वां मन्दं मन्दम् अतिमन्दमित्यर्थः । अत्र कथञ्चित् वीप्सायामेव द्विरुक्तिर्निर्वाह्या ; "प्रकारे गुणवचनस्य" इत्येतदाश्रयणे तु कर्म्मधारयवद्भावे सुब्लुकि मन्दमन्दमिति स्यात् । तदेवाह वामनः—"मन्दमन्दमित्यत्र प्रकारार्थे द्विर्भावः" इति । यथा सदृशं भाविफलानुरूपमित्यर्थः । "यथा सादृश्ययोग्यत्ववीप्सास्वार्था-नतिक्रमे" इति यादवः । नुदति प्रेरयति । अयं सगन्धः सगर्व्वः सम्बन्धीति केचित् "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्व्वयोः" इत्युभयत्रापि विश्वः । ते तव वामो वामभागस्थः, "वामस्तु वक्रे रम्ये स्यात् सव्ये

तांश्चावश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥१०॥

वामगतेऽपि च" इति शब्दार्णवः। चातकः पक्षिविशेषश्च मधुरं श्राव्यं नदति व्याहरति। इदं निमित्तद्वयं वर्त्तते, वर्त्तिष्यते चापरं निमित्तमित्याह गर्भेति। गर्भः कुक्षिस्थो जन्तुः, "गर्भोऽपकारके ह्यग्नौ सुते पनसकण्टके। कुक्षौ कुक्षिस्थजन्तौ च" इति यादवः। तस्य आधानमुत्पादनं तदेव क्षणः उत्सवः सुखहेतुत्वादिति भावः। "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः। तस्मिन् परिचयादभ्यासात् हेतोः खे व्योम्नि, आबद्धमाला गर्भाधानसुखार्थं त्वत्समीपे बद्धपङ्क्तय इत्यर्थः। उक्तञ्च कर्णोदये—"गर्भं बलाका दधतेऽभ्रयोगात् नाके निबद्धावलयः समन्तात्" इति। बलाका बलाकाङ्गनाः, नयनसुभगं दृष्टिप्रियम्, भवन्तम्, नूनं सत्यम्, सेविष्यन्ते। अनुकूलमारुत-चातक-शब्दित-बलाकादर्शनानां शुभसूचकत्वं शाकुनशास्त्रे दृष्टम्, तद्विस्तरभयान्नालेखि ॥९॥

हिन्दी—अनुकूल पवनी तुमको मन्द मन्द भाविफलानुरूप प्रेरती है ; और यह तेरा गर्वित चातक बांई तरफ मधुर बोलता है। गर्भाधानके उत्सव अनुभव से आकाश में पंक्तिबद्ध बकों की औरतें दृष्टिप्रिय तुमको अवश्य सेवेंगी ॥९॥

(१०) 'अवहितगतिः' इति पाठान्तरम्। एकादशस्थाने दशमश्लोकस्य दशमस्थाने च एकादशश्लोकस्य पाठो युक्त इति विद्यासागराः। अन्ये तु वक्तुर्विरहवैकल्यं द्योतयितुमेव कविना व्युत्क्रमो दर्शित इत्याहुः।

বাঙ্গালা—হে মেঘ! অনুকূল বায়ু যেমন তোমাকে অল্প অল্প সঞ্চালিত করিতেছে এবং মদমত্ত চাতকপক্ষী তোমার বামদিকে থাকিয়া যেমন মধুর রব করিতেছে; তেমনই বকপক্ষিণীগণ গর্ভধারণের আনন্দ অনুভববশতঃ আকাশে শ্রেণীবদ্ধ হইয়া নয়নপ্রীতিকররূপী তোমার নিশ্চয়ই সেবা করিবে ॥৯॥

अन्वय:—अविहतगतिः दिवसगणनातत्पराम् एकपत्नीम् अव्यापन्नां भ्रातृजायां ताम् अवश्यं द्रक्ष्यसि, हि आशाबन्धः प्रणयि कुसुमसदृशं विप्रयोगे सद्यःपाति अङ्गनानां हृदयं प्रायशः रुणद्धि ॥१०॥

चञ्चला—ननु नानाविधप्रतिबन्धकसद्भावात्तामहं द्रष्टुमेव न शक्ष्यामि, कुतस्तव संवादप्रदानमित्याह तामिति। किञ्चेति चार्थः। प्रथमतस्तावत् प्रतिहारादिप्रतिबन्धादन्तःपुरे मम गतिरेव न भविष्यतीत्याह अविहतगतिरिति। अविहता प्रतिहारादिभिरनिवारिता गतिर्यस्य स तथोक्तस्त्वम्। कामरूपोऽपि मेघरूपेणैव गगनवर्त्मना अन्तःपुरे गमिष्यसीति भावः। भवतु तावत्, सा चेत् कुत्रापि गुरुगृहे सुप्ता स्यात्तदा कथं द्रक्ष्यामीत्याह दिवसेति। दिवसगणनायां मम विरहावशिष्टदिनसंख्याकरणे तत्परामासक्ताम्। अतो गुरुगृहे निद्रा गमनमितरसम्भवैवेत्याशयः। अथ त्वन्त्वेवं सम्भावयसि, सा तु चेत् पत्यन्तरेण सह स्थानान्तरं गता, तदा कथं द्रक्ष्यामीत्याह एकेति। एक एव पतिर्यस्यास्ताम्, पतिव्रतामित्यर्थः। अतस्तस्याः पत्यन्तरग्रहणमसम्भवमेवेत्यभिप्रायः। आस्तामेवम्, किन्तु मृता चेत् कथं तां द्रक्ष्यामीत्याह अव्यापन्नामिति। अ-मृतां जीवन्तीमेवेत्यर्थः। अथ तथापि परस्त्रियं कथं द्रक्ष्यामीत्याह भ्रातृजायामिति। संस्थापितसौहार्दतया तवाहं भ्रातैवास्मीति भ्रातुः कुशलवार्त्तामात्रप्रदानाय तज्जायादर्शने न कश्चिद्दोष इति भावः। तां मम प्रियामवश्यं द्रक्ष्यसि। नन्वननुभूतपूर्व्वत्वात्

दृष्टकल्पनावशाच्च अन्येषां निश्चयसम्भवेऽपि अव्यापन्नत्वनिश्चये को हेतुरित्याह आशेति । हि यस्मात् बध्यते अनेनेति बन्धो वृन्तम् । तथा च आशा पुनःसम्भोगविषयकातितृष्णा बन्धो वृन्तमिव सः, प्रणयि प्रेमयुक्तम्, कुसुमसदृशं पुष्पतुल्यं कोमलमित्यर्थः, अतएव विप्रयोगे प्रियविच्छेदे, सद्यःपाति तत्क्षणमेव भ्रंशनशीलम्, अङ्गनानां स्त्रीणां हृदयं जीवनं प्रायशो बाहुल्येन, रुणद्धि पतने निवारयति । अतएव सा पुनर्मम सम्भोगाशया, अव्यापन्नैवास्तीति भावः ।

अत्र पूर्वार्द्धे विशेषणानामुक्तविधेन विशेषविशेषाभिप्रायेण प्रयुक्तत्वात् परिकरालङ्कारः ; परार्द्धे च सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ; कुसुमसदृशमित्युपमानुसारात् आशाबन्ध इत्यत्रापि उपमितसमास एव न्याय्य इति आशाबन्ध इत्यत्र श्रौती समासगता लुप्तोपमा, कुसुमसदृशमित्यत्र च आर्थी समासगता लुप्तोपमा, तथा सद्यःपातित्वं प्रति कुसुमसदृशपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

उत्तरार्द्धानुरूपोक्तिर्यथा मालतीमाधवे—

"आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः प्राणत्राणं कथमपि करोत्यायताक्ष्याः स एकः ।" उद्धवदूते च—"आशापाशैः सखि ! नवनवैः कुर्वती प्राणबन्धम्" ॥१०॥

सञ्जीवनी—न च तस्या नाशात् व्रतस्खलनाद्वा निरर्थकस्त्वत्प्रयास इत्याह ताञ्चेति । हे मेघ ! दिवसानाम् अवशिष्टदिनानां गणनायां संख्याने तत्पराभासक्ताम् । "तत्परे प्रसितासक्तौ" इत्यमरः । अतएव अव्यापन्नाम् अमृतां शापावसाने मदागमनप्रत्याशया जीवन्तीमित्यर्थः । एकः पतिर्यस्याः सा एकपत्नी तां पतिव्रतामित्यर्थः । "नित्यं सपत्न्यादिषु" इति ङीप् नकारश्च । भ्रातुर्मे जायां मातृवत् निःशङ्कं दर्शनीया-

कर्त्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ।
आ कैलासाद्बिसकिसलयच्छेदपाथेयवन्तः
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥११॥

मित्याशयः । तां मत्प्रियाम्, अविहतगतिरविच्छिन्नगतिः सन्, अवश्यं द्रक्ष्यसि च आलोकयिष्यसे च । तथाहि आशा अतितृष्णा "आशा दिगतितृष्णयोः" इति यादवः । बध्यतेऽनेनेति बन्धः, आशाबन्धः कर्त्ता, प्रणयि प्रेमयुक्तम्, अतएव कुसुमसदृशं सुकुमारमित्यर्थः, अतएव विप्रयोगे विरहे सद्यःपाति सद्योभ्रंशनशीलम्, अङ्गनानां हृदयं जीवितम्, "हृदयं जीविते चित्ते" इति शब्दार्णवः । प्रायशः प्रायेण रुणद्धि प्रतिबध्नाति । अर्थान्तरन्यासः ॥१०॥

हिन्दी—फिर दिवसोंकी गणनामें आसक्त (इसवास्ते) जीवित पतिव्रत भाइकी बहूको सब जगह जानेवाले तुम अवश्य देखोगे । (क्यों कि) अतितृष्णारूप बन्ध (यानी वृन्त) प्रेमयुक्त, कुसुमसदृश, (अतएव) सुकुमार (अतः) विरहावस्थामें सद्योभङ्गुर जीवनको प्रायशः रोकता है ॥१०॥

বাঙ্গালা—মেঘ! তুমি অবাধে যাইয়া তোমার পতিব্রতা ভ্রাতৃ-বধূকে অবশ্যই দেখিতে পাইবে; তিনি জীবিতই রহিয়াছেন এবং আমার বিরহের অবশিষ্ট দিন গণনায় ব্যাপৃত আছেন। কারণ, বৃন্ত যেমন পুষ্পকে পড়িয়া যাইতে দেয় না, তেমন পুনরায় মিলনের আশাই প্রায়শঃ, সুকোমল ও ক্ষণভঙ্গুর রমণীগণের প্রেমিক জীবনকে বিরহের সময় চলিয়া যাইতে দেয় না ॥১০॥

(११) उच्छिलीन्ध्रातपत्रामिति पाठान्तरम् ।

अन्वयः—यत् च महीम् उच्छिलीन्ध्राम् अवन्ध्यां कर्त्तुं प्रभवति, तत् श्रवणसुभगं ते गर्जितं श्रुत्वा मानसोत्का विसकिसलयच्छेदपाथेयवन्तः राजहंसाः नभसि भवतः आ कैलासात् सहायाः सम्पत्स्यन्ते ॥११॥

चञ्चला—न केवलमेकाकिना त्वया गन्तव्यमित्याह कर्त्तुमिति। यच्च गर्जितं कर्त्तृ, महीं पृथिवीम्, उद्‌गता उत्थिता शिलीन्ध्रा कन्दली छत्राकारोपरिभाग-क्षुद्र-क्षुद्र-श्वेतवर्ण-पदार्थविशेषो यस्यां ताम्, अतएव अवन्ध्यां शस्यैररहितां शिलीन्ध्राणां शस्योत्पत्तिसूचकत्वात् सम्पन्नशस्या-मित्यर्थः, कर्त्तुं प्रभवति शक्नोति ; तत् श्रवणसुभगं श्रुतिमधुरम्, ते तव गर्जितं श्रुत्वा, मानसोत्का मानससरोवरार्थमुत्कण्ठिताः, विसकिस-लयानां मृणालाग्राणां छेदाः खण्डा एव पाथेयाः पथि खाद्या एषां सन्तीति ते तथोक्ता राजहंसाः, नभसि आकाशे, भवतः आ कैलासात् कैलासपर्व्वतपर्य्यन्तम्, सहायाः सहगामिनः सम्पत्स्यन्ते भविष्यन्ति ॥११॥

सञ्जीवनी—सम्प्रति सहायसम्पत्तिश्चास्तीत्याह कर्त्तुमिति। यद् गर्जितं कर्त्तृ, महीम् उच्छिलीन्ध्राम् उद्भूतकन्दलिकाम्, "कन्दल्याञ्च शिलीन्ध्रा स्यात्" इति शब्दार्णवः। अतएव अवन्ध्यां सफलां कर्त्तुं प्रभवति शक्नोति, शिलीन्ध्राणां भाविशस्यसम्पत्तिसूचकत्वादिति भावः। तदुक्तं निमित्तनिदाने—"कालाभ्रयोगादुदिताः शिलीन्ध्राः सम्पन्नशस्यां कथयन्ति धात्रीम्" इति। तत् श्रवणसुभगं श्रोत्रसुखम्, लोकस्येति शेषः, ते तव गर्ज्जितं श्रुत्वा मानसोत्काः मानसे सरसि उन्मनस उत्सुका इति यावत्, "उत्क उन्मनाः" इति निपातनात् साधु। कालान्तरे मानसस्य हिमदुष्टत्वात्, हिमस्य च हंसानां रोगहेतुत्वात् अन्यत्र गता हंसाः पुनर्वर्षासु मानसमेव गच्छन्तीति प्रसिद्धिः। विसकिसलयानां मृणाला-ग्राणाम्, छेदैः शकलैः पाथेयवन्तः पथि साधु पाथेयं पथि भोज्यम्,

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो वाष्पमुष्णाम् ॥१२॥

"पथ्यतिथिवसतिस्वपतेर्ढञ्" तद्वन्तः मृणालाग्रशकलसम्बन्धवन्त इत्यर्थः, राजहंसा हंसविशेषाः, "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः। नभसि व्योम्नि भवतस्तव आ कैलासात् कैलासपर्य्यन्तम्, पदद्वयञ्चैतत्, सहायाः सयालाः "सहायस्तु सयालः स्यात्" इति शब्दार्णवः। सम्पत्स्यन्ते भविष्यन्ति ॥११॥

हिन्दी—और जो गर्जन महीको कन्दलीवाली (अतः) सफला करनेमें समर्थ है; वह श्रुतिमधुर तेरा गर्जन सुनकर मानससरोवरमें जानेवाले (मन को नियुक्त करनेवाले) (क्यों कि बरसातमें हंसोंका मानससरोवरमें जाना कविप्रसिद्धि है) मृणालाग्रकी टुकरों पाथेय ले कर (यानी रास्ताकी खर्चा लेकर) राजहंसगण आकाशमें कैलास तक तुम्हारे सहाय होवेंगे ॥११॥

বাঙ্গালা—যে গর্জ্জন, শিলীন্ধ্র (ব্যাঙের ছাতি) উৎপাদন করিয়া পৃথিবীকে শস্যসম্পন্ন করিতে সমর্থ হয়; তোমার সেই শ্রুতিমধুর গর্জ্জন শুনিয়া, মানসসরোবরের নিমিত্ত উৎকণ্ঠিত রাজহংসগণ, খণ্ড খণ্ড মৃণাল-রূপ পাথেয় লইয়া, কৈলাসপর্ব্বত পর্য্যন্ত আকাশে তোমার সঙ্গী হইবে ॥১১॥

अन्वयः—प्रियसखं तुङ्गं पुंसां वन्द्यैः रघुपतिपदैः मेखलासु अङ्कितम् अमुं शैलम् आलिङ्ग्य आपृच्छस्व, काले काले भवतः संयोगं एत्य चिरविरहजम् उष्णं वाष्पं मुञ्चतः यस्य स्नेहव्यक्तिः भवति ॥१२॥

चञ्चला—आपृच्छस्वेति । प्रियसखम् आश्रयदातृत्वात् प्रियसुहृदम्, तुङ्गमुच्चमुदारञ्च, पुंसां सर्व्वेषामेव जनानाम्, वन्द्यैः पूजनीयैः, रघुपतेः पदैः श्रीरामस्य चरणचिह्नैः, मेखलासु मध्यभागेषु, अङ्कितं चिह्नितम्, अमुं शैलं चित्रकूटपर्व्वतम्, आलिङ्ग्य आपृच्छस्व—'सखे ! इदानीमहं गच्छामि ?' इति गमनानुमतिं गृहाणेत्यर्थः । ननु आश्रयदातृत्वात् प्रियत्वमेव सम्भवति, सखित्वन्तु कुत इत्याह काल इति । काले काले प्रतिवर्षाकालं प्रतिनिर्द्दिष्टसमयञ्च, भवतो मेघस्य, संयोगं सम्पर्कम्, एत्य प्राप्य वर्त्तमानस्य, चिरविरहजं दीर्घकालीनवियोगादुत्पन्नम्, उष्णं वाष्पम् उष्माणं ग्रीष्मकालसञ्चितं तीव्रतापमित्यर्थः आनन्दाश्रु च, मुञ्चतो विसृजतः, यस्य शैलस्य, स्नेहव्यक्तिः सौहार्द्दप्रकाशो भवति ।

अत्र सखित्ववशादेव वाष्पमोचनं स्नेहप्रकाशश्चेति कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः ; तथा अचेतनस्य शैलस्य चेतनसाध्यस्नेहव्यक्तेरसम्भवात् स्नेहव्यक्तिरिव भवतीत्यर्थस्य वक्तव्यत्वेन भावाभिमानिनी प्रतीयमाना क्रियोत्प्रेक्षा, अनयोरङ्गाङ्गिभावेन सङ्करः । मुख्यमालिङ्गनं प्रति प्रियसखत्वादिविशेषणानामुपयोगित्वात् न अपुष्टार्थत्वदोषः ॥१२॥

सञ्जीवनी—आपृच्छस्वेति । प्रियं सखायं प्रियसखम्, "राजाहः सखिभ्यष्टच्" इति समासान्तः । तुङ्गमुन्नतम्, पुंसां वन्द्यैः सुराराधनीयैः, रघुपतिपदैः रामपादन्यासैः, मेखलासु कटकेषु, "अथ मेखला । श्रोणिस्थानेऽद्रिकटके कटिबन्धे भवन्धने ।" इति यादवः । अङ्कितं चिह्नितम्, इत्थं सखित्वात् महत्त्वात् पवित्रत्वाच्च सम्भावनार्हम्, अमुं शैलं चित्रकूटाद्रिम्, आलिङ्ग्य आपृच्छस्व-'साधो ! यामि' इत्यामन्त्रणेन सभाजय, "आमन्त्रणसभाजने । आप्रच्छनम्" इत्यमरः । "आङि

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद ! श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसाञ्चोपयुज्य ॥१३॥

---

नुप्रच्छोरुपसंख्यानम्" इत्यात्मनेपदम् । सखित्वं निर्वाहयति काल इति । काले काले प्रतिप्रावृट्कालं सुहृदागमनकालश्च कालशब्देन उच्यते । वीप्सायां द्विरुक्तिः । भवतः संयोगं सम्पर्कमेत्य चिरविरहजम् उष्णं वाष्पम् उष्माणं नेत्रजलञ्च, "वाष्पो नेत्रजलोष्मणोः" इति विश्वः । मुञ्चतो यस्य शैलस्य स्नेहव्यक्तिः प्रेमाविर्भावो भवति । स्निग्धानां हि चिरविरहसङ्गतानां वाष्पपातो भवतीति भावः ॥१२॥

**हिन्दी**—हे जलद ! प्रियबन्धु, उन्नत, और पुरुषोंको नमस्य रामचन्द्रके पदविन्यास से चिह्नित मध्यभागशाली वह पर्व्वतको आलिङ्गन करनेके बाद पुछो ; ( यानी हे साथी ! अब मैं जाता हूं ऐसा सम्भाषण करो ) ( क्यों कि ) फी बरसात में तुम्हारे सम्पर्क प्राप्त होकर, चिरविरहमे समुत्पन्न गरम आंसुवों को छोड़ता हुआ जिस पहाड़का प्रेमाविर्भाव होता है ॥१२॥

**বাঙ্গালা**—হে মেঘ ! যাহার নিতম্বপ্রদেশ, সমস্ত মানবের পূজনীয় শ্রীরামচন্দ্রের চরণচিহ্নে চিহ্নিত রহিয়াছে এবং প্রত্যেক বর্ষাকালে তোমার সহিত সম্মেলন লাভ করার পর দীর্ঘকালের বিরহজনিত উষ্ণ বাষ্প মোচন করায় ( তোমার প্রতি ) যাহার স্নেহ প্রকাশ পাইয়া থাকে, সেই প্রিয়সুহৃদ্ অথ চ উন্নত এই চিত্রকূটপর্ব্বতকে আলিঙ্গন করিয়া গমনের অনুমতি গ্রহণ কর ॥১২॥

**अन्वयः**—जलद ! तावत् कथयतः त्वत्प्रयाणानुरूपम् मार्गं शृणु । तदनु

श्रोत्रपेयं मे सन्देशं श्रोष्यसि । यत्र खिन्नः खिन्नः ( सन् ) शिखरिषु पदं न्यस्य चीणः चीणः ( सन् ) स्रोतसां परिलघु पयः उपयुज्य च गन्तासि ॥१३॥

चञ्चला—मार्गमिति । हे जलद ! मेघ ! तावत् इदानीम्, कथयतो मत्तः सकाशात्, त्वत्प्रयाणानुरूपं तव गमनयोग्यम्, मार्गं पन्थानं शृणु ; तदनु ततः परम्, श्रोत्रपेयं कर्णाभ्यां सादरं श्रोतव्यम् । एतेन सन्देशस्य अमृतायमानत्वं ध्वनितम् । मे मम सन्देशं प्रियतमार्थं संवादं श्रोष्यसि । यत्र मार्गे, खिन्नः खिन्नः वारं वारं परिश्रान्तः सन्, शिखरिषु पर्वतेषु, पदं चरणम्, न्यस्य संस्थाप्य, विश्रामं कृत्वेत्यर्थः, चीणः चीणो वारं वारं कृशदेहः सन्, स्रोतसां नदीप्रवाहाणाम्, परिलघु गुरुत्वदोषरहितं स्वास्थ्यकरमित्यर्थः, पयो जलम्, उपयुज्य शरीरपुष्ट्यर्थं पीत्वा, गन्तासि गमिष्यसि ।

अत्र परार्थे कार्य्येण मेघे साधारणपथिकव्यवहारसमारोपात् समासोक्तिरलङ्कारः ॥१३॥

सञ्जीवनी—सम्प्रति तस्य मार्गं कथयति मार्गमिति । हे जलद ! तावदिदानीम्, कथयतो मत्त इति शेषः । त्वत्प्रयाणस्य अनुरूपमनुकूलम्, मार्गमध्वानम्, "मार्गो मृगपदे मासि सौम्यर्चेऽन्वेषणेऽध्वनि" इति यादवः । शृणु, तदनु मार्गश्रवणानन्तरम्, श्रोत्राभ्यां पेयं पानार्हम् अतितृष्णया श्रोतव्यमित्यर्थः । पेयग्रहणात् सन्देशस्य अमृतसाम्यं गम्यते । मे सन्देशं वाचिकम्, "सन्देशवाग् वाचिकं स्यात्" इत्यमरः । श्रोष्यसि ; यत्र मार्गे खिन्नः खिन्नः अभीक्ष्णं चीणबलः सन्, "नित्यवीप्सयोः" इति नित्यार्थे द्विर्भावः । शिखरिषु पर्व्वतेषु, पदं न्यस्य निक्षिप्य पुनर्बललाभार्थं कञ्चिद्विश्रम्येत्यर्थः । चीणः चीणः अभीक्ष्णं कृशाङ्गः सन्, अत्रापि क्तदन्तत्वात् पूर्ववत् द्विरुक्तिः । स्रोतसां परिलघु

**अद्रेः शृङ्गं हरति पवनः किं स्विदित्युन्मुखीभिः**
**दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।**
**स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुखः खं**
**दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥१४॥**

गुरुत्वदोषरहितम्, उपलास्फालनखेदितत्वात् पथ्यमित्यर्थः। तथा च वाग्भटः—"उपलास्फालनक्षेपविच्छेदैः खेदितोदकाः। हिमवन्मलयोद्भूताः पथ्या नद्यो भवन्त्यमूः॥" इति। पयः पानीयम्, उपयुज्य शरीरपोषणार्थमभ्यवहृत्य च गन्तासि गमिष्यसि, गमेर्लुट् ॥१३॥

हिन्दी—अब बतलाते हुये मुझसे तुम्हारे जानेकी लायक रास्ता सुनो; तिसके बाद सुनने योग्य मेरी वार्त्ता सुनोगे। जिस मार्गमें पुनः पुनः थकावटवाला होकर पर्वतोंके ऊपर पैर रखनेके बाद (वारंवार वरसानेकी जरूरतसे) अत्यन्त दुर्बले (तुम्) प्रवाहके पानी पी कर जावोगे ॥१३॥

বাঙ্গালা—হে মেঘ! তোমার গমনের উপযুক্ত পথ আমি বলিতেছি শ্রবণ কর; তাহার পর আদরের সহিত কর্ণযুগলে শ্রবণীয় আমার সংবাদ শ্রবণ করিবে। যে পথে বার বার পরিশ্রান্ত হইলে পর্ব্বতের উপরে বিশ্রাম করিয়া করিয়া এবং বার বার ক্ষীণ হইলে স্রোতের স্বাস্থ্যকর জল পান করিয়া করিয়া, গমন করিবে ॥১৩॥

अन्वयः—पवनः अद्रेः शृङ्गं हरति किंस्वित् उन्मुखीभिः मुग्धसिद्धाङ्गनाभिः चकितचकितं दृष्टोत्साहः (सन्) सरसनिचुलात् अस्मात् स्थानात् पथि दिङ्नागानां स्थूलहस्तावलेपान् परिहरन् उदङ्मुखः सन् खम् उत्पत ॥१४॥

---

(१४) अद्रेः शृङ्गं वहति। दृष्टोच्छ्रायः। हस्तावलेहान्। इति पाठान्तराणि।

चञ्चला—अद्रेरिति। पवनो वायुः, अद्रेश्चित्रकूटपर्व्वतस्य, शृङ्गं किञ्चित् शिखरम्, हरति भङ्क्त्वा चालयति किंस्वित् किन्नु इति सन्देहेन, उन्मुखीभिः उन्नमितवदनाभिः, मुग्धा मूढ़ाः प्रकृतनिर्णया-समर्था इति यावत् याः सिद्धानां देवयोनिविशेषाणामङ्गनाः स्त्रियस्ताभिः, चकितचकितं पतनाशङ्कया भीतभीतं यथा स्यात्तथा, दृष्ट उत्साहो गमनोद्यमो यस्य स तादृशः सन्, सरसा जीवितत्वात् रसान्विताः निचुला वेतसलता यस्मिन् तस्मात्तथोक्तात्, अस्मात्, स्थानात्, पथि आकाशमार्गे, दिङ्नागानां दिग्‌दन्तिनाम्, स्थूलाः पीवरा ये हस्ताः शुण्डास्तेषाम् अवलेपान् आकर्षणानि, परिहरन् परित्यजन् प्रागेवापसृत्य गमनेन तद्विषयमतिक्रामन्नित्यर्थः, उदङ्मुख उत्तराभिमुखः सन्, खम् आकाशम्, उत्पत उद्गच्छ।

अत्र उपमेयभूते मेघे उपमानभूतस्य पर्वतशृङ्गस्य, सन्देहात् तत्र च निश्चयाभावात् शुद्धसन्देहोऽलङ्कारः। तेन च मेघस्य श्लाघ्यवर्णत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। द्वितीयचरणे तादृशाङ्गनाकर्तृकदर्शनलाभात् सौभाग्यशालित्वं ध्वन्यत इति वस्तुना वस्तुध्वनिः प्रधानः शब्दशक्तिमूलो वस्तुध्वनिस्तु मल्लिनाथटीकायामेव द्रष्टव्यः। तादृशध्वनिप्रतिपादनार्थ-मेव "सरसनिचुलात्" इति विशेषणमिति न अपुष्टार्थतादोषः। किन्तु तृतीयचरणेन वाक्ये समाप्तेऽपि पुनस्तस्यैव कर्तृविशेषणतया चतुर्थ-चरणोपादानात् समाप्तपुनरात्ततादोषः ; स च तृतीयस्थाने चतुर्थचरणं चतुर्थस्थाने च तृतीयचरणं पठित्वा समाधेयः ॥१४॥

सञ्जीवनी—अद्रेरिति। पवनो वायुः, अद्रेश्चित्रकूटस्य शृङ्गं हरति किंस्वित्? किंस्विच्छब्दो विकल्पवितर्कार्थादिषु पठितः। इति शङ्कया, उन्मुखीभिः उन्नतमुखीभिः, "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीप्। मुग्धाभिर्मूढ़ाभिः, "मुग्धः सुन्दरमूढ़योः" इत्यमरः।

सिद्धानां देवयोनिविशेषाणाम् अङ्गनाभिः, चकितचकितं चकितप्रकारम्, यथा तथा, "प्रकारे गुणवचनस्य" इति द्विर्भावः। दृष्टोत्साहो दृष्टोद्योगः सन् सरसा आर्द्राः, निचुलाः स्थलवेतसा यस्मिन् तस्मात् "वानीरे कविभेदे स्यान्निचुलः स्थलवेतसे" इति शब्दार्णवः। अस्मात् स्थानात् आश्रमात्, पथि नभोमार्गे, दिङ्नागानां दिग्गजानाम्, स्थूला ये हस्ताः करास्तेषाम् अवलेपान् आक्षेपान्, परिहरन्, "हस्तो नक्षत्रभेदे स्यात् करेभकरयोरपि" इति विश्वः। उदङ्मुखः सन्, अलकाया उदीच्यत्वादित्याशयः। खमाकाशम्, उत्पत उद्गच्छ।

अत्रेदमप्यर्थान्तरं ध्वनयति—रसिको निचुलो नाम महाकविः कालिदासस्य सहाध्यायः परापादितानां कालिदासप्रबन्धदूषणानां परिहर्त्ता यस्मिन् स्थाने तस्मात् स्थानात् उदङ्मुखो निर्दोषत्वादुन्नतमुखः सन्, पथि सारस्वतमार्गे दिङ्नागानां पूजायां बहुवचनम्, दिङ्नागाचार्य्यस्य कालिदासप्रतिपक्षस्य, हस्तावलेपान् हस्तविन्यासपूर्वकाणि दूषणानि परिहरन्, "अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च" इति विश्वः। अद्रेरद्रिकल्पस्य दिङ्नागाचार्य्यस्य, शृङ्गं प्राधान्यम्, "शृङ्गं प्राधान्यसान्वोश्च" इत्यमरः। हरतीति हेतुना सिद्धैः सारस्वतसिद्धैर्महाकविभिरङ्गनाभिश्च दृष्टोत्साहः सन्, खमुत्पत उच्चैर्भव इति स्वप्रबन्धमात्मानं वा प्रति कवेरुक्तिरिति।

"संसर्गतो दोषगुणा भवन्तीत्येतन्मृषा येन जलाशयेऽपि।
स्थित्वानुकूलं निचुलश्चलन्तमात्मानमारक्षति सिन्धुवेगात्॥"

इत्येतच्छ्लोकनिर्म्माणात् तस्य कवेर्निचुलसंज्ञेति ॥१४॥

हिन्दी—हे जलद! हवा चित्रकूट पहाड़का शृङ्ग क्या हर रहा है; इसी संशयसे ऊपरको मुख करती हुई सिद्धोंकी मुग्धा स्त्रियोंसे तोसे चकित उत्साह दृष्ट होकर, तुम आर्द्र स्थल वेतसोंसे पूर्ण इस स्थानसे (आश्रमसे) आकाशमार्ग

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत् पुरस्तात्
वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेशस्य विष्णोः ॥१५॥

---

में दिग्गजोंका स्थूल शुण्डोंका फटकार दूर करते हुये, उत्तरकी तरफ वदन किये उसमे चढ़ जावो ॥१४॥

**বাঙ্গালা**—বায়ু কি পর্ব্বতের শৃঙ্গ হরণ করিয়া নিয়া যাইতেছে? এইরূপ মনে করিয়া, মুগ্ধ সিদ্ধরমণীগণ উদ্‌গ্রীব হইয়া ভীত ভীতভাবে তোমার গমনের উত্তম দর্শন করিবে। আর তুমি আর্দ্র-বেতসলতায় পরিপূর্ণ এই স্থান হইতে পথে দিগ্‌হস্তিগণের স্থূল শুণ্ডের আকর্ষণ পরিত্যাগকরতঃ উত্তরাভিমুখ হইয়া আকাশে গমন করিবে ॥১৪॥

**अन्वयः**—रत्नच्छायाव्यतिकरः इव प्रेक्ष्यं पुरस्तात् एतत् आखण्डलस्य धनुःखण्डं वल्मीकाग्रात् प्रभवति; येन ते श्यामं वपुः स्फुरितरुचिना बर्हेण गोपवेशस्य विष्णोः श्यामं वपुः इव अतितरां कान्तिं आपत्स्यते ॥१५॥

**चञ्चला**—रत्नेति। रत्नानां पद्मराग-मरकत-चन्द्रकान्तादीनां पीत-नील-शुभ्र-मणीनाम्, याश्छायाः कान्तयस्तासां व्यतिकरो मिश्रण-मिव, प्रेक्ष्यं नानावर्णतया दृश्यम्, पुरस्तादग्रतः, एतत् अङ्गुल्या निर्द्दिष्टम्, आखण्डलस्य इन्द्रस्य, धनुःखण्डं धनुष एकदेशः, वल्मीकाग्रात् उयीकाकृतमृत्तिकास्तूपस्योपरिभागात् प्रभवति आविर्भवति। येन आखण्डलधनुःखण्डेन ते तव श्यामं श्यामवर्णं वपुः शरीरम्, स्फुरिता प्रसृता रुचिः कान्तिर्यस्य तेन, बर्हेण मयूरपिच्छेन गोपवेशस्य

---

(१५) रत्नच्छायाव्यतिकरः। आलप्स्यते। इति पाठान्तरम्।

गोपालरूपस्य, विष्णोः कृष्णस्य, श्यामं वपुरिव, अतितरां सातिशयां कान्तिं शोभाम्, आपत्स्यते लप्स्यते।

अत्र "खण्डमाखण्डलस्य" इत्यत्र छेकानुप्रासः, तथा प्रथमे पादे श्रौत्युपमा, चतुर्थ पादेऽप्यपरा श्रौत्युपमैवेत्येतेषां मिथो निरपेक्षतया संसृष्टिः। तथा "रत्नच्छायव्यतिकरः" इत्युपमाने पुंलिङ्गं प्रक्रम्य "धनुःखण्डम्" इत्युपमेये नपुंसकनिर्द्देशात् तेन च "प्रेक्ष्यम्" इति "एतत्" इति च विशेषणद्वयस्य विपर्य्यासावश्यकत्वात् "सुधेव विमलश्चन्द्र" इति दर्पणोदाहरणवत् भग्नप्रक्रमतादोषः ; स च "रत्नच्छायव्यतिकत-मिव" इति पाठेन परिहार्य्यः ॥१५॥

सञ्जीवनी—रत्नेति। रत्नच्छायानां पद्मरागादिमणिप्रभाणाम्, व्यतिकरो मिश्रणमिव, प्रेक्ष्यं दर्शनीयम्, आखण्डलस्य इन्द्रस्य, एतत् धनुःखण्डम्, एतदिति हस्तेन निर्द्देशः। पुरस्तादग्रे वल्मीकाग्रात् वामलूरविवरात्, "वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्" इत्यमरः। प्रभवति आविर्भवति, येन धनुःखण्डेन, ते तव श्यामं वपुः स्फुरित-रुचिना उज्ज्वलकान्तिना, बर्हेण पिच्छेन, "पिच्छवर्हे नपुंसके" इत्यमरः। गोपवेशस्य विष्णोर्गोपालस्य कृष्णस्य, श्यामं वपुरिव, अतितरां कान्तिं शोभाम्, आपत्स्यते प्राप्स्यति ॥१५॥

हिन्दी—पद्मरागादि मणिप्रभा का मिश्रणकी माफिक, देखने लायक यह धनुःखण्ड व र्वल्मिकसे निकलता है ; जो इन्द्रका है, और अब तुम्हारे आगे वर्त्तमान है। जिससे तुम्हारे काला शरीर, उज्ज्वलकान्तिवाले मोरके चन्देसे गोपवेशधारी कृष्णके समान होकर अतीव शोभा प्राप्त करेगा ॥१५॥

বাঙ্গালা—পদ্মরাগ ও মরকতপ্রভৃতি মণিগণের মিশ্রিত কিরণ-সমূহের ন্যায় সুদৃশ্য, ইন্দ্রধনুর খণ্ড, উইয়ৌকা-মৃত্তিকাস্তূপের উপরিভাগ হইতে সম্মুখে এই আবির্ভূত হইতেছে। যে ইন্দ্রধনু-খণ্ডদ্বারা তোমার

त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः ।
सद्यः सीरोत्कषणसुरभि क्षेत्रमारुह्यमालं
किञ्चित् पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण ॥१६॥

শ্যামবর্ণ দেহ, উজ্জ্বলকান্তি, ময়ূরপুচ্ছদ্বারা গোপালবেশধারী নারায়ণের শ্যামল দেহের ন্যায় অত্যন্ত সৌন্দর্য্যলাভ করিবে ॥১৫॥

अन्वयः—कृषिफलं त्वयि आयत्तं इति भ्रूविलासानभिज्ञैः प्रीतिस्निग्धैः जनपद-वधूलोचनैः पीयमानः ( त्वं ) सद्यः सीरोत्कषणसुरभि मालं क्षेत्रं आरुह्य किञ्चित् पश्चात् लघुगतिः ( सन् ) भूयः उत्तरेण एव व्रज ॥१६॥

व्याख्या—त्वयीति । कृषिफलं धान्यादिकं भूमिकर्षणसम्भवं शस्यम्, त्वयि आयत्तं वृष्टिजलेनैव भावित्वात् तवाधीनम्; इति हेतोः, भ्रूविलासानां भावव्यञ्जकभ्रूविक्षेपाणामनभिज्ञैः पल्लीवासित्वेन अचतुरत्वादित्याशयः, प्रीत्या प्रेम्णा स्निग्धैः रूक्षैः जनपदवधूनां ग्राम्य-रमणीनां लोचनैः, पीयमानः सादरं दृश्यमानस्त्वम्, सद्यःसीरोत्कर्षणेन तदानीमेव हलकर्षणेन सुरभि भूगर्भस्थसुगन्धिमूलाद्याविर्भावात् सौरभ-युक्तम्, मालं मालनामकं क्षेत्रम्, आरुह्य किञ्चित् पश्चात् तत्र वर्षणेन किञ्चिदनन्तरम्, लघुगतिः वर्षणात् किञ्चिज्जलभारलाघवेनात्मनोऽपि लघुत्वात् द्रुततरगतिः सन्, भूयः पुनरपि, उत्तरेणैव पथा व्रज गच्छ ।

अत्र भाविसुखसम्पादकमपत्यं पत्यधीनमिति मत्वा बह्वयः पत्न्यः प्रीतिस्निग्धैः सरलदृष्टिपातैर्यं पश्यन्ति, यश्च रागवैचित्र्यात् मार्ज्जन-परिष्कृतां गन्धद्रव्यसुरभिताङ्गीं काञ्चित् पत्नीमुपभुज्य दाक्षिण्यभङ्गभयेन

(१६) भ्रूविकारानभिज्ञैः, प्रवलय गतिम्, किञ्चिदेवोत्तरेण, इति पाठान्तराणि ।

द्रुतगत्या गुप्तपथेन तदुगृहादपसरति, तादृशो दक्षिणनायकः प्रतीयत इति शब्दशक्तिमूलो वस्तुध्वनिः। स्वान्वयिन उत्तरेणैति पदस्य, अव्यवहितपूर्वमेव एवशब्दस्य पाठान्न अक्रमतादोषः, ईदृशपाठेऽपि श्रोतुरुद्वेगाजननात्।

मालनामकं क्षेत्रन्तु इदानीन्तन—"छत्तिशगड़"—नामकदेशान्तर्गत-रत्नपुरसन्निहितमेवेति प्रतीयते॥१६॥

सञ्जीवनी—त्वयीति। कृषेर्हलकर्षणायाः, फलं शस्यम्, त्वयि अधिकरणविवक्षायां सप्तमी। आयत्तमधीनम्, "अधीनो निघ्न आयत्त" इत्यमरः। इति हेतोः प्रीत्या स्निग्धैः अकृत्रिमप्रेमार्द्रैरित्यर्थः भ्रूविलासानां भ्रूविकाराणाम्, अनभिज्ञैः, पामरत्वादिति शेषः। जनपद-वधूनां पल्लीयोषिताम्, लोचनैः पीयमानः सादरं वीक्ष्यमाणः सन्, मालं मालाख्यं क्षेत्रं शैलप्रायमुन्नतं स्थलम्, "मालमुन्नतभूतलम्" इत्युत्पलः। सद्यस्तत्कालमेव सीरैर्हलैः उत्कर्षणेन कर्षणेन, सुरभि घ्राणतर्पणम्, यथा तथा आरुह्य तत्राभिवृष्येत्यर्थः। "सुरभिर्घ्राण-तर्पणः" इत्यमरः। किञ्चित् पश्चात् लघुगतिः तत्र निर्वृष्टत्वात् क्षिप्रगमनः सन्, "लघु क्षिप्रमरं द्रुतम्" इत्यमरः। भूयः पुनरपि उत्तरेणैव उत्तर-मार्गेणैव व्रज गच्छ। "प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया। यथा कश्चिद्बहुवल्लभः पतिः कुत्रचित् क्षेत्रे कलत्रे गूढं विहृत्य "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" इति विश्वः, दाक्षिण्यभङ्गभयात् नीचमार्गेण निर्गत्य पुनः सर्वाध्यक्षं सञ्चरति तद्वदिति ध्वनिः॥१६॥

हिन्दी—हल कर्षणका फल तुम्हारे अधीन है, इस वास्ते अकृत्रिम प्रेमसे आर्द्र कटाक्षपात नहीं जानते हुये ग्रामवासीयों की औरतके नयनसे पीये जाते हुये तुम तिस समयमें हलवाहनसे सुगन्धित मालनामक क्षेत्रमें वर्षण करो। उसके बाद गति बढ़ाकर, फिर उत्तर दिशासे जावो॥१६॥

**त्वामासारप्रशमितवनोपप्लवं साधु मूर्द्ध्ना**
**वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ।**
**न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय**
**प्राप्ते मित्रे भवति विमुखः किंपुनर्यस्तथोच्चैः ॥१७॥**

**বাঙ্গালা**—যাহা কিছু কৃষিকার্য্যের ফল তাহা তোমারই অধীন, এই জন্য গ্রাম্য রমণীগণ ভ্রূভঙ্গীবিহীন ও অকৃত্রিম-প্রণয়ব্যঞ্জক দৃষ্টিপাতে আদরের সহিত তোমাকে দেখিতে থাকিবে। আর তুমি তৎকালীন হলকর্ষণবশতঃ সৌরভসম্পন্ন মালনামক ক্ষেত্রের উপরে যাইয়া, কিছু পরে (বৃষ্টি করার পর) পুনরায় দ্রুতগতিতে উত্তরদিকেই যাইবে ॥১৬॥

**अन्वयः**—आम्रकूटः सानुमान् मूर्द्ध्ना आसारप्रशमितवनोपप्लवं अध्वश्रमपरिगतं त्वां साधु वक्ष्यति । क्षुद्रः अपि संश्रयाय मित्रे प्राप्ते प्रथमसुकृतापेक्षया विमुखः न भवति, यः तथा उच्चैः (सः) किं पुनः ॥१७॥

**चञ्चला**—त्वामिति । आम्रकूटो नाम सानुमान् पर्वतः, मूर्द्ध्ना मस्तकेन, आसारेण वृष्टिधारासम्पातेन प्रशमितः पूर्वं निवारितो वनोपप्लवो दावाग्निर्येन तम्, अध्वश्रमपरिगतम् इदानीं पथिश्रमेण व्याप्तं त्वाम्, साधु सम्यक्, वक्ष्यति धारयिष्यति । तथा च क्षुद्रोऽपि जनः, संश्रयाय, आश्रयप्राप्तये, मित्रे बन्धुजने, प्राप्ते आगते सति, प्रथमसुकृतापेक्षया पूर्वकृतोपकारस्मरणेन, विमुख आश्रयदानात् पराङ्मुखो

(१७) सप्तदशात् परम् अष्टादशाच्च पूर्वं क्वचित् पुस्तके अयं श्लोकः पठ्यते—
"अध्वक्लान्तं प्रतिमुखगतं सानुमांश्चित्रकूटस्तुङ्गेन त्वां जलद ! शिरसा वक्ष्यति श्लाघमानः ।
आसारेण त्वमपि शमयेस्तस्य नैदाघमग्निं सद्भावार्द्रः फलति न चिरेणोपकारो महत्सु ॥"
अयन्तु प्रायेण सप्तदशश्लोकसमानार्थतया प्रक्षिप्तबुद्ध्या मल्लिनाथेन न व्याख्यातः ।

न भवति ; यस्तथा तेन प्रकारेण उच्चैरुन्नतः, स आम्रकूटः, किं पुनः विमुखो न भवतीति किमु वक्तव्यमित्यर्थः ।

अत्र वहनं प्रति आसारप्रशमितवनोपप्लवपदार्थस्य अध्वश्रमपरिगत-पदार्थस्य च हेतुतया पदार्थहेतुकं काव्यलिङ्गम् ; पराद्धे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, अर्थापत्तिश्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः । तथा मूर्द्ध्ना इत्यत्र पदांशगतो दुःश्रवत्वदोषः, "वक्ष्यत्यध्वश्रम—" इत्यत्र च वाक्यगतो दुःश्रवत्वदोषः ; तौ च "—साधु शैलः, धाता मार्गश्रमपरिगतं मस्तकेनाम्रकूटः" इति पाठेन समाधेयौ ।

एष आम्रकूटपर्वतस्तु दाक्षिणात्यान्तर्गत—'रामगड़'-विभागस्थ-'रत्नपुर-'चतुष्कोणात् परं वर्त्तते । इदानीन्तनमस्य नाम तु "अमरकण्टक" इति बहूनां मतम् ॥१७॥

**सञ्जीवनी**—त्वामिति । आम्रैश्चूताः कूटेषु शिखरेषु यस्य स आम्रकूटो नाम सानुमान् पर्वतः, "आम्रश्चूतो रसालोऽसौ" "कूटोऽस्त्री शिखरं शृङ्गम्" इति च अमरः । आसारो धारावृष्टिः, "धारासम्पात आसारः" इत्यमरः । तेन प्रशमितो वनोपप्लवो दावाग्निर्येन तम्, कृतोपकारमित्यर्थः । अध्वश्रमेण परिगतं व्याप्तं त्वाम्, साधु सम्यक् मूर्द्ध्ना वक्ष्यति वोढ़ा, वहेर्लृट् । तथाहि, क्षुद्रः कृपणोऽपि "क्षुद्रो दरिद्रे कृपणे नृशंसे" इति यादवः । संश्रयाय संश्रयणाय, मित्रे सुहृदि, "अथ मित्रं सखा सुहृत्" इत्यमरः । प्राप्ते आगते सति, प्रथमसुकृतापेक्षया पूर्वोपकारपर्य्यालोचनया, विमुखो न भवति, यस्तथा तेन प्रकारेण उच्चैरुन्नतः, स आम्रकूटः किं पुनः विमुखो न भवतीति किमु वक्तव्यमित्यर्थः । एतेन प्रथमावसथे सौख्यलाभात् ते कार्य्यसिद्धि-रस्तीति सूचितम् । तदुक्तं निमित्तनिदाने—"प्रथमावसथे यस्य

**छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रैः**
**त्वय्यारूढ़े शिखरमचलः स्निग्धवेणीसवर्णे।**
**नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां**
**मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥१८॥**

सौख्यं तस्याखिलेऽध्वनि। शिवं भवति यात्रायामन्यथा त्वशुभं ध्रुवम्॥" इति ॥१७॥

**हिन्दी**—आम्रकूट पहाड़ (जिसके शृङ्गपर बहुत आमवृक्ष हैं) जलधारा से दावाग्नि प्रशमक, मार्गश्रमसे क्लान्त तुमको अच्छीतरसे शिरमें पकड़ेगा। (क्योंकि) हीन मनुष्यभी पहिला उपकार मानकर दोस्तको आश्रय देता है, विमुख नहीं होता। और जो वतना ऊंचा हैं, सो क्या विमुख होगा? तुमको ठहरने नहीं देगा? (ऐसा कभी नहीं हो सकता) ॥१७॥

**বাঙ্গালা**—মেঘ! তুমি পূর্ব্বে বৃষ্টির ধারায় উহার দাবাগ্নি নির্ব্বাণ করিয়াছিলে, সুতরাং এখন পথের পরিশ্রমে ক্লান্ত হইয়া উপস্থিত হইলে, সেই আম্রকূটপর্ব্বত তোমাকে সম্যক্‌রূপে মস্তকে ধারণ করিবে। কারণ, আশ্রয়লাভের নিমিত্ত বন্ধুজন উপস্থিত হইলে, পূর্ব্বের উপকার স্মরণ করিয়া, ক্ষুদ্র ব্যক্তিও তাহাকে আশ্রয়দানে বিমুখ হয় না; আর আম্রকূটের ন্যায় যে উন্নত, তাহার বিষয়ে আর বক্তব্য আছে কি ॥১৭॥

**अन्वयः**—परिणतफलद्योतिभिः काननाम्रैः छन्नोपान्तः अचलः स्निग्धवेणीसवर्णे त्वयि शिखरं आरूढ़े (सति), मध्ये श्यामः, शेषविस्तारपाण्डुः, भुवः स्तनः इव नूनं अमरमिथुनप्रेक्षणीयां अवस्थां यास्यति ॥१८॥

**चञ्चला**—छन्नोपान्त इति। परिणतैः परिपक्वैः फलैर्द्योतन्ते

(१८) मेघश्याम इति पाठान्तरम्।

शोभन्ते इति तैः, काननाम्रैर्वन्याम्रवृक्षैः, छन्ना आवृता उपान्ताः सर्वतः प्रान्तभागा यस्य सः । एतेन पर्वतप्रान्तभागानां पाण्डुवर्णत्वं सूचितम् । अचल आम्रकूटपर्वतः, स्निग्धवेणीसवर्णे चिक्कण-वद्धकेश-समान-कृष्ण-वर्णे त्वयि मेघे, शिखरं शृङ्गम् आरूढे सति, मध्ये मध्यभागे श्यामः श्यामवर्णः, शेषविस्तारे मध्येतरविस्तृतदेशे पाण्डुः पाण्डुरवर्णः, भुवः पृथिव्याः स्तन इव, नूनं निश्चितम् अमरमिथुनानां खेचरदम्पतीनाम्, प्रेक्षणीयां कौतुकेनावलोकनीयाम्, अवस्थां दशाम्, यास्यति प्राप्स्यति । कामिपुरुषाणां परस्त्रीस्तनप्रेक्षणादेव कौतुकम्, स्त्रीणान्तु पृथिव्याः स्वविलक्षणैकमालस्तनप्रेक्षणादेव कौतुकमित्याशयः ।

अत्र स्निग्धवेणीसवर्णे इत्यत्र आर्थी उपमा, चतुर्थचरणे तु वस्तुतः पृथिव्याः स्तनाभावात्तस्य च सम्भावनात् भावाभिमानिनी वाच्या जात्युत्प्रेक्षा, अनयोरङ्गाङ्गिभावेन सङ्करः । ध्वनिस्तु सञ्जीवन्यामेव दर्शितः ॥१८॥

सञ्जीवनी—छन्नेति । हे मेघ ! परिणतैः परिपक्वैः फलैर्द्योतन्त इति तथोक्तैः, आषाढे वनचूताः फलन्ति पच्यन्ते च मेघवातेनेत्याशयः । काननाम्रैर्वनचूतैः छन्नोपान्त आवृतपार्श्वः, अचल आम्रकूटाद्रिः स्निग्धवेणीसवर्णे मसृणकेशबन्धच्छाये श्यामवर्णे इत्यर्थः, "वेणी तु केशबन्धे जलस्रुतौ" इति यादवः । त्वयि शिखरं शृङ्गम् आरूढे सति, "यस्य च भावेन भावलक्षणम्" इति सप्तमी । मध्ये श्यामः, शेषे मध्यादन्यत्र, विस्तारे परितः, पाण्डुर्हरिणः, "हरिणः पाण्डुरः पाण्डुः" इत्यमरः । भुवः स्तन इव अमरमिथुनानां खेचराणामिति भावः, स्तनत्वेनोत्प्रेक्षणीयां दर्शनीयाम्, अवस्थां नूनं यास्यति मिथुनग्रहणं कामिनामेव प्रेक्षा सम्भवतीति कृतम् । यथा परिश्रान्तः

स्थित्वा तस्मिन् वनचरवधूभुक्तकुञ्जे मुहूर्त्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥१९॥

कश्चित् कामी कामिनीनां कुचकलसे विश्रान्तः सन् स्वपिति, तद्वद्-भवानपि भुवो नायिकायाः स्तने इति ध्वनिः ॥१८॥

हिन्दी—पक्कताकों सूचित करते हुये आम्र फलोंसे जिसका पार्श्वदेश आवृत है, ऐसा आम्रकूट पहाड़का शिखरके ऊपर मसृण बालके माफिक जब तुम चढ़ोगे, तब वह पहाड़ मध्यदेशमें काला और अन्यदेशमे गौर (अतएव) पृथ्वीका स्तनकी तरह (हुया) आकाशचारिओंका मिथुनोंके देखने लायक कान्ति ग्रहण करेगा ॥१८॥

বাঙ্গালা—হে মেঘ! পক্কফলে পরিশোভিত বন্য আম্রবৃক্ষসমূহে আম্রকূটের সমস্ত প্রান্তভাগ আবৃত রহিয়াছে; এই অবস্থায় চিক্কণ কেশবদ্ধ বেণীর ন্যায় কৃষ্ণবর্ণ শরীরে তুমি উহার শৃঙ্গে আরোহণ করিলে, ঐ আম্রকূটপর্ব্বত, মধ্যস্থানে শ্যামবর্ণ এবং অবশিষ্ট বিস্তৃতভাগে পাণ্ডুবর্ণ পৃথিবীর স্তনের ন্যায় নিশ্চয়ই খেচরদম্পতিগণের কৌতুকের সহিত দর্শনীয় অবস্থা প্রাপ্ত হইবে ॥১৮॥

अन्वयः—वनचरवधूभुक्तकुञ्जे तस्मिन् मुहूर्त्तं स्थित्वा तोयोत्सर्गद्रुततरगतिः (सन्) तत्परं वर्त्म तीर्णः (त्वम्,) उपलविषमे विन्ध्यपादे विशीर्णां रेवां गजस्य अङ्गे भक्तिच्छेदैः विरचितां भूतिं इव द्रक्ष्यसि ॥१९॥

चञ्चला—स्थित्वेति। वनचरवधूभिः किरातस्त्रीभिः भुक्ताः सम्भोग-स्थानीकृताः कुञ्जा लताद्यावृतस्थानानि यस्मिन् तस्मिन्, एतेन तद्दर्शनात्

(१९) तोयोत्सर्गादद्रुततरगतिः, तोयोत्सर्गाल्लघुतरगतिः, इति पाठभेदौ।

कौतुकलाभ इति सूचितम् । तस्मिन् आम्रकूटपर्वते, मुहूर्त्तं किञ्चित्-कालं स्थित्वा, तोयोत्सर्गेण जलवर्षणेन द्रुततरा पूर्वापेक्षया शीघ्रतरा गतिर्यस्य स तादृशः सन्, तत्परम्, वर्त्म गन्तव्यपथं तीर्णः अतीतस्त्वम् उपलविषमे पाषाणैर्बन्धुरीकृते कोपेन पाषाणमयस्थानसञ्चरणात् चत-विक्षते च, विन्ध्यस्य पर्वतस्य पादे प्रत्यन्तपर्वते प्रियतमस्य चरणे च, विशीर्णां क्षीणभावेन प्रवाहितां मन्मथपीड़या क्षीणाङ्गीञ्च, रेवां नर्म्मदां नदीं तत्र पतितां काञ्चित् कामिनीञ्च, गजस्य अङ्गे, भक्तिच्छेदै रेखाखण्डैः, विरचितां निर्म्मिताम्, भूतिं पत्रावलीमिव द्रक्ष्यसि । तेन च महातीर्थदर्शनेन पवित्रो भविष्यसीति द्योत्यते ।

अत्र रेवाविन्ध्ययोर्लिङ्गसाम्येन कार्य्यसाम्येन च नायिकानायक-व्यवहारसमारोपात् समासोक्तिः, श्रौती उपमा च, अनयोरङ्गाङ्गिभावेन सङ्करः । तृतीयचरणे वाक्यसमाप्तौ रेवामित्यस्य उपमानत्वेनाचिप्त-विशेषणतया भूतिमित्यस्य पुनरुपादानेऽपि न समाप्तपुनरात्ततादोषः, समाप्तवाक्यान्तर्गतपदविशेषस्य समानाधिकरणविशेषणतयैव पदान्तरोपा-दाने तद्विषयत्वस्य विवक्षितत्वात् तथैव शोतुरुद्वेगजननात् । एव-मन्यत्राप्यवधेयम् ।

आर्य्यावर्त्तदाक्षिणात्ययोर्मध्यवर्त्ती विन्ध्यपर्वतः, चरणाद्रिनामा च तत्पाद इति प्रसिद्धमेव ॥१६॥

सञ्जीवनी—स्थित्वेति । हे मेघ ! वने चरन्तीति वनचराः, "तत्पुरुषे कृति बहुलम्" इति बहुलग्रहणात् लुग् भवति । तेषां वधूभि-र्भुक्ताः कुञ्जा लतागृहा यत्र तस्मिन्, "निकुञ्जकुञ्जौ वा क्लीवे लतादि-पिहितोदरे" इत्यमरः । तत्र ते नयनविनोदोऽस्तीत्यर्थः । तस्मिन् आम्रकूटे, मुहूर्त्तमल्पकालं न तु चिरम्, स्वकार्य्यविरोधादिति भावः । "मुहूर्त्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च" इति शब्दार्णवः । स्थित्वा

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टिः
जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।
अन्तःसारं घन ! तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्व्वो भवति हि लघुः पूर्णता गौरवाय ॥२०॥

---

विश्रम्य तोयोत्सर्गेण "त्वामासार" इत्युक्तवर्षणेन द्रुततरगतिः लाघवाद्वेतोरतिक्षिप्रगमनः सन्, तस्मादाम्रकूटात् परम् अनन्तरम् ; वर्त्म मार्गं तीर्णः अतिक्रान्तः, उपलैः पाषाणैर्विषमे, विन्ध्यस्याद्रेः पादे प्रत्यन्तपर्वते, "पादाः प्रत्यन्तपर्वताः" इत्यमरः । विशीर्णां समन्ततो विसृमराम्, एतेन कस्याश्चित् कामुक्याः प्रियतमचरणपातोऽपि ध्वन्यते । रेवां नर्म्मदाम्, "रेवा तु नर्म्मदा सोमोद्भवा मेखलकन्यका" इत्यमरः । गजस्य अङ्गे शरीरे भक्तयो रचना रेखा इति यावत्, "भक्तिर्निषेवणे भागे रचनायाम्" इति शब्दार्णवः । तासां छेदैर्भङ्गिभिः, विरचितां भूतिं शृङ्गारमिव भसितमिव वा, "भूतिर्मातङ्गशृङ्गारे जातौ भस्मनि सम्पदि" इति विश्वः । द्रक्ष्यसि । अयमपि महांस्ते नयनकौतुकलाभ इति भावः ॥१९॥

हिन्दी—( हे जलद ! ) वनवासियोंका चौरतोंसे जिसका कुञ्ज भुक्त हुआ है । तिस आम्रकूट पहाड़में थोड़ीसा ठहर कर पानी छोड़नेसे शीघ्रगति होकर ( हलके वदेसे ) उस के अनन्तर रास्ता डिङ्गकर पत्थरोंसे दुर्गम विन्ध्य पहाड़के स्थान विशेषमें विशीर्ण हुई रेवा नदी देखो गे । ( किस तरह ) हाथीके शरीर पर रेखाओंसे विरचित भस्म माफिक ॥१९॥

बाङ्गाला—याहार लतागृह सकल किरातरमणीगणेर विहारस्थान, सेइ आम्रकूटपर्व्वते कियत्काल अवस्थान करिया, वर्षणवशतः शरीर लघु

হওয়ায় অপেক্ষাকৃত দ্রুতগতিতে পরবর্ত্তী পথ অতিক্রম করিতে থাকিবে; তাহার পর, হস্তীর শরীরে খণ্ড খণ্ড রেখাদ্বারা-নির্ম্মিত পত্রাবলীর ন্যায়, প্রস্তরবন্ধুর বিন্ধ্যপর্ব্বতের পাদদেশে প্রবাহিতা নর্ম্মদানামে একটী নদী দেখিতে পাইবে ॥১৯॥

**अन्वयः**—( हे ) घन ! वान्तवृष्टिः ( त्वं ) तिक्तैः वनगजमदैः वासितं जम्बूकुञ्जप्रतिहतरयं तोयं आदाय गच्छेः। अनिलः अन्तःसारं त्वां तुलयितुं न शक्ष्यति । हि रिक्तः सर्वः लघुः भवति, पूर्णता गौरवाय ( भवति ) ॥२०॥

**चञ्चला**—तस्या इति । हे घन ! मेघ ! वान्ता उद्‌गीर्णा वृष्टिर्वर्षं भुक्तवस्तु च येन स तादृशस्त्वं वातरोगी जनश्च, तिक्तैः सुगन्धिभिः तिक्तरसविशिष्टैश्च वनगजमदैर्वन्यहस्तिदानजलैः, वासितं सुरभीकृतं दत्तभावनञ्च, जम्बूकुञ्जैर्घनजम्बूवनैरित्यर्थः प्रतिहतो मन्दीकृतो रयो वेगो यस्य तत्तथोक्तम्, तस्या रेवायाः, तोयं जलम्, आदाय गृहीत्वा पीत्वा च गच्छेः। तेन किं नाम फलमित्याह, अन्तरिति। अनिल आकाशस्थः शरीरस्थश्च वायुः, अन्तरभ्यन्तरे सारो बलं यस्य तं तादृशं त्वां वातरोगिणञ्च, तुलयितुम् इतस्ततश्चालयितुम् अविरतं कम्पयितुञ्च, न शक्ष्यति । हि तथाहि, रिक्तः अन्तःसारशून्यः, सर्व एव पदार्थः, लघुर्भारहीनो भवति, किन्तु पूर्णता अन्तःसारवत्ता गौरवाय भारवत्त्वाय भवतीत्यन्वयः ।

अत्र प्रथमार्द्धे "अयमत्र ध्वनिः" इत्यादि मल्लिनाथोक्तिर्द्रष्टव्या । तृतीयपादे सञ्चालनाशक्तत्वरूपकार्य्येण प्रथमार्द्धगततोयग्रहणरूपकारणस्य समर्थनादेकोऽर्थान्तरन्यासः, चतुर्थपादगतसामान्येन तृतीयपादगतविशेषस्य समर्थनादपरश्चार्थान्तरन्यासः, एवं चतुर्थपाद एव लघुपूर्णतारूपस्य कर्तृद्वयस्य भवतीत्येकया क्रियया अभिसम्बन्धात्तुल्ययोगिता च इत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

तथा तिक्तशब्दस्य तिक्तरसार्थे प्रसिद्धत्वात् अत्र तु सुगन्ध्यर्थे प्रयोगात् प्रसक्तोऽपि निहतार्थतादोषः, "स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते" इति साहित्यदर्पणोक्तेरत्र ध्वनिविषयतया न सम्पन्नः। एवं वान्तेति गौणार्थे प्रयोगान्न ग्राम्यतादोषः। तथा च काव्यादर्शे—"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यापाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते॥"

किन्तु लघुरिति प्रथमान्तत्वेन प्रक्रम्य गौरवायेति चतुर्थ्यन्ताभिधानात् प्रत्ययविषयो भग्नप्रक्रमतादोषः; तथा लघुरित्यनन्तरं भेदबोधकः किन्तुशब्दस्तुशब्दो वा वक्तव्य एव किन्तु नोक्त इति वाच्यानभिधानदोषश्च सम्पन्न एव। तौ तु "रिक्तः सर्वो जगति हि लघुः किन्तु पूर्णो गुरुः स्यात्" इति पाठेन परिहार्य्यौ॥२०॥

सञ्जीवनी—तस्या इति। हे मेघ! वान्तवृष्टिः उद्गीर्णवर्षः सन् कृतवमनश्च व्यज्यते, तिक्तैः सुगन्धिभिः तिक्तरसवद्भिश्च, "तिक्तो रसे सुगन्धौ च" इति विश्वः। वनगजमदैर्वासितं सुरभितं भावितञ्च; "हिमवद्विन्ध्यमलया गजानां प्रभवाः" इति विन्ध्यस्य गजप्रभवत्वादिति भावः। जम्बूकुञ्जैः प्रतिहतरयं प्रतिबद्धवेगं सुखपेयमित्यर्थः। एतेन लघुत्वं कषायभावना च व्यज्यते। तस्या रेवायास्तोयम् आदाय गच्छेर्व्रज। हे मेघ! अन्तःसारो बलं यस्य तं त्वाम्, अनिल आकाशवायुः शरीरस्थश्च गम्यते, तुलयितुं न शक्ष्यति शक्तो न भविष्यति। तथा हि रिक्तः अन्तःसारशून्यः सर्व्वोऽपि लघुर्भवति प्रकम्प्यो भवतीत्यर्थः। पूर्णता सारवत्ता गौरवाय अप्रकम्प्यत्वाय भवतीत्यर्थः। अयमत्र ध्वनिः—आदौ वमनशोधितस्य पुंसः पश्चात् श्लेष्मशोषणाय लघुतिक्तकषायाम्बुपानात् लब्धबलस्य वातप्रकोपो न स्यादिति। यथाह वाग्भटः—"कषायाश्चाहिमास्तस्य विशुद्धौ श्लेष्मणो हिताः। किमु तिक्ताः कषाया

नीपं दृष्ट्वा हरितकपिशं केशरैरर्द्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ।
जग्ध्वाऽरण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥२१॥

वा ये निसर्गात् कफापहाः ॥ क्षतभुक्तैः क्रमात् पीतपेयादैः पथ्य-भोजिनः । वातादिभिर्न बाधा स्यादिन्द्रियैरिव योगिनः ॥" इति ॥२०॥

हिन्दी—हे जलद ! पानी बरसनेके बाद नीता वनगजोंका मदसे वासित होकर तिसकी जम्बुकुञ्जोंसे जिसकी वेग रुक गया, ऐसा पानी लेकर चलो । हे मेघ ! अल्पशक्तिवाले तुमको नहीं उड़ा (जल्दीसे) सकेगी । (क्योंकि) अन्तःशक्तीशून्य सबहीको लघु माना जाता है, (इतवार्त्ता) पूर्णता गौरव से होता है ॥२०॥

বাঙ্গালা—মেঘ ! বৃষ্টি করার পর তুমি লঘু (হাল্কা) হইয়া যাইবে; সুতরাং বন্যহস্তিগণের সুগন্ধি মদজলে সুবাসিত এবং ঘনসন্নিবিষ্ট জম্ব-(জাম) বৃক্ষসমূহে বেগ রুদ্ধ হওয়ায় মন্দ মন্দ প্রবাহী নর্ম্মদার জল গ্রহণ করিয়া যাইতে থাকিবে; তাহা হইলে তুমি সবল থাকিবে বলিয়া বায়ু আর তোমাকে ইতস্ততঃ সঞ্চালিত করিতে পারিবে না। কারণ, অন্তঃসারশূন্য সমস্ত পদার্থই লঘু হইয়া যায়; আর অন্তঃসারবত্তাই গুরুত্বের কারণ হইয়া থাকে ॥২০॥

अन्वयः—(हे मेघ !) सारङ्गाः अर्द्धरूढैः केशरैः हरितकपिशं नीपं दृष्ट्वा अनुकच्छं आविर्भूतप्रथममुकुलाः कन्दलीः जग्ध्वा च अरण्येषु अधिकसुरभिं उर्व्याः गन्धं आघ्राय च जललवमुचः ते मार्गं सूचयिष्यन्ति ॥२१॥

(२१) दग्धारण्येषु । नवजलमुचः । इति पाठभेदौ ।

चञ्चला—नीपमिति। हे मेघ! सारङ्गा मृगाः, अर्द्धं रूढ़ैः उत्थितैः केशरैः, हरितकपिशं पालाशकपिशोभयवर्णम्, नीपं कदम्बपुष्पम्, दृष्ट्वा कच्छेषु जलप्रायदेशेषु इत्यनुकच्छम्, आविर्भूताः प्रथमा मुकुला यासां तास्तथोक्ताः, कन्दलीः कदलीः, जग्ध्वा भक्षयित्वा च, तथा अरण्येषु वनेषु अधिकसुरभिम् अतीव नासिकातृप्तिकरम्, उर्व्या भूमेः, गन्धमाघ्राय च, जललवमुचो जलविन्दुवर्षिणः, ते तव, मार्गं गमनपथम्, सूचयिष्यन्ति लोकेषु अनुमापयिष्यन्ति।

अत्र वृष्ट्यनुमानं प्रति कदम्बकुसुमदर्शनरूपे एकस्मिन् कारणे सत्यपि सारङ्गकर्तृककन्दलीभक्षणरूपकारणान्तरोपन्यासात् समुच्चयः; तत्कृतविच्छित्तिविशेषाच्च तत्तत्साधनजनितात् वृष्टिरूपसाध्यज्ञानादनुमानालङ्कारः। तथा "जग्ध्वा" इत्यत्र 'ग्ध्वा' इति पदांशः श्रुतिदुःखावह इति पदांशगतो दुःश्रवत्वदोषः, स च "भुक्त्वा" इति पाठेन समाधेयः ॥२१॥

सञ्जीवनी—नीपमिति। सारङ्गा मतङ्गजाः कुरङ्गा वा, "सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे" इति विश्वः। अर्द्धरूढ़ैः एकदेशोद्गतैः, केशरैः किञ्जल्कैः, हरितं पालाशवर्णम्, "पालाशो हरितो हरित्" इत्यमरः। कपिशं श्यामवर्णम्, "श्यामः स्यात् कपिशे" इत्यमरः। हरितञ्च तत् कपिशञ्च हरितकपिशम्, "वर्णो वर्णेन" इति समासः। नीपं स्थलकदम्बकुसुमम्, दृष्ट्वा सम्प्रेक्ष्य विदित्वेति यावत्, तथा कच्छेषु अनूपेषु अनुकच्छम्, "अव्ययं विभक्ति" इत्यादिना विभक्त्यर्थे अव्ययीभावः, "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः। आविर्भूताः प्रथमाः प्रथमोत्पन्ना मुकुला यासां ताः कन्दलीर्भूमिकदलीः "द्रोणपर्णी स्निग्धकन्दा कन्दली भूकदल्यपि" इति शब्दार्णवः। जग्ध्वा भक्षयित्वा, "अदो जग्धिः" इति जग्ध्यादेशः। अरण्येषु अधिकसुरभिम् अतिघ्राण-

तर्पणाम्। "दग्धारण्येषु" इति पाठे दग्धमित्यधिकविशेषणम्, अर्थवशात् कन्दलीश्च दृष्ट्वा इत्यन्वयो द्रष्टव्यः। उर्व्या भूमेः, गन्धमाघ्राय जललवमुचो मेघस्य ते तव मार्गं सूचयिष्यन्ति अनुमापयिष्यन्ति। यत्र यत्र वृष्टिकार्य्यं नीपकुसुमादिकं दृश्यते तत्र तत्र त्वया वृष्टमित्यनुमीयत इत्यर्थः॥२१॥

अम्भोविन्दुग्रहणचतुरांश्चातकान् वीक्षमाणाः
श्रेणीभूताः परिगणनया निर्द्दिशन्तो बलाकाः।
त्वामासाद्यस्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कम्पानि प्रियसहचरीसम्भ्रमालिङ्गितानि॥

**सञ्जीवनी**—अम्भ इति। (२१—२२ श्लोकयोर्मध्ये) प्रक्षिप्तमपि व्याख्यायते। अम्भोविन्दूनां वर्षोदविन्दूनां ग्रहणे "सर्वसहापतितमम्बु न चातकस्य हितम्" इति शास्त्रात् भूस्पृष्टोदकस्य तेषां रोगहेतुत्वात् अन्तराल एव स्वीकारे चतुरान् चातकान् वीक्षमाणाः कौतुकात् पश्यन्तः, श्रेणीभूता बद्धपङ्क्तीः, अभूततद्भावे च्विः। बलाका वकपङ्क्तीः परिगणनया एका द्वे तिस्र इति संख्यानेन निर्द्दिशन्तो हस्तेन दर्शयन्तः सिद्धाः, स्तनितसमये त्वद्गर्ज्जितकाले सोत्कम्पानि उत्कम्पपूर्वकाणि, प्रियसहचरीणां सम्भ्रमेण आलिङ्गितानि आसाद्य स्वयं ग्रहणासम्पसुखमनुभूयेत्यर्थः, त्वां मानयिष्यन्ति त्वन्निमित्तत्वात् सुखलाभस्येति भावः॥

**हिन्दी**—सारङ्गी ने आधा उद्गत केशरोंसे हरा और कपिश वर्णयुक्त स्थलकदम्बफुल देखकर और अनूप देशमें प्रगठ हुई कन्दों को जिनकी मुकुल पहेला उत्पन्न हुये भोजन कर, वनोंसे पृथ्वीकी अत्यन्त सुगन्ध सूंघकर, पानी छोड़नेवाले तुह्मारे रास्ता सूचित करेंगी॥२१॥

**বাঙ্গালা**—হে মেঘ! হরিণগণ, অর্দ্ধসমুৎপন্ন কেশরসমূহে হরিৎ ও কপিশবর্ণ কদম্বপুষ্প দর্শন করিয়া, জলের নিকটে ভূমিকদলীর প্রথমোৎপন্ন মুকুল ভক্ষণ করিয়া এবং বনময় স্থানে ভূমির মনোহর গন্ধ আঘ্রাণ

उत्पश्यामि द्रुतमपि सखे ! मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्व्वते पर्व्वते ते।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥२२॥

করিয়া, যে পথে তুমি জলবিন্দু বর্ষণ করিয়া যাইবে সেই পথ লোকসমাজে সূচনা করিয়া দিবে ॥২১॥

अन्वयः—(हे) सखे! मत्प्रियार्थं द्रुतं यियासोः अपि ते ककुभसुरभौ पर्व्वते पर्व्वते कालक्षेपं उत्पश्यामि। सजलनयनैः शुक्लापाङ्गैः केकाः स्वागतीकृत्य प्रत्युद्यातः; भवान् कथं अपि आशु गन्तुं व्यवस्येत् ॥२२॥

चञ्चला—उत्पश्यामीति। हे सखे! मेघ! मत्प्रियार्थं मम प्रीतिसम्पादककार्य्यार्थम्, द्रुतं यियासोरपि गन्तुमिच्छोरपि, ते तव, ककुभैः कुटजपुष्पैः सुरभिः सौरभवान् तस्मिन्, पर्व्वते पर्व्वते प्रतिपर्व्वतम्, कालक्षेपं भाविनं कालविलम्बम्, उत्पश्यामि सम्भावयामि। कथमेतदित्याह शुक्लेति। सजलनयनैर्बहुकालानन्तरं बन्धुदर्शनात् सानन्दाश्रुभिः, शुक्लापाङ्गैर्मयूरैः, केका निजवाणीः, स्वागतीकृत्य तव स्वागतप्रश्नवाक्यीकृत्य, प्रत्युद्यातः सम्भाषणार्थं प्रत्युद्गतः भवान् त्वम्, कथमपि केनापि प्रकारेण, आशु शीघ्रम्, गन्तुं व्यवस्येत् चेष्टेत, अन्यथा मत्कार्य्यव्याघातो भवेदिति भावः।

अत्र पूर्व्वार्द्धवाक्यार्थं प्रति परार्द्धगतप्रथमवाक्यार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गम्, तथा केकासु स्वागतप्रश्नवाक्यत्वारोपस्य प्रकृतप्रत्युद्गमनोपयोगितया परिणाम इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥२२॥

(२२) समयनजलैरिति पाठान्तरम्।

सञ्जीवनी—उत्पश्यामीति। हे सखे! मेघ! मत्प्रियार्थं द्रुतं क्षिप्रम्, यथा तथा, "लघु क्षिप्रमरं द्रुतम्" इत्यमरः। यियासो-र्यातुमिच्छोरपि। यातेः सनन्ताडुप्रत्ययः। ते तव, ककुभैः कुटजकुसुमैः, सुरभौ सुगन्धिनि "ककुभः कुटजेऽर्जुने" इति शब्दार्णवः। पर्वते पर्वते प्रतिपर्वतम्, वीप्सायां द्विरुक्तिः। कालक्षेपं कालविलम्बम्, "क्षेपो विलम्बे निन्दायाम्" इति विश्वः। उत्पश्यामि उत्प्रेक्षे। विलम्बहेतुं प्रदर्शयन् आशुगमनं प्रार्थयते शुक्लेति। सजलानि सानन्दवाष्पाणि नयनानि येषां तैः, शुक्लापाङ्गैर्मयूरैः, "मयूरो बर्हिणो बर्ही शुक्लापाङ्गः शिखावलः" इति यादवः। केकाः स्ववाणीः, "केका वाणी मयूरस्य" इत्यमरः। स्वागतीकृत्य प्रत्युद्यातः प्रत्युद्गतः कृतातिथ्य इत्यर्थः। भवान् कथमपि यथाकथञ्चित् आशु गन्तुं व्यवस्येत् उद्युञ्जीत, प्रार्थने लिङ्। "शेषे प्रथमः" इति प्रथमपुरुषः। शेषत्वञ्च भवच्छब्दो युष्म-दस्मच्छब्दव्यतिरेकात्। "स्वागतीकृत्य केकाः" इत्यत्र केकासु आरोप्य-माणस्य स्वागतवचनस्य प्रकृतप्रत्युद्गमनोपयोगात् परिणामालङ्कारः। तदुक्तमलङ्कारसर्वस्वे—"आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः" इति ॥२२॥

हिन्दी—हे सखे! मेरी प्रीतके वास्ते जलदीसे भी जानेकी इच्छावाले तुम्हारे कुटज फुलोंसे सुगन्धित पहाड़ पहाड़से देर विवेचता हुं। (इसवास्ते) सजल नयन मयूरोंसे केकावाणी स्वागत कर अभ्यर्थित हुये तुम किसी तौरसे आने के लिये कोशिश करोगे ॥२२॥

বাঙ্গালা—সখে! তুমি আমার প্রীতিকর কার্য্য সম্পাদনের নিমিত্ত দ্রুত যাইতে ইচ্ছা করিলেও, কুটজপুষ্পের সৌরভে আমোদিত প্রত্যেক পর্ব্বতে তোমার বিলম্ব হইবে বলিয়া আমি মনে করি। কারণ, আনন্দাশ্রুনেত্রে ময়ূরগণ স্ব স্ব কেকারবকে স্বাগতপ্রশ্নবাক্যে পরিণত

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नैः
नीड़ारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥२३॥

করিয়া তোমার প্রত্যুদ্গমন করিবে ; তখন তুমি কোনও প্রকারে শীঘ্র যাইবার জন্য চেষ্টা করিবে ॥২২॥

अन्वयः—( हे मेघ ! ) त्वयि आसन्ने ( सति ) दशार्णाः सूचिभिन्नैः केतकैः पाण्डुच्छायोपवनवृतयः गृहबलिभुजां नीड़ारम्भैः आकुलग्रामचैत्याः परिणतफलश्याम-जम्बूवनान्ताः कतिपयदिनस्थायिहंसाः सम्पत्स्यन्ते ॥२३॥

चञ्चला—पाण्डिति । हे मेघ ! त्वयि आसन्ने सन्निहिते सति, दशार्णास्तदाख्यो देशविशेषः, "बहुत्ववदस्यादेः" इत्यादिना बहुवचनम्, सूचिषु मुकुलाग्रभागेषु भिन्नैः प्रस्फुटितैः, केतकैः केतकीपुष्पैः, पाण्डु-च्छायाः पाण्डुरवर्णाः, उपवनानां वृतयः प्राचीराणि येषु ते तादृशाः, गृहबलिभुजां काकादीनां ग्राम्यपक्षिणाम्, नीड़ारम्भैः कुलायनिर्म्माणैः, आकुला व्याप्ताः ग्रामचैत्यानि रथ्यावृक्षा येषु ते तथोक्ताः, परिणतैः परिपक्वैः फलैः, श्यामानि श्यामलवर्णानि यानि जम्बूवनानि तैरन्ताः सुन्दराः तथा कतिपयेष्वेव दिनेषु स्थायिनो हंसा येषु ते तथाभूताश्च, सम्पत्स्यन्ते भविष्यन्ति ।

दशार्णा देशोऽयं मालवदेशपूर्वांशो वेत्रवतीनदीतीरवर्त्ती । अन्ये तु वर्त्तमान-"छत्रिशगड़े—" नामकदेशस्यांशविशेषो दशार्णदेश इति वदन्ति ॥२३॥

(२३) नीड़ारब्धै । परिणतिफल···, फलपरिणति···। इति पाठभेदाः ।

सञ्जीवनी—पाण्डु,ति। हे मेघ! त्वयि आसन्ने सन्निकृष्टे सति दशार्णा नाम जनपदाः, सूचिभिन्नैः सूचिषु मुकुलाग्रेषु भिन्नैः- र्विकसितैः, "मुकुलाग्रेषु सूचिः स्यात्" इति शब्दार्णवे। केतकैः केतकीकुसुमैः, पाण्डुच्छाया हरितवर्णा उपवनानां वृतयः कण्टकशाखा-वरणा येषु ते तथोक्ताः, "प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः" इत्यमरः। तथा गृहबलिभुजां काकादिग्रामपक्षिणाम्, नीड़ारम्भैः कुलायनिर्म्माणैः, "कुलायो नीड़मस्त्रियाम्" इत्यमरः। चित्याया इमानि चैत्यानि रथ्या वृक्षाः "चैत्यमायतनं बुद्धवन्द्ये चोद्देशपादपे" इति विश्वः। आकुलानि सङ्कीर्णानि ग्रामेषु चैत्यानि येषु ते तथोक्ताः, तथा परिणतैः पक्वैः फलैः श्यामानि यानि जम्बूवनानि तैः अन्ता रम्याः "मृतावववसिते रम्ये समाप्तावन्त इष्यते" इति शब्दार्णवः। तथा कतिपयेष्वेव दिनेषु स्थायिनो हंसा येषु ते तथोक्ताः, एवंविधाः सम्पत्स्यन्ते भविष्यन्ति। "पोटायुवतिस्तोककतिपय—" इत्यादिना कतिपयशब्दस्य उत्तरपदत्वेऽपि न तच्छब्दस्योत्तरत्वमस्ति, अस्य शास्त्रस्य प्रायिकत्वात् ॥२३॥

हिन्दी—हे जलद! तुम्हारी आसन्न दशा में दशार्णदेश मुकुलाग्रोंसे विकसित केतकी कुसुमोंसे हरितवर्ण कण्टकोंकी शाखा वरणशाली हुआ करेगा। तथा काकादियोंसे प्रारम्भ घोसलों करके, जिनका ग्रामोंका तमाल पेड़ व्याप्त है। तथा पके हुये फलोंसे श्याम जम्बूवनों करके जो रम्य है। तथा जो कुछदिनतक ठहरे हुये हंसोंसे होवेगा ॥२३॥

বাঙ্গালা—হে মেঘ! তুমি নিকটবর্ত্তী হইলে, দশার্ণদেশের উদ্যান-সমূহের প্রাচীরগুলি উপরিপ্রস্ফুটিত কেতকীপুষ্পসমূহে পাণ্ডুবর্ণ হইবে, কাকপ্রভৃতি গ্রাম্যপক্ষিগণের কুলায়নির্ম্মাণে (বাসা তৈয়ারী করায়) পথের বৃক্ষসমূহ ব্যাপ্ত হইয়া যাইবে, ফলসমূহ পরিপক্ব হওয়ায়, শ্যামবর্ণ

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यस्मात्
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्म्मि ॥२४॥

জম্বূবনে সে দেশ মনোহর হইবে এবং সে দেশে তখনও কয়েক দিন হংসগণ অবস্থান করিবে ॥২৩॥

अन्वयः—दिक्षु प्रथितविदिशालक्षणां तेषां राजधानीं गत्वा सद्यः कामुकत्वस्य अविकलं फलं लब्धा, यस्मात् स्वादु वेत्रवत्याश्चलोर्म्मि सभ्रूभङ्गं मुखं इव पयः तीरोपान्तस्तनितसुभगं पास्यसि ॥२४॥

चञ्चला—तेषामिति। दिक्षु प्रथितं विख्यातं विदिशालक्षणं विदिशेति नाम यस्यास्ताम्, तेषां दशार्णानाम्, राजधानीं गत्वा, सद्यस्तत्क्षणादेव कामुकत्वस्य रिरंसोः, अविकलं सम्पूर्णं फलम्, लब्धा लप्स्यते, त्वयेति शेषः। यस्माद्धेतोः, स्वादु मधुरम्, चलाः स्पन्दमाना ऊर्म्मयस्तरङ्गा यस्य तत्, वेत्रवत्यास्तदाख्याया नद्याः, सभ्रूभङ्गं मुखं मुखैकदेशमधरमिव पयो जलम्, तीरस्य उपान्ते समीपे स्तनितेन गर्ज्जितेन मणितेन च सुभगं मनोहरं यथा स्यात्तथा पास्यसि। कामिनः कामिन्यधरपानं सुख्यमेव प्रयोजनमित्याशयः।

अत्र पुंस्त्रीलिङ्गाभ्यां मेघवेत्रवत्योर्नायकनायिकाव्यवहारसमारोपात् समासोक्तिः, सा च वेत्रवत्या एव सभ्रूभङ्गं मुखमिवेति जात्युत्प्रेक्षया सङ्कीर्य्यते। केचित्तु नायिकाया मुखमिवेति व्याचक्षाणा उपमां वदन्ति।

तथा लब्धेति कर्म्मप्रत्ययान्तक्रियायाः 'त्वया' इति कर्त्तृपदानभि-

(२४) फलमतिमहत्। लब्धा। इति पाठान्तरद्वयम्।

धानेन तदवबोद्धुं श्रोतुरायासोत्पत्तेर्न्यूनपदत्वदोषः ; स च "लप्स्यसे कामितायाः" इति पाठेन समाधेयः। न च तादृशपाठेऽपि त्वमिति कर्त्तृपदानभिधानात् तद्दोषतादवस्थ्यमेवेति वाच्यम्, परार्द्धे पास्यसीतिवत् लप्स्यस इति मध्यमपुरुषप्रयोगेणैव त्वमिति कर्त्तृपदस्य स्पष्टं प्रतीतेः।

विदिशायाः "भिल्सा" इति इदानीन्तनं नाम। वेत्रवती नदी तु विन्ध्याचलस्योत्तरतो निर्गत्य मालवदेशं प्रयागस्य नैऋतभागञ्चाप्लाव्य यमुनया सह सङ्गता ॥२४॥

सञ्जीवनी—तेषामिति। दिक्षु प्रथितं प्रसिद्धं विदिशेतिलक्षणं नामधेयं यस्यास्ताम्, "लक्षणं नाम्नि चिह्ने च" इति विश्वः। तेषां दशार्णानां सम्बन्धिनीम्, धीयन्तेऽस्यामिति धानी, "करणाधिकरणयोश्च" इति ल्युट्। राज्ञां धानी राजधानी, "कृद्योगलक्षणा षष्ठी समस्यते" इति वक्तव्यात् समासः। तां प्रधाननगरीम्, "प्रधाननगरी राज्ञां राजधानीति कथ्यते" इति शब्दार्णवः। गत्वा प्राप्य, सद्यः कामुकत्वस्य विलासितायाः, "विलासी कामुकः कामी स्त्रीपरो रतिलम्पटः" इति शब्दार्णवः। अविकलं समग्रम्, फलं प्रयोजनम्, लब्धा लप्स्यते, त्वयेति शेषः। कर्म्मणि ल्युट्। कुतः? यस्मात् कारणात्, स्वादु मधुरम्, चला ऊर्म्मयो यस्य तत् चलोर्म्मि तरङ्गितं वेत्रवत्या नाम नद्याः पयः, सभ्रूभङ्गं भ्रूकुटियुक्तं दशनपीड़येति भावः। मुखमिव अधरमिवेत्यर्थः। तीरोपान्ते तटप्रान्ते, यत् स्तनितं गर्ज्जितं तेन सुभगं यथा तथा, स्तनितशब्देन मणितमपि ध्वन्यते, "ऊद्ध्वं सुस्खलितकण्ठनासिकं हुङ्कृतं स्तनितमल्पघोषवत्" इति लक्षणात्। पास्यसि, पिबतेर्लृट्। "कामिनामधरास्वादः सुरतादतिरिच्यते" इति भावः ॥२४॥

हिन्दी—दिशाओं में प्रसिद्ध विदिशानामधेय दशार्ण की राजधानी में जानेसे

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतोः
त्वत्सम्पर्कात् पुलकितमिव प्रौढ़पुष्पैः कदम्बैः ।
यः पण्यस्त्रीरतिपरिमलोद्‌गारिभिर्नागराणाम्
उद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥२५॥

---

विलासिताका समय फल तुमको मिल जावेगा। कारण जिसवास्ते मधुर तरङ्गित वेत्रवती नदीके पानिको भ्रूकुटियुक्त वदनको माफिक किनारेके तरफ गर्जनसे सुन्दर जैसा पीवोगे ॥२४॥

बाङ्गाला—सर्व्वत्र विख्यात विदिशानामक दशार्णदेशेर राजधानीते गमन करिया सत्त्वरइ तुमि विलासितार सम्पूर्ण फल पाइबे। ये हेतु, वेत्रवतीनदीर भ्रूभङ्गसमन्वित मुखेर न्याय चञ्चल-तरङ्ग-समन्वित सुमधुर जल तीरेर निकट गर्ज्जनसहकारे पान करिबे ॥२४॥

अन्वयः—तत्र विश्रामहेतोः त्वत्सम्पर्कात् प्रौढ़पुष्पैः कदम्बैः पुलकितं इव नीचैराख्यं गिरिं अधिवसेः। यः पण्यस्त्रीरतिपरिमलोद्‌गारिभिः शिलावेश्मभिः नागराणां उद्दामानि यौवनानि प्रथयति ॥२५॥

चञ्चला—नीचैरिति। विश्रामहेतोः, तत्र विदिशाराजधानीसमीपे त्वत्सम्पर्कात् तव संसर्गात्, प्रौढ़ानि बाहुल्येनोत्पन्नानि पुष्पाणि येषु तैः, कदम्बैः कदम्बवृक्षैः, पुलकितं रोमाञ्चितमिव स्थितम्, एतेनास्य मेघबन्धुत्वं व्यज्यते, नीचैराख्यं नीचैरितिनामकम्, गिरिं पर्वतम्, अधिवसेः अधितिष्ठेः। यो नीचैर्गिरिः, पण्यस्त्रीणां वेश्यानां रतिषु परिमलान् विमर्द्दगन्धान् उद्‌गिरन्ति आविष्कुर्व्वन्तीति तैः, शिलावेश्मभिः प्रस्तररचितैर्गुहाभिरित्यर्थः, नागराणां तन्नगरवासिनां यूनाम्, उद्दामानि प्रगाढ़ानि यौवनानि प्रथयति प्रख्यापयति सूचयतीत्यर्थः।

अत्र पुलकितमिवेति पुलकोत्पत्तिक्रियाया उत्प्रेक्षणात् क्रियोत्प्रेक्षा, तथा पण्यस्त्रीरतिपरिमलोद्गारिशिलावेश्मरूपसाधनात् नागरिकयौवनोद्दामत्वरूपसाध्यज्ञानेन कविप्रौढोक्तिकृतविच्छित्त्या च अनुमानालङ्कारः, अनयोः परस्परनैरपेक्ष्यस्थितेः संसृष्टिः ॥२५॥

सञ्जीवनी—नीचैरिति। हे मेघ ! तत्र विदिशासमीपे, विश्रामो विश्रमः खेदापनयः, भावार्थे घञ् प्रत्ययः। तस्य हेतोर्विश्रामार्थमित्यर्थः। "षष्ठी हेतुप्रयोगे" इति षष्ठी। विश्रामेत्यत्र "नोदात्तोपदेशस्य मान्तस्यानाचमेः" इति पाणिनीये वृद्धिप्रतिषेधेऽपि "विश्रामो वा" इति चन्द्रव्याकरणे विकल्पेन वृद्धिविधानाद्रूपसिद्धिः। प्रौढपुष्पैः प्रचुरकुसुमैः कदम्बैर्नीपवृक्षैः, त्वत्सम्पर्कात् तव सङ्गात् पुलका अस्य जाताः पुलकितमिव स्थितम्, तारकादित्वादितच् प्रत्ययः। नीचैरिति आख्या यस्य तं नीचैराख्यं गिरिम्, अधिवसेः गिरौ वसेरित्यर्थः। "उपान्वध्याङ् वसः" इति कर्मत्वम्। यो नीचैर्गिरिः, पण्याः क्रेयाः स्त्रियः पण्यस्त्रियो वेश्याः, "वारस्त्री गणिका वेश्या पण्यस्त्री रूपजीविनी" इति शब्दार्णवः। तासां रतिषु यः परिमलो गन्धविशेषः, "विमर्द्दोत्थे परिमलो गन्धे जनमनोहरे" इत्यमरः, तमुद्गिरन्ति आविर्भावयन्तीति तथोक्तानि तैः, शिलावेश्मभिः कन्दरैः, नागराणां पौराणाम्, उद्दामानि उत्कटानि यौवनानि प्रथयति प्रकटयति। उत्कटयौवनाः कश्चिदनुरक्ता वाराङ्गना विस्रम्भविहाराकाङ्क्षिण्यो मात्रादिभयात् निशीथसमये कश्चन विविक्तं देशमाश्रित्य रमयन्ति; तत्रात्र बहुलमस्तीति प्रसिद्धिः। अत्र उद्गारशब्दो गौणार्थत्वान्न जुगुप्सावहः, प्रत्युत काव्यस्यातिशोभाकर एव। तदुक्तं दण्डिना—"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते॥" इति ॥२५॥

हिन्दी—हे मेघ ! विदिशाके नजदीक विश्रामके वास्ते खिले हुये फूलोंवाले

विश्रान्तः सन् व्रज वननदीतीरजातानि सिञ्चन्
उद्यानानां नवजलकणैर्यूथिकाजालकानि।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात् क्षणपरिचितः पुष्पलावीमुखानाम् ॥२६॥

नीपवृक्षोंकरके तुम्हारे सम्पर्क से पुलकित हुये सदृश नीचनामधेय पहाड़पर तुमने निवास करना। यो पहाड़ रण्डियोंका रमण समयकी सुगन्धको आविष्कार करती हुई गुफाओंसे नगरवासीके उद्दाम यौवन प्रगट करता है ॥२५॥

**বাঙ্গালা**—হে মেঘ! সেই বিদিশানগরীর নিকটে "নীচৈঃ" নামে একটী পর্ব্বত আছে; সে, তোমার সংসর্গবশতঃ প্রচুরপুষ্পশালী কদম্ববৃক্ষসমূহে যেন রোমাঞ্চিত হইয়া যাইবে; তুমি বিশ্রামের জন্য তথায় কিছুকাল অবস্থান করিবে। যে পর্ব্বতের গুহাসমূহ, বারবনিতাগণের রতিবিমর্দ্দগন্ধ প্রকাশ করিয়া নাগরিক যুবকদিগের উৎকট-যৌবনের সূচনা করিয়া থাকে ॥২৫॥

**अन्वयः**—विश्रान्तः सन् वननदीतीरजातानि उद्यानानां यूथिकाजालकानि नवजलकणैः सिञ्चन् (सन्) गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां पुष्पलावीमुखानां छायादानात् क्षणपरिचितः (सन्) व्रज ॥२६॥

**चञ्चला**—विश्रान्त इति। तत्र नीचैःपर्वते विश्रान्तः सन्, वननदीनां वने प्रवाहिनीनां सरितां तीरेषु जातानि उत्पन्नानि, उद्यानानामुपवनानाम्, यूथिकानां पुष्पाणां जालकानि कलिकाः, नवजलकणैः स्वकीयनूतनजलविन्दुभिः, सिञ्चन् सन्, गण्डयोर्यः स्वेदः पुष्पचयनश्रमजाता घर्म्माः तेषामपनयनेन मार्जनेन या रुजा पीड़ा तया

(२६) नदनदी...। नवनदी...। नगनदी...। इति पाठान्तराणि।

क्लान्तानि म्लानीभूतानि कर्णोत्पलानि येषां तेषाम्, पुष्पाणि लुनन्ति चिन्वन्ति यास्ताः पुष्पलाव्यः स्त्रियस्तासां मुखानि वदनानि, तेषाम्, छायाया अनातपस्य कान्तेश्च दानात् चणपरिचितः कियत्कालं हितकारित्वेन विदितः सन्, व्रज गच्छ ।

अत्र एकस्य दन्त्यनकारस्य असकृत्साम्यात् वृत्त्यनुप्रासोऽलङ्कारः । तथा चणपरिचित इत्यनेन कामुकस्य तव दर्शनेन पुष्पलावीनां कामिनीना-मानन्दोदयेन मुखकान्तिप्रकाशात् त्वं तासां प्रणयीति ध्वन्यते ॥२६॥

सञ्जीवनी—विश्रान्त इति । विश्रान्तः सन् तत्र नीचैर्गिरौ विनीताध्वश्रमः सन्, वने अरण्ये या नद्यस्तासां तीरेषु जातानि स्वयं रूढानि अकृत्रिमाणीत्यर्थः । "नदनदी" इति पाठे "पुमान् स्त्रिया" इत्येकशेषो दुर्वारः । उद्यानानामारामाणां सम्बन्धीनि, यूथिकाजाल-कानि मागधीकुसुममुकुलानि, "अथ मागधी गणिका यूथिका" इत्यमरः । "कोरक-जालक-कलिका-कुड्मल-मुकुलानि तुल्यानि" इति हलायुधः । नवजलकणैः सिञ्चन् आर्द्रीकुर्वन् । अत्र सिञ्चतेरार्द्री-करणार्थत्वात् द्रवद्रव्यस्य करणत्वम्, यत्र तु चरणमर्थस्तत्र द्रवद्रव्यस्य कर्म्मत्वम् । यथा—"रेतः सिक्ता कुमारीषु" "सुखैर्निषिञ्चन्तमिवामृतं त्वयि" इत्येवमादि । एवं किरतीत्यादीनामपि "रजः किरति मारुतः" "अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषितः" इत्यादिषु अर्थभेदाश्रय-णेन रजोलाजादीनां कर्म्मत्वकरणत्वे गमयितव्ये । तथा गण्डयोः कपोलयोः स्वेदस्य अपनयनेन प्रमार्जनेन या रुजा पीड़ा, भिदादित्वा-दङ्प्रत्ययः । तया क्लान्तानि म्लानानि कर्णोत्पलानि येषां तेषाम्, पुष्पाणि लुनन्तीति पुष्पलाव्यः पुष्पावचायिकाः स्त्रियः, कर्म्मण्यण्, "टीड्ढाणञ—" इत्यादिना ङीप् । तासां मुखानि तेषां छायाया अनातपस्य दानात्, कान्तिदानञ्च ध्वन्यते । "छाया सूर्य्यप्रिया कान्तिः

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मास्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥२७॥

प्रतिविम्बमनातपः" इत्यमरः । कामुकदर्शनात् कामिनीनां मुखविकाशो भवतीति भावः । क्षणपरिचितः क्षणं संसृष्टः सन् न तु चिरम्, व्रज गच्छ ॥२६॥

हिन्दी—विश्रामके बाद जङ्गल और नदी किनारेमें उत्पन्न हुये बगीचेका यूथिकामुकुलोंको नये पानीका विन्दुओंसे सींचते हुये तुम कपोलोंकी पसीना दूर करनेसे जो तकलीफ, उसीसे मलिन कर्णोत्पलवाली फुल तोड़ती हुई स्त्रियोंके वदनकी छाया-दानसे क्षणमावके लिये परिचित कर चली ॥२६॥

বাঙ্গালা—সেই পর্ব্বতে বিশ্রাম করিয়া, বন্য নদীতীরস্থ উদ্যান-সমূহের যূঁই ফুলের কলিকাগুলিকে নূতন জলবিন্দুতে সিক্ত করিবে; তাহার পর গণ্ডদেশের ঘর্ম্ম মার্জ্জন করার ঘর্ষণে যাহাদের কর্ণের উৎপল-গুলি ম্লান হইয়া যাইবে, সেই পুষ্পচয়নকারিণী রমণীগণের মুখে ছায়া দান করিয়া, ক্ষণকালের জন্য তাহাদের নিকট পরিচিত হইয়া যাইতে থাকিবে ॥২৬॥

अन्वयः—उत्तराशां प्रस्थितस्य भवतः पन्था यदपि वक्रः, उज्जयिन्याः सौधोत्सङ्ग-प्रणयविमुखः मास्म भूः । तत्र विद्युद्दामस्फुरितचकितैः लोलापाङ्गैः पौराङ्गनानां लोचनैः यदि न रमसे ( तदा ) वञ्चितः असि ॥२७॥

चञ्चला—वक्र इति । उत्तराशाम् उत्तरां दिशम्, प्रस्थितस्य

(२७) मा स्म भूः । विद्युद्दामस्फुरणचकितैः । इति पाठभेदौ ।

गच्छतः भवतस्तव, पन्था उज्जयिनीपथः, यदपि यद्यपि, वक्रः पूर्व-दिग्वर्त्तितया वक्रत्वेन दूर इत्यर्थः ; तथापि उज्जयिन्या नगर्य्याः सौधानां राजसदनानाम् उत्सङ्गेषु उपरिभागेषु प्रणयः परिचयस्तत्सन्दर्शन-मित्यर्थः तस्य विमुखः पराङ्मुखस्तत्परित्यागीत्यर्थः, मास्म भूः न भवेः। कुत इत्याह विद्युदिति। तत्र उज्जयिन्याम्, विद्युद्दाम्नां भवतो विद्युल्लतानां स्फुरितेभ्यः प्रकाशेभ्यः, चकितैस्त्रस्तैः, अतएव लोलाश्चञ्चला अपाङ्गाः प्रान्तदेशा येषां तैः, पौराङ्गनानां लोचनैः, यदि न रमसे न क्रीड़सि, तदा वञ्चितोऽसि सरलपथगमनेच्छया प्रतारितोऽसि ; निरति-शयानन्दपरित्यागादिति भावः।

अत्र विमुखतानिवारणं प्रति परार्द्धवाक्यार्थस्य हेतुतया वाक्यार्थ-हेतुकं काव्यलिङ्गमलङ्कारः। तथा यदपीतिपदं यद्यपीत्यर्थे अवाचक-मित्यवाचकत्वदोषः ; स तु 'यदपि' इत्यत्र 'यदि तु' इति पाठेन समाधेयः। किन्तु पूर्व्वार्द्धे 'तथापि' इति पदस्य परार्द्धे 'तदा' इति पदस्य च अनुपादानेऽपि तयोः सामर्थ्यादेव स्पष्टावगतेन न्यूनपदत्वदोषः, "तिष्ठेत् कोपवशात्" इत्यादिदर्पणोदाहरणवत्। तथा चोक्तं तत्रैव— "क्वचिन्न दोषो न गुणः" ॥२७॥

सञ्जीवनी—वक्र इति। उत्तराशामुदीचीं दिशं प्रति प्रस्थितस्य भवतः पन्था उज्जयिनीमार्गः वक्रो यदपि दूरो यद्यपीत्यर्थः। विन्ध्या-दुत्तरवाहिन्या निर्विन्ध्यायाः प्राग्भागे कियत्यपि दूरे स्थिता उज्जयिनी, उत्तरपथस्तु निर्विन्ध्यायाः पश्चिमे, इति वक्रत्वम्। तथापि उज्जयिन्या विशालानगरस्य, "विशालोज्जयिनी समा" इत्युत्पलः। सौधाना-मुत्सङ्गेषु उपरिभागेषु, प्रणयः परिचयः, "प्रणयः स्यात् परिचये याच्ञायां सौहृदेऽपि च" इति यादवः। तस्य विमुखः पराङ्मुखो मास्म भूः न भवेत्यर्थः। "स्मोत्तरे लुङ् च" इति चकारादाशीरर्थे

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्त्तनाभेः ।
निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥२८॥

---

लुङ् । "न माङ्योगे" इत्यड़ागमप्रतिषेधः । तत्र उज्जयिन्याम्, विद्युद्दाम्नां विद्युल्लतानां स्फुरितेभ्यः स्फुरणेभ्यः चकितैर्भीतैः, लोलापाङ्गैः-चञ्चलकटाक्षैः पौराङ्गनानां लोचनैः न रमसे यदि, तर्हि त्वं वञ्चितः प्रतारितः असि । जन्मवैफल्यं भवेदित्यर्थः ॥२७॥

हिन्दी—उत्तरदिशाको प्रस्थित हुये तुम्हारे रास्ता यद्यपि कुछ दूर हो ; तथापि उज्जयिनीका राजभवनके उपरिभागसे जो परिचय उससे विमुख न होना चाहिये । ( क्योंकि ) वहांकी पुरमहिलायोंका विजलीलताके स्फुरणसे चकित और चञ्चल-कटाक्ष-लोचनसे अगर तुम आनन्दित न हुआ करोगे ; तो तुम प्रतारित हो जावोगे ॥२७॥

বাঙ্গালা—মেঘ! তুমি উত্তরদিকে প্রস্থান করিয়াছ, সুতরাং তোমার পথ যদিও বক্র হয়, তথাপি উজ্জয়িনীর অট্টালিকাসমূহের উপরিভাগ সন্দর্শনে বিমুখ হইও না। কারণ, তোমারই বিদ্যুৎপ্রকাশে তত্রত্য পৌরমহিলাগণের নয়নযুগল ত্রস্ত ও চঞ্চল হইবে, সেই নয়নদ্বারা তুমি যদি ক্রীড়া না কর, তবে তুমি বঞ্চিত হইলে ॥২৭॥

अन्वयः—पथि वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः स्खलितसुभगं संसर्पन्त्याः दर्शितावर्त्तनाभेः निर्विन्ध्यायाः सन्निपत्य रसाभ्यन्तरः (च) भव । स्त्रीणां प्रियेषु विभ्रमः हि आद्यं प्रणयवचनं ॥२८॥

चञ्चला—वीचीति । हे मेघ ! पथि उज्जयिनीमार्गे, वीचि-

---

(२८) वीचिक्षोभक्षुभित । रसाभ्यन्तरम् । प्रणयिवचनम् । इति पाठान्तराणि ।

क्षोभेण तरङ्गाभिघातेन स्तनिताः शब्दायमाना ये विहगा हंससारसादयः पक्षिणास्तेषां श्रेणिः पङ्क्तिरेव काञ्चीगुणो रशनादाम यस्यास्तस्याः, स्खलितेन पाषाणेषु स्खलनेन मदस्खलितेन च सुभगं सुन्दरं यथा स्यात्तथा, संसर्पन्त्याः प्रवहन्त्या गच्छन्त्याश्च, तथा दर्शिता आवर्त्तो जलभ्रमिरेव नाभिर्यया तस्याः, निर्विन्ध्यायास्तदाख्याया नद्याः, सन्निपत्य सङ्गम्य, रसो जलमभ्यन्तरे पानादुदराभ्यन्तरे यस्य सः रसेन शृङ्गारेण अन्तरङ्गः प्रणयी च भव। अथ तस्यास्तदभिप्रायप्रकाशकवचनं विना कथं तद्रसग्रहणमित्याह स्त्रीणामिति। स्त्रीणां प्रियेषु जनेषु, विभ्रमो हि उक्तविधविलासप्रकाश एव, आद्यं प्राथमिकम्, प्रणयवचनम् अभिप्रेतविषयकं प्रार्थनावाक्यम्। तां प्रति नाभिप्रदर्शनात्मकविभ्रमप्रकाशेनैव सङ्गमप्रार्थनाप्रकाशात् तदीयरसग्रहणं तवोपपद्यत एवेति भावः।

अत्र विहगश्रेणौ काञ्चीगुणत्वारोपः आवर्त्ते नाभित्वारोपश्च शाब्दः निर्विन्ध्यायां नायिकात्वारोपस्तु आर्थं इत्येकदेशविवर्त्ति रूपकं प्रधानम्। तथा चतुर्थपादगतसामान्येन पूर्वगतविशेषस्य समर्थनादर्थान्तरन्यासः, एवं विभ्रमे प्रणयवचनत्वारोपस्य प्रकृतोपयोगितया परिणाम इत्यर्थान्तरन्यासपरिणामयोरेकाश्रयानुप्रवेशरूपः सङ्करः; तस्य चाङ्गभूतस्य सङ्करस्य प्रागुक्तेनाङ्गिना रूपकेण सह पुनः सङ्करः। संसृष्टिसङ्कराभ्यामपि पुनः संसृष्टिसङ्करौ सम्भवत एवेति दर्शितमस्माभिः साहित्यदर्पणटीकायां संसृष्टिसङ्करप्रकरणे।

केचित्तु मेघनिर्विन्ध्ययोर्नायकनायिकाव्यवहारसमारोपात् समासोक्तिरपीति वदन्ति; तत्तुच्छम्, "यत्र स्फुटसादृश्यानामपि बहूनां रूपणं शाब्दमेकदेशस्य चार्थम्, तत्रैकदेशविवर्त्तिरूपकमेव, रूपकप्रतीतेर्व्यापितया समासोक्तिप्रतीतितिरोधायकत्वात्" इति समासोक्तिप्रकरणे दर्पणकृतैवाभिहितत्वात्; अत्र च "बहूनाम्" इत्यस्य सयुक्तिक-

मस्माभिरनेकपरतया विवृतत्वात् श्लोके च द्वयोरूपयोरनेव अनेकरूपत्वस्य सिद्धत्वाच्चेति सुधीभिर्विभावनीयम् ॥२८॥

सञ्जीवनी—सम्प्रति उज्जयिनीं गच्छतस्तस्य मध्ये मार्गे निर्विन्ध्या-सम्बन्धमाह वीचीति। हे सखे! पथि उज्जयिनीपथे, वीचिक्षोभेण तरङ्गचलनेन स्तनितानां मुखराणाम्। कर्त्तरि क्तः। विहगानां हंसानां श्रेणिः पङ्क्तिरेव काञ्चीगुणो यस्यास्तस्याः, स्खलितेन उपल-स्खलनेन मदस्खलितेन च सुभगं यथा तथा संसर्पन्त्याः प्रवहन्त्या गच्छन्त्याश्च, तथा दर्शिता प्रकटिता आवर्त्तः अम्भसां भ्रम एव नाभिर्यया तस्याः, "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः। निष्क्रान्ता विन्ध्यात् निर्विन्ध्या नाम नदी, "निरादयः क्रान्त्याद्यर्थे पञ्चम्या" इति समासः। "द्विगुप्राप्तापन्न—" इत्यादिना परवल्लिङ्गताप्रतिषेधः। तस्या नद्याः, सन्निपत्य सङ्गत्य, रसो जलमभ्यन्तरे तस्य सः, अन्यत्र रसेन शृङ्गारेण अभ्यन्तरः अन्तरङ्गो भव, सर्वथा तस्या रसमनुभवेत्यर्थः। "शृङ्गारादौ जले वीर्य्ये सुवर्णे विषशुक्रयोः। तिक्तादावमृते चैव निर्यासे पारदे ध्वनौ॥ आस्वादे च रसं प्राहुः" इति शब्दार्णवः। ननु तत्प्रार्थना-मन्तरेण कथं तत्रानुभवो युज्यते इत्यत आह स्त्रीणामिति। स्त्रीणां प्रियेषु विभ्रमो विलास एव आद्यं प्रणयवचनं प्रार्थनावाक्यं हि। स्त्रीणामेष स्वभावो यत् विलासैरेव रागप्रकाशनं न तु कण्ठत इति। विभ्रमश्चात्र नाभिसन्दर्शनादिरुक्त एव ॥२८॥

हिन्दी—हे मेघ! रास्तामें तरङ्ग-क्षोभसे मुखर हंस-सारसपंक्तिरूप काञ्चीगुण जिसकी है; जो उपलस्खलनसे (जैसा) मनोहर बहती है; और जिसने आवर्त्तरूप नाभि दिखलाई; ऐसी निर्विन्ध्या-नदीके साथ मिलकर जलपूर्ण हो जाओ। (क्योंकि) स्त्रियोंका स्वामियोंके ऊपर पहला विलास ही प्रणयवचन है ॥२८॥

বাঙ্গালা—হে মেঘ! উজ্জয়িনীর পথে নির্বিন্ধ্যানামে একটী নদী

**वेणीभूतप्रतनुसलिलासावतीतस्य सिन्धुः**
**पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः।**
**सौभाग्यं ते सुभग! विरहावस्थया व्यञ्जयन्ती**
**कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥२९॥**

প্রস্তরে প্রতিহত হইয়া সুন্দরভাবে বহিয়া যাইতেছে; তরঙ্গসঞ্চালনে শব্দায়মান হংস-সারসপ্রভৃতি পক্ষিশ্রেণীই তাহার কাঞ্চীদাম এবং সে নিজের আবর্ত্ত-(ঘোলা) রূপ নাভি দর্শন করাইবে; সুতরাং তুমি তাহার সহিত সম্মিলিত হইয়া তাহার রসে পরিপূর্ণ হইবে। কারণ, প্রিয়ব্যক্তির নিকট কোনও বিলাস প্রকাশ করাই স্ত্রীলোকদিগের প্রথম প্রণয়ের বাক্য ॥২৮॥

**अन्वयः**—(हे) सुभग! वेणीभूतप्रतनुसलिला तटरुहतरुभ्रंशिभिः जीर्णपर्णैः पाण्डुच्छाया असौ सिन्धुः विरहावस्थया अतीतस्य ते सौभाग्यं व्यञ्जयन्ती (सती) येन विधिना कार्श्यं त्यजति स त्वया एव उपपाद्यः ॥२९॥

**चञ्चला**—वेणीति। हे सुभग! रमणीप्रिय! वेणीभूतं केशबन्धवेणीतुल्यं प्रतनु कृशप्रवाहं सलिलं यस्याः सा, तथा तटरुहेभ्यस्तीरोत्पन्नेभ्यः तरुभ्यो वृक्षेभ्यः भ्रश्यन्ति पतन्तीति तैस्तादृशैः, जीर्णपर्णैः शुष्कपत्रैः, पाण्डुच्छाया पाण्डुरवर्णा, असौ सिन्धुर्निर्विन्ध्या नदी, विरहावस्थया उक्तरूपया, अतीतस्य इयन्तं कालम् अतिवाहितवतः, ते तव सौभाग्यं रमणीप्रियत्वम्, व्यञ्जयन्ती तादृशाकारधारणेन प्रकटयन्ती सती, येन विधिना व्यापारेण, कार्श्यम् आत्मनोऽल्पजलत्वं शरीरकृशत्वञ्च त्यजति, स विधिर्वृष्टिपातरूपः सम्भोगरूपश्च व्यापारः

(२९) तामतीतस्य इति पाठान्तरम्।

त्वयैव उपपाद्यः कर्त्तव्यः। वृष्टिपातेन नदी वर्द्धते, विरहकृशा नारी च प्रियसङ्गमेन क्रमश एव स्फीतदेहा भवतीति भावः।

अत्र मेघनिर्विन्ध्ययोर्लिङ्गसाम्येन नायकनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः ॥२९॥

सञ्जीवनी—निर्विन्ध्याया विरहावस्थां वर्णयन् तन्निराकरणं प्रार्थयते वेणीति। अवेणी वेणीभूतं वेण्याकारं प्रतनु स्तोकञ्च सलिलं यस्याः सा तथोक्ता, वेणीभूतकेशपाशेति च ध्वन्यते। रुहन्तीति रुहाः, इगुपधलक्षणः कः। तटयो रुहा ये तरवस्तेभ्यो भ्रश्यन्तीति तथोक्तैः, जीर्णपर्णैः शुष्कपत्रैः, पाण्डुच्छाया पाण्डुवर्णा, अतएव हे सुभग! विरहावस्थया पूर्वोक्तप्रकारया कर्श्येन, अतीतस्य एतावन्तं कालमतीत्य गतस्य प्रोषितस्येत्यर्थः। ते तव सौभाग्यं सुभगत्वं "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदस्य वृद्धिः। व्यञ्जयन्ती प्रकाशयन्ती, स खलु सुभगो यमङ्गनाः कामयन्ते इति भावः। असौ पूर्वोक्ता सिन्धुर्नदी निर्विन्ध्या, "स्त्री नद्यां ना नदे सिन्धुर्देशभेदेऽम्बुधौ गजे" इति वैजयन्ती। येन विधिना व्यापारेण कार्श्यं त्यजति, स विधिस्त्वयैव उपपाद्यः कर्त्तव्य इत्यर्थः। स च विधिः एकत्र वृष्टिः, अन्यत्र सम्भोगः, तदभावनिबन्धनत्वात् कार्श्यस्येति भावः। इयं पञ्चमी मदनावस्था। तदुक्तं रतिरहस्ये—"नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः। उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः॥" इति। तामतीतस्येति पाठमाश्रित्य सिन्धुर्नाम नद्यन्तरमिति व्याख्यातम्; किन्तु सिन्धुर्नाम कश्चिन्नदः काश्मीरदेशे अस्ति, नदी तु कुत्रापि नास्तीत्युपेक्ष्यमित्याचक्षते ॥२९॥

हिन्दी—वेणीके माफिक आकारित अल्प पानी जिसकी है; किनरके पड़ोंसे

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्व्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम्।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत् खण्डमेकम्॥३०॥

विगलित सुखी पतियों करके जो पाण्डुवर्ण है; (अतएव) हे सुभग! विरहावस्थासे इतना कालतक व्यतीत किये हुये तुम्हारे सौभाग्य प्रकाश करती हुई वह नदी जिस तौरसे कृशताको छोड़ देवे, वह तुम्हारे कर्त्तव्य है॥२९॥

বাঙ্গালা—হে ভাগ্যধর মেঘ! নির্বিন্ধ্যানদীর জলপ্রবাহ বেণীর ন্যায় কৃশ হইয়া গিয়াছে এবং তীরস্থ বৃক্ষ হইতে নিপতিত শুষ্কপত্রদ্বারা উহার কান্তি পাণ্ডুবর্ণ হইয়াছে; অতএব এতকাল তুমি দেশান্তরে অবস্থান করায় নির্বিন্ধ্যানদী উক্তরূপ বিরহাবস্থাদ্বারা তোমারই সৌভাগ্য ব্যক্ত করিতেছে; সুতরাং যাহাতে ঐ নদী কৃশতা পরিত্যাগ করে, সে কার্য্য তোমারই করিতে হইবে॥২৯॥

(३०) प्राप्यावन्तीमुदयनकथाकोविदग्रामवृद्धाम्। उपसर। स्वचरितफले। इति पाठभेदाः। अमी च प्रक्षिप्ताः श्लोकाः—

हारांस्तारांस्तरलगुटिकान् कोटिशः शङ्खशुक्तीः
शष्पश्यामान्मरकतमणीनुन्मयूखप्ररोहान्।
दृष्ट्वा यस्यां विपणिरचितान् विद्रुमाणाञ्च भङ्गान्
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः॥१॥

प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे
हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः।
अत्रोद्भ्रान्तः किल नलगिरिः स्तम्भमुत्पाठ्य दर्पात्
इत्यागन्तून् रमयति जनो यत्र बन्धूनभिज्ञः॥२॥

अन्वयः—उदयनकथाकोविदग्रामवृद्धान् अवन्तीन् प्राप्य, पूर्व्वोद्दिष्टां श्रीविशालां सुचरितफले स्वल्पीभूते ( सति ) गां गतानां स्वर्गिणां शेषैः पुण्यैः हृतं कान्तिमत् एकं दिवः खण्डं इव, विशालां पुरीं अनुसर ॥३०॥

चञ्चला—प्राप्येति। उदयनकथायां वत्सराजोपाख्याने कोविदा अभिज्ञा ग्रामवृद्धा ग्राम्यप्राचीनलोका येषु तान्, अवन्तीन् तदाख्यं देशं प्राप्य। "बहुत्ववदस्वादेः—" इत्यादिना बहुवचनम्। पूर्वोद्दिष्टां "वक्रः पन्था यदपि भवतः—" इत्यादिना प्रथममभिहिताम्, श्रिया सम्पदा विशालां महतीम्, तथा सुचरितफले स्वर्गभोगरूपे पुण्यफले, स्वल्पीभूते स्वल्पावशिष्टे सति, गां भूमिं मर्त्यलोकमिति यावत् गतानां "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति शास्त्रात् अवतीर्णानाम्, स्वर्गिणां स्वर्गवासिनां पुण्यवतां जनानाम्, शेषैर्भोगेन क्षीणावशिष्टैः पुण्यैः, हृतमानीतम्, कान्तिमत् सुन्दरम्, एकं भुक्तव्यतिरिक्तं दिवः स्वर्गस्य खण्डमिव अंशमिव स्थितामिति शेषः, विशालामुज्जयिनीम्, पुरीं नगरीम्, अनुसर गच्छ।

अत्र उज्जयिन्यां स्वर्गखण्डत्वोत्प्रेक्षणात् जात्युत्प्रेक्षालङ्कारः, तथा "श्रीविशालां विशालाम्" इत्यत्र यमकम् इत्युभयोः संसृष्टिः। उत्प्रेक्षया च उज्जयिन्याः स्वर्गतुल्यत्वं व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः।

उदयनकथा यथा कथासरित्सागरे—पुरा किलोज्जयिन्यां प्रद्योत-नाम्नः ( चण्डमहासेननाम्नः ) राज्ञो वासवदत्ता नाम लोकललामभूता कन्या बभूव। सा तु कदाचित् स्वप्ने वत्सराजमवलोक्य तस्मै गुप्तचर-

पत्रश्यामा दिनकरहयस्पर्द्धिनो यत्र वाहाः
शैलोदग्रास्त्वमिव करिणो वृष्टिमन्तः प्रभेदात्।
योधाग्रण्यः प्रतिदशमुखं संयुगे तस्थिवांसः
प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणाङ्कैः ॥१॥

मुखेन स्वाभिप्रायं प्रकटितवती। ततश्च वत्सराजस्तां पितृगृहाज्जहार ॥३०॥

सञ्जीवनी—प्राप्येति। विदन्तीति विदाः इगुपधलक्षणः कः। ओकसो वेश्मस्थानस्य विदाः कोविदाः, ओकारलोपः पृषोदरादित्वात् साधुः। उदयनस्य वत्सराजस्य कथानां वासवदत्ताहरणाद्यद्भुतोपाख्यानानां कोविदास्तत्त्वज्ञाः ग्रामेषु ये वृद्धास्ते सन्ति येषु तान्, अवन्तीन् तन्नामजनपदान्, प्राप्य तत्र पूर्वोद्दिष्टां पूर्वोक्तां "सौधोत्सङ्गप्रणयविमुखो मास्म भूरुज्जयिन्याः" इत्युक्ताम्, श्रीविशालां सम्पत्तिमहतीम्, "शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते" इति शाश्वतः। विशालां पुरीमुज्जयिनीम्, अनुसर व्रज। कथमिव स्थिताम्? सुचरितफले पुण्यफले स्वर्गोपभोगलक्षणे, स्वल्पीभूते अत्यल्पावशिष्टे सतीत्यर्थः, गां भूमिं गतानां "गौरिला कुम्भिनी क्षमा" इत्यमरः। पुनरपि भूलोकगतानामित्यर्थः, स्वर्गिणां स्वर्गवतां जनानाम्, शेषैर्भुक्तशेषैः, पुण्यैः सुकृतैः, हृतमानीतम्, स्वर्गार्थानुष्ठितकर्म्मशेषाणां स्वर्गदानावश्यम्भावादिति भावः। कान्तिरस्यास्तीति कान्तिमत् उज्ज्वलं सारभूतमित्यर्थः, एकं मुख्यादन्यत्, "एके मुख्यान्यकेवलाः" इत्यमरः। दिवः स्वर्गस्य खण्डमिव स्थितामित्युत्प्रेक्षा। एतेन अतिक्रान्तसकलभूलोकनगरसौभाग्यसारत्वमुज्जयिन्या व्यज्यते ॥३०॥

हिन्दी—उदयन कथाको जाननेवाले ग्रामवृद्धोंकी वसति जिसमें है; ऐसी अवन्तिदेशको प्राप्त होकर पहेली रीतिसे सम्पत्तिविशाल उज्जयिनी नगरीको अनुसरण करो। (वह कैसी है) पुण्यक्षय हो जानेके बाद जमीनपर रहनेवाले स्वर्गियोंके अवशिष्ट पुण्यसे स्वर्गके एक उज्ज्वल खण्ड आनीत है ॥३०॥

বাঙ্গালা—হে মেঘ! যে দেশের গ্রাম্যপ্রাচীন লোকসকল বৎসরাজ উদয়নের উপাখ্যানে অভিজ্ঞ, সেই অবন্তিদেশে উপস্থিত হইয়া পূর্ব্বকথিত

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः॥३१॥

---

মহাসমৃদ্ধিসম্পন্ন উজ্জয়িনী নগরীতে যাইবে। যে উজ্জয়িনী, ভোগে পুণ্যফল নিতান্ত অল্প হইয়া গেলে পুনরায় মর্ত্ত্যলোকে অবতীর্ণ স্বর্গবাসিদিগের অবশিষ্ট পুণ্যের বলে স্বর্গেরই যেন এক উজ্জ্বল অংশ ভূমণ্ডলে আনীত হইয়াছে বলিয়া মনে হয়॥৩০॥

अन्वयः—यत्र प्रत्यूषेषु सारसानां मदकलं पटु कूजितं दीर्घीकुर्वन् स्फुटितकमलामोदमैत्रीकषायः अङ्गानुकूलः शिप्रावातः प्रार्थनाचाटुकारः प्रियतमः इव स्त्रीणां सुरतग्लानिं हरति॥३१॥

चञ्चला—दीर्घीति। यत्र विशालायाम्, प्रत्यूषेषु प्रभातकालेषु, सारसानां तदाख्यानां पक्षिणाम्, मदेन कलं मधुरास्फुटम्, पटु मनोहरणसमर्थम्, कूजितं रवम्, दीर्घीकुर्वन् दूरवहनेन प्रसारयन्। पक्षान्तरे तु स्वचाटुवाक्यानुसारिणं गृहपालितपक्षिरवं बहुलीकुर्वन्। स्फुटितकमलामोदेन विकसितपद्मगन्धेन या मैत्री संसर्गस्तेन कषायः सुगन्धः। पक्षान्तरे तु स्फुटितकमलस्येव य आमोदो विमर्द्दगन्धस्तेन सह या मैत्री आलिङ्गनकालीनसम्बन्धस्तेन कषायः सुगन्धदेहः। तथा अङ्गानुकूलः अङ्गेषु स्पर्शेन सुखजनकः, अन्यत्र तु अङ्गेषु सुखजनकसंवाहनकारी। शिप्रा तदाख्या काचिन्नदी तस्या वातो वायुः, प्रार्थनायां पुनः सुरतयाच्ञायां चाटुं प्रियोक्तिं करोतीति स तादृशः, प्रियतमो दयित इव, स्त्रीणां सुरतग्लानिं रमणपरिश्रमम्, हरति उपशमयति।

अत्र पूर्णोपमालङ्कारः। अस्यानुरूपः श्लोको यथा अमरुशतके—"रामाणां रमणीयवक्त्रशशिनः स्वेदोदविन्दुप्लुतो व्यालोलालकवल्लरीं प्रचलयन् धुन्वन् नितम्बाम्बरम्। प्रातर्वाति मधौ प्रकाशविकसद्राजीव-राजीरजो-जालामोदमनोहरो रतिरसग्लानिं हरन् मारुतः॥" ॥३१॥

सञ्जीवनी—दीर्घीकुर्वन्निति। यत्र विशालायाम्, प्रत्यूषेषु अह-र्मुखेषु, "प्रत्यूषोऽहर्मुखं कल्यम्" इत्यमरः। पटु प्रस्फुटम्, मदकलं मदेन अव्यक्तमधुरम्, "ध्वनौ तु मधुरास्फुटे कलः" इत्यमरः। सारसानां पक्षिविशेषाणाम्, "सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः" इति यादवः। यद्वा सारसानां हंसानाम्, "चक्राङ्गः सारसो हंसः" इति शब्दार्णवः। कूजितं रुतम्, दीर्घीकुर्वन् सन्तानयन्नित्यर्थः, यावद्वातं शब्दानुवृत्तेरिति भावः। एतेन प्रियतमः स्वचाटुवाक्यानुसारि क्रीड़ा-पक्षिकूजितमविच्छिन्नीकुर्वन्निति च गम्यते। स्फुटितानां विकसितानां कमलानाम् आमोदेन परिमलेन सह या मैत्री संसर्गस्तेन कषायः सुरभिः, "रागद्रव्ये कषायोऽस्त्री निर्यासे सौरभे रसे" इति यादवः। अन्यत्र विमर्दगन्धीत्यर्थः, "विमर्दोत्थे परिमलो गन्धे जनमनोहरे" इत्यमरः। अङ्गानुकूलो मान्द्यात् गात्रसुखस्पर्शः, अन्यत्र गाढ़ालिङ्गन-दत्तगात्रसंवाहन इत्यर्थः। भवभूतिना चोक्तम्—"अशिथिलपरिरम्भै-र्दत्तसंवाहनानि" इति। संवाहन्ते च सुरतश्रान्ताः प्रियैर्युवतयः। एतत् कविरेव वक्ष्यति—"सम्भोगान्ते मम समुचितो हस्तसंवाहनानाम्" इति। शिप्रा नाम काचित् तत्रत्या नदी तस्या वातः शिप्रावातः, शिप्राग्रहणं शैत्यद्योतनार्थम्, प्रार्थना सुरतस्य याच्ञा तत्र चाटूनि करोतीति तथोक्तः, पुनः सुरतार्थं प्रियवचनप्रयोक्ता इत्यर्थः। कर्मण्यण्-प्रत्ययः। प्रियतमो वल्लभ इव स्त्रीणां सुरतग्लानिं सम्भोगखेदं हरति नुदति, चाटुभिर्भिः कृतपूर्वखेदाः स्त्रियः प्रियतमप्रार्थनां सफलयन्तीति

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै:
बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः।
हर्म्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथा:
लक्ष्मीं पश्यन् ललितवनितापादरागाङ्कितेषु ॥३२॥

भावः। "प्रार्थनाचाटुकारः" इत्यत्र "खण्डितनायिका अनुनीते"ति व्याख्याने सुरतग्लानिहरणं न सम्भवति, तस्याः पूर्वं सुरताभावात्; पश्चात्तनसुरतग्लानिहरणान्तु नेदानीन्तनकोपशमनार्थचाटुवचनसाध्य-मित्युपेक्षैव उचिता विवेकिनाम्। "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्या-कषायिता" इति दशरूपके ॥३१॥

हिन्दी—जिस नगरीमें सवेरे प्रस्फुट मत्तताके बड़े मधुर परन्तु अव्यक्त सारसोंका शब्द विस्तार कर, विकसित कमलके जो गन्ध ओससे जो सङ्ग तिससे अङ्गानु-कूल शिप्रानदीकी वायु, औरतके सम्भोग खेद हरती है। (किस तरह) फिर सम्भोगके वास्ते मिष्टवचन बोलनेवाला यथा प्रियपति अपनी औरतकी अङ्गग्लानि दूर करता है ॥३१॥

বাঙ্গালা—যে উজ্জয়িনীতে অঙ্গে সুখস্পর্শযোগ্য শিপ্রানদীর বায়ু, প্রভাতকালে মত্ততাবশতঃ অব্যক্তমধুর ও মনোহর সারসপক্ষিগণের রবকে প্রসারিত করিয়া এবং প্রস্ফুটিত পদ্মের গন্ধে সুগন্ধী হইয়া, দ্বিতীয়-বার প্রার্থনাতে চাটূক্তিকারী প্রিয়তমের ন্যায়, রমণীগণের রমণপরিশ্রম দূর করিয়া থাকে ॥৩১॥

अन्वयः—जालोद्गीर्णैः केशसंस्कारधूपैः उपचितवपुः बन्धुप्रीत्या भवनशिखिभिः दत्तनृत्योपहारः कुसुमसुरभिषु ललितवनितापादरागाङ्कितेषु हर्म्म्येषु अस्याः लक्ष्मीं पश्यन् (सन्) अध्वखेदं नयेथाः ॥३२॥

(३२) अध्वखिन्नान्तरात्मा। त्यक्त्वा खेदम्। इति पाठान्तरद्वयम्।

चञ्चला—जालोद्गीर्णैरिति। जालोद्गीर्णैर्गवाक्षजालान्निर्गतैः, केशसंस्कारधूपैः कामिनीनां केशेषु सौरभसम्पादनाय दह्यमानगन्धद्रव्य-धूमैरित्यर्थः, उपचितं पुष्टीकृतं वपुः शरीरं यस्य सः ; तथा बन्धौ त्वयि या प्रीतिः स्नेहस्तया, भवनशिखिभिर्गृहपालितमयूरैः दत्तः नृत्यमेव उपहार उपायनं यस्मै स तादृशस्त्वम् ; कुसुमैः सौरभसम्पादनार्थमेव सर्वत्र विकीर्णैः पुष्पैः सुरभिषु सुगन्धिषु, तथा ललितवनितानां सुन्दर-स्त्रीणां पादरागेण अलक्तकद्रवेण अङ्कितेषु चिह्नितेषु, हर्म्येषु धनिगृहेषु, अस्या उज्जयिन्याः, लक्ष्मीं शोभां पश्यन् सन्, अध्वखेदं गमनेन पथिश्रान्तिं नयेथा उपशमयेः।

अत्र मेघे कार्श्येन नवागतस्य भोज्यपेयलाभेन पुष्टशरीरस्य दत्तोप-हारस्य च जामात्रादिबन्धुजनस्य व्यवहारसमारोपात् समासोक्तिः, एवं नृत्ये उपहारत्वारोपस्य प्रकृतनवागतमेघाभ्यर्थनोपयोगितया परिणामश्च अनयोरङ्गाङ्गिभावेन सङ्करः। तथा तृतीयचरण एव वाक्यस्य समाप्तावपि पुनस्तदन्तर्गतस्य हर्म्येष्विति पदस्य विशेषणतया ललितेत्यादिपदस्य, त्वमितिपदस्य विशेषणतया पश्यन्निति पदस्य चोपादानात् समाप्तपुन-रात्ततादोषः ; स तु तृतीयस्थाने चतुर्थचरणं चतुर्थस्थाने च तृतीय-चरणं पठित्वा समाधेयः ॥३२॥

सञ्जीवनी—जालोद्गीर्णैरिति। जालोद्गीर्णैर्गवाक्षमार्गनिर्गतैः, "जालं गवाक्षे आनाये जालके कपटे गणे" इति यादवः। केश-संस्कारधूपैर्वनिताकेशवासनार्थैर्गन्धद्रव्यधूपैरित्यर्थः। अत्र संस्कार-धूपयोस्तादर्थ्येऽपि यूपदार्वादिवत् प्रकृतिविकारत्वाभावादश्वघासादिवत् षष्ठीसमासो न चतुर्थीसमासः। उपचितवपुः परिपुष्टशरीरः, बन्धौ बन्धुरिति वा प्रीत्या, भवनशिखिभिर्गृहमयूरैः, दत्तो नृत्यमेव उपहार

भर्त्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीड़ानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥३३॥

उपायनं यस्मै स तथोक्तः। "उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः। कुसुमैः सुरभिषु सुगन्धिषु, ललितवनिताः सुन्दरस्त्रियः। "ललितं त्रिषु सुन्दरम्" इति शब्दार्णवः। तासां पादरागेण लाक्षारसेन अङ्कितेषु चिह्नितेषु, हर्म्म्येषु धनिकभवनेषु, अस्या उज्जयिन्याः लक्ष्मीं पश्यन्, अध्वना अध्वगमनेन खेदं क्लेशं नयेथा अपनय ॥३२॥

हिन्दी—गवाक्षमार्गसे निर्गत केशसंस्कारके वास्ते दी हुई धूपोंसे पुष्टदेह होकर बन्धुके ऊपर प्रीतिसे घरके मयूरोंने नृत्यरूप उपहार दिखलाया जिसके वास्ते ऐसे तुम कुसमोंसे सुगन्धित और सुन्दरीमहिलायोंका पादरागसे अङ्कित सौधोंसे उज्जयिनीकी शोभा देखते हुये रास्ताकी क्लान्ति दूर करो ॥३२॥

বাঙ্গালা—হে মেঘ! রমণীগণের কেশকলাপে সৌরভসম্পাদন করিবার নিমিত্ত গন্ধদ্রব্য দগ্ধ করা হইয়া থাকে, তাহার ধূম গবাক্ষবিবর হইতে নির্গত হইয়া তোমার দেহ পরিপুষ্ট করিবে এবং তুমি ময়ূরগণের বন্ধু বলিয়া তোমার প্রতি স্নেহবশতঃ গৃহপালিত ময়ূরগণ তোমাকে নৃত্য উপহার দিবে, এদিকে উজ্জয়িনীর অট্টালিকাসমূহ পুষ্পের সৌরভে সৌরভময় এবং সুন্দরীরমণীগণের চরণের অলক্তকচিহ্নে চিহ্নিত হইয়া থাকে; সুতরাং তুমি সেই অট্টালিকাসমূহে উজ্জয়িনীর শোভা সন্দর্শন করতঃ পথের ক্লান্তি দূর করিবে ॥৩২॥

(३३) चण्डेश्वरस्य इति पाठान्तरम्।

अन्वयः—भर्त्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः (सन्) कुवलयरजोगन्धिभिः तोयक्रीड़ानिरतयुवतिस्नानतिक्तैः गन्धवत्याः मरुद्भिः धूतोद्यानं पुण्यं त्रिभुवनगुरोः चण्डीश्वरस्य धाम यायाः॥३३॥

चञ्चला—भर्त्तुरिति। भर्त्तुरधिपतेर्नीलकण्ठस्य शिवस्य यः कण्ठः कालकूटविषपानाद्धीनवर्णो गलदेशस्तस्य छविरिव छविः कान्तिर्यस्य स तादृशस्त्वम्, इति हेतोः, गणैः प्रमथैः, सादरं यथा स्यात्तथा वीक्ष्यमाणो दृश्यमानः सन्, प्रियवस्तुसदृशस्यापि प्रियत्वादित्याशयः। कुवलयरजसां नीलोत्पलपरागाणां गन्ध एषामस्तीति तैः, तोयक्रीड़ासु जलविहारेषु निरताः प्रवृत्ता या युवतयस्तासां स्नानेन स्नानीयचन्दनादिसुगन्धिद्रव्येण तिक्तैः सुरभिभिः, गन्धवत्यास्तदाख्याया नद्याः, मरुद्भिर्वायुभिः, धूतं कम्पितम् उद्यानमुपवनं यस्य तत्तादृशम्, पुण्यं पवित्रम्, त्रिभुवनगुरोस्त्रैलोक्याधिपतेः, चण्डीश्वरस्य अम्बिकापतेः शिवस्य, धाम महाकालनामकं स्थानं यायाः व्रज।

अत्र नीलपदार्थवर्णनायां मेघ एव प्रसिद्धमुपमानं "सजलजलदनीलं मेघाङ्गीं विगताम्बराम्" इत्यादिदर्शनात्, अत्र तु "भर्त्तुः कण्ठच्छविः" इत्यनेन तस्यैव मेघस्य उपमेयत्वकल्पनात् प्रतीपालङ्कारः। केचित्तु "अत्र प्रस्तुतस्य अलकापथवर्णनस्य अङ्गत्वेन महतश्चण्डीश्वरस्य चरितवर्णनादुदात्तालङ्कारः" इति वदन्ति तदसत्; चण्डीश्वरस्येति नाममात्रोच्चारणस्य चरितवर्णनत्वाभावात्, तथात्वे च "मार्कण्डेय उवाच" इत्यत्रापि मार्कण्डेय इति नामोच्चारणस्य प्रस्तुतसप्तशतीस्तोत्राङ्गत्वेन चरितवर्णनत्वापत्त्या उदात्तालङ्कारापत्तेः।

तथा द्वितीयचरण एव वाक्यसमाप्तावपि पुनस्तदन्तर्गतस्य धाम इत्यस्य विशेषणतया द्वितीयार्द्धोपादानात् समाप्तपुनरात्ततादोषः, स तु प्रथमचरणात् परमेव द्वितीयार्द्धं पठित्वा परिहरणीयः। एवं तिक्त-

शब्दस्य तिक्तरसार्थ एव प्रसिद्धत्वात् सौरभार्थे त्वप्रसिद्धत्वादत्र त्वप्रसिद्ध एव तस्मिन् सौरभार्थे प्रयोगात् निहतार्थत्वदोषश्च "यमुनाशम्बरमम्बरं व्यतानीत्" इति दर्पणोदाहरणवत् ; स च "वातैस्तोये विहरदबलास्नान-सौगन्ध्यवद्भिः" इति चतुर्थचरणपाठेन समाधेयः ॥३३॥

सञ्जीवनी—भर्त्तुरिति। भर्त्तुः स्वामिनो नीलकण्ठस्य भगवतः कण्ठस्येव छविर्यस्य असौ कण्ठच्छवि इति हेतोः गणैः प्रमथैः, "गणास्तु गणनायां स्यात् गणेशे प्रमथे चये" इति शब्दार्णवः। सादरं यथा तथा वीक्ष्यमाणः सन् प्रियवस्तुसादृश्यादतिप्रियत्वं भवेदिति भावः। त्रयाणां भुवनानां समाहारस्त्रिभुवनम्, "तद्धितार्थ" इत्यादिना समासः। तस्य गुरोस्त्रैलोक्यनाथस्य, चण्डीश्वरस्य कात्यायनीवल्लभस्य पुण्यं पावनं धाम महाकालाख्यं स्थानं यायाः गच्छ। विध्यर्थे लिङ्। श्रेयस्कर-त्वात् सर्वथा गन्तव्यमिति भावः। उक्तञ्च स्कान्दे—"आकाशे तारकं लिङ्गं पाताले हाटकेश्वरम्। मर्त्यलोके महाकालं दृष्ट्वा काम-मवाप्नुयात्॥" इति। न केवलं मुक्तिस्थानमिदं किन्तु विलासस्थान-मपीत्याह धूतेति। कुवलयरजोगन्धिभिः उत्पलपरागगन्धवद्भिः, तोय-क्रीड़ासु निरतानामासक्तानां युवतीनां स्नानं स्नानीयं चन्दनादि, करणे ल्युट्, "स्नानीयेऽभिषवे स्नानम्" इति यादवः। तेन तिक्तैः सुरभिभिः, "कटुतिक्तकषायास्तु सौरभे च प्रकीर्त्तिताः" इति हलायुधः। सौगन्ध्याति-शयार्थं विशेषणद्वयम्। गन्धवत्या नाम नद्याः, मरुद्भिर्मारुतैः, धूतोद्यानं कम्पितोपवनमिति धाम्नो विशेषणम् ॥३३॥

हिन्दी—हे जलद! प्रभुके कण्ठके माफिक द्युतिमान्, इस हेतुसे शिवजीके गणों से सादर दृष्ट होते हुये तुम त्रैलोकगुरु-महादेवके पुण्यस्थानमें गमन करो। नीलोत्पलपरागसे सुगन्धित और जलक्रीड़ामें निरत युवतीके स्नानसे सुरभि गन्धवतीकी वायुसे कम्पित उद्यान जहां है ॥३३॥

**अप्यन्यस्मिन् जलधर ! महाकालमासाद्य काले**
**स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।**
**कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-**
**मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥३४॥**

বাঙ্গালা—হে মেঘ! তোমার বর্ণ, প্রভু নীলকণ্ঠের কণ্ঠদেশের বর্ণের তুল্য—ইহা মনে করিয়া প্রমথগণ তোমাকে আদরের সহিত দেখিতে থাকিবে, এই অবস্থায় তুমি জগতের পূজনীয় মহাদেবের পবিত্র ধাম মহাকালে গমন করিবে। নীলোৎপলসমূহের রেণু বহন করায় সুগন্ধি আবার জলখেলায় প্রবৃত্ত যুবতীগণের চন্দনপ্রভৃতি স্নানীয় দ্রব্যসংস্রবেও সুগন্ধি—এইরূপ গন্ধবতী নদীর বায়ু, যে মহাকালধামে উদ্যানসমূহকে কম্পিত করিয়া থাকে ॥৩৩॥

अन्वयः—( हे ) जलधर ! अन्यस्मिन् काले अपि महाकालं आसाद्य ते स्थातव्यं, यावत् भानुः नयनविषयं अत्येति, श्लाघनीयां शूलिनः सन्ध्याबलिपटहतां कुर्वन् आमन्द्राणां गर्जितानां अविकलं फलं लप्स्यसे ॥३४॥

चञ्चला—अपीति। हे जलधर! अन्यस्मिन् कालेऽपि सन्ध्या-भिन्नसमयेऽपि महाकालं तदाख्यं पूर्वोक्तं महादेवस्थानम् आसाद्य प्राप्य, ते तव स्थातव्यम्, कियन्तं कालं स्थातव्यमित्याह नयनेति। यावत् भानुः सूर्य्यः, नयनविषयं दृष्टिपथम् अत्येति अतिक्रामति। सन्ध्याकालं यावत् तत्र त्वया अवस्थातव्यमित्यर्थः। कथमेतदित्याह कुर्वन्निति। श्लाघनीयां चमत्कारित्वेन प्रशंसनीयाम्, शूलिनो महादेवस्य, सन्ध्याबलौ सन्ध्याकालीयपूजान्तर्गतारात्रिके पटहतां ढक्कात्वं कुर्वन् आरात्रिक-

(३४) नयनविषयं यावदभ्येति भानुः इत्यपि पाठः ।

सम्पादकं ढक्काध्वनिमिव गम्भीरध्वनिं कुर्वन्नित्यर्थः, आमन्द्राणामतीव-गम्भीराणाम्, गर्जितानामात्मनो गर्जनानाम्, अविकलं सम्पूर्णम्, फलं लप्स्यसे ।

अत्र पूर्वार्द्धगतावस्थानं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्ग-मलङ्कारः । तथा निजगर्जनध्वनौ पटहध्वनित्वारोपस्य प्रकृतसन्ध्या-रतिकोपयोगितया परिणामालङ्कारः, स तु वाचकाभावाद्गम्यत इति वस्तुना अलङ्कारध्वनिः ॥३४॥

सञ्जीवनी—अपीति । हे जलधर ! महाकालं नाम पूर्वोक्तं चण्डीश्वरस्थानम्, अन्यस्मिन् सन्ध्याव्यतिरिक्तेऽपि काले आसाद्य प्राप्य ते तव स्थातव्यं त्वया स्थातव्यमित्यर्थः । "कृत्यानां कर्त्तरि वा" इति षष्ठी । यावत् यावता कालेन, भानुः सूर्य्यः, नयनविषयं दृष्टिपथम्, अत्येति अतिक्रामति आ अस्तमयं स्थातव्यमित्यर्थः । यावदित्येतदव-धारणार्थे । "यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः । किमर्थमत आह कुर्वन्निति । श्लाघनीयां प्रशस्यां शूलिनः शिवस्य सन्ध्यायां बलिः पूजा तत्र पटहतां कुर्वन् सम्पादयन्, आमन्द्राणा-मीषद्गम्भीराणाम्, गर्जितानाम् अविकलम् अखण्डम्, फलं लप्स्यसे प्राप्स्यसि । लभेः कर्त्तरि लृट् । महाकालनाथबलिपटहत्वेन विनि-योगात् ते गर्जितसाफल्यं स्यादित्यर्थः ॥३४॥

हिन्दी—वैशाखकी वक्त परभी महाकालमें पहुंच कर जबतक सूर्य्य नयन-विषय न हो जावे, तबतक ठहर जाना । क्योंकि—महादेवके प्रशंसनीय शामकी पूजामें पटहता ( पटहके सदृश आवाज ) करते हुये तुमको गम्भीर गर्ज्जनके याथार्थ्य मिल जावेगा ॥३४॥

বাঙ্গালা—হে মেঘ ! তুমি মহাকালধামে অন্য সময়ে উপস্থিত হইলেও যে পর্য্যন্ত সূর্য্য দৃষ্টিপথ অতিক্রম করেন, সে পর্য্যন্ত তথায়

पादन्यासैः क्वणितरशनास्तत्र लीलावधूतैः
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः।
वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रविन्दून्
आमोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान्॥३५॥

থাকিবে। কারণ, মহাদেবের সন্ধ্যাকালের আরতিতে প্রশংসনীয় ঢাকের কার্য্য করিয়া স্বকীয় গম্ভীর গর্জ্জনের সম্পূর্ণ ফল লাভ করিবে ॥৩৪॥

अन्वयः—तत्र पादन्यासैः क्वणितरशनाः लीलावधूतैः रत्नच्छायाखचितवलिभिः चामरैः क्लान्तहस्ताः वेश्याः त्वत्तः नखपदसुखान् वर्षाग्रविन्दून् प्राप्य, त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् आमोक्ष्यन्ते ॥३५॥

चञ्चला—पादेति। तत्र सन्ध्यावलौ, पादन्यासैः आरत्रिककालीननृत्यस्य ताले ताले चरणक्षेपैः, क्वणिताः शब्दायमानाः रशनाः काञ्चीदामानि यासां ताः लीलया विलासेन अवधूतैः सञ्चालितैः, रत्नानां वलयप्रोथितमणीनां छायया कान्त्या खचिता रञ्जिता वलयो दण्डा येषां तैः, चामरैः क्लान्ताः श्रान्ता हस्ता यासां ताः, वेश्या नृत्यार्थमुपस्थिता गणिकाः, त्वत्तस्तव सकाशात् नखपदेषु नायककर्त्तृकनखक्षतेषु सुखान् सुखकरान्, वर्षस्य वृष्टेः अग्रविन्दून् प्राथमिककणान् प्राप्य, त्वयि मधुकरश्रेणयो भ्रमरपङ्क्तय इव दीर्घा अविरतत्वेन लम्बमानास्तान्, कटाक्षान् आमोक्ष्यन्ते कृतज्ञतया पातयिष्यन्तीत्यर्थः।

अत्र मधुकरेत्यादौ समासगता लुप्तोपमालङ्कारः; तथा सुखकरतया

(३५) पादन्यासक्वणितरशना; रत्नच्छायारचितवलिभिः। क्लान्तहस्ताः। नखमणिसुखान्। आमोक्ष्यन्ति। इति पाठान्तराणि।

कामिनीकर्त्तृकदीर्घकटाक्षदर्शनलाभः कामिनां महानेव लाभ इति वस्तुना वस्तुध्वनिः ॥३५॥

सञ्जीवनी—पादन्यासैरिति। तत्र सन्ध्याकाले पादन्यासैश्चरण-निक्षेपैर्नृत्याङ्गैः, क्वणिताः शब्दायमाना रशना यासां तास्तथोक्ताः। क्वणतेरकर्म्मकत्वात् "गत्यर्थाकर्म्मक" इत्यादिना कर्त्तरि क्तः। लीलया विलासेन अवधूतैः कम्पितैः, रत्नानां कङ्कणमणीनां छायया कान्त्या खचिता रूषिता वलयश्चामरदण्डा येषां तैः। "बलिश्चामरदण्डे च जराविश्लथचर्म्मणि" इति विश्वः। चामरैर्बालव्यजनैः क्लान्तहस्ताः। एतेन दैशिकं नृत्यं सूचितम्। तदुक्तं नृत्यसर्वस्वे—"खड्गकन्दुकवस्त्रादि-दण्डिकाचामरस्रजः। वीणाञ्च धृत्वा यत् कुर्य्युर्नृत्यं तत् दैशिकं भवेत् ॥" इति। वेश्या महाकालनाथमुपेत्य नृत्यन्त्यो गणिकाः, त्वत्तो नखपदेषु नखक्षतेषु सुखान् सुखकरान्। "सुखहेतौ सुखे सुखम्" इति शब्दार्णवः। वर्षस्य अग्रबिन्दून् प्राप्य त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् अपाङ्गान् आमोक्ष्यन्ते। परैरुपकृताः सन्तः सद्यः प्रत्युप-कुर्व्वन्तीति भावः। कामिनीदर्शनीयत्वलक्षणं शिवोपासनाफलं सद्यो लप्स्यसे इति ध्वनिः ॥३५॥

हिन्दी—आपकी वज्र चरणनिक्षेपसे शब्दायमान रशनावाली, तथा लीलासे कम्पित और रत्नोंकी कान्तिसे खचित दण्डवाली पंखाओंसे क्लान्तहस्त वेश्याओंने तुमसे नख और पैरमें सुखकारक वर्षाके प्रथम विन्दु पाकर तुम्हारे उपर भ्रमरपङ्क्तिके माफिक दीर्घ कटाक्ष मोचन करेगा ॥३५॥

বাঙ্গালা—হে মেঘ! সেই সান্ধ্য-আরত্রিকের সময় বেশ্যারা নৃত্য করিবে, তখন তালে তালে পদক্ষেপ করায় তাহাদের চন্দ্রহার বাজিতে আরম্ভ করিবে এবং হেলার সহিত চামর আন্দোলন করায় তাহাদের হস্ত ক্লান্ত হইয়া যাইবে, আর হস্তস্থিত কঙ্কণের রত্নরশ্মিতে সেই চামর-

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजवापुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥३६॥

समূহের দণ্ডগুলি রঞ্জিত হইবে; এই অবস্থায় সেই বেশ্যারা অঙ্গের নখক্ষত স্থানে সুখজনক তোমার বর্ষার প্রথম বিন্দু সকল পাইয়া, কৃতজ্ঞতা সহকারে তোমার প্রতি ভ্রমরশ্রেণীর ন্যায় দীর্ঘ দীর্ঘ কটাক্ষপাত করিতে থাকিবে ॥৩৫॥

अन्वयः—पश्चात् पशुपतेः नृत्यारम्भे प्रतिनवजवापुष्परक्तं सान्ध्यं तेजः दधानः उच्चैः भुजतरुवनं मण्डलेन अभिलीनः ( सन् ) भवान्या शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिः ( सन् ) आर्द्रनागाजिनेच्छां हर ॥३६॥

चञ्चला—पश्चादिति । पश्चात् सन्ध्याकालीनपूजानन्तरम्, पशुपतेर्महाकालनाथस्य शिवस्य, नृत्यारम्भे ताण्डवारम्भसमये, प्रतिनवम् अभिनवं यत् जवापुष्पं तद्वत् रक्तं लोहितवर्णम्, सान्ध्यं सन्ध्याकालीनं तेजो दधानो धारयन् त्वम्, उच्चैरुन्नतं भुजाः शिवस्य दश बाहव एव तरवो वृक्षास्तेषां वनं तद्वद्घनस्थितत्वात् काननम्, मण्डलेन गोलाकारेण अभिलीनः अभिव्याप्तः सन्, तथा भवान्या पार्वत्या, शान्तो मेघत्वनिश्चयादेव निवृत्तः उद्वेगो रक्ताक्तगजाजिनदर्शनभयं ययोस्ते अतएव स्तिमिते दर्शनकौतुकादेव निश्चले नयने यस्मिन् कर्म्मणि तद्यथा स्यात्तथा । दृष्टेति क्रियाया विशेषणमेतत् । दृष्टा भक्तिर्यस्य स तादृशश्च सन्, आर्द्रं शोणितार्द्रं यत् नागाजिनं स्वनिहतगजासुरचर्म्म तस्य इच्छां

(३६) विकसितजपा । नृत्तारम्भे इति पाठभेदौ ।

पशुपतेरेव तद्धारणाभिलाषम्, हर मण्डलेनाभिलीनतया आत्मन एव तत्स्थानपातित्वात् निवर्त्तय ।

अत्र भुजतरुवनमिति निरङ्गं केवलरूपकम्, प्रतिनवजवापुष्प-रक्तमिति समासगता लुप्तोपमा, तथा हरपशुपतिशब्दार्थयोरेकशिवरूप-तया आपाततः पौनरुक्त्यावभासनात् परञ्च हरशब्दस्य निवर्त्तनार्थतया तदपगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कार इत्येतेषां परस्परनैरपेक्ष्यस्थितेः संसृष्टिः । एवं "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमरकोषादौ नवशब्दात् प्राक् अभिरूपोपसर्गोपादानस्य इतरोपसर्गनिवृत्तिबोधनपरत्वात् प्रतिनवशब्दः अभिनवार्थे अवाचक इत्यवाचकत्वदोषः ; तथा तृतीयपाद एव वाक्यसमाप्तावपि पुनस्तदन्तर्गत-हरेतिक्रियाया कर्त्तृतया अध्याहरणीयस्य त्वमिति पदस्य विशेषणतया चतुर्थपादोपादानात् समाप्तपुनरात्ततादोषः ; स तु तृतीयस्थाने चतुर्थ-पादं चतुर्थस्थाने च तृतीयपादं पठित्वा परिहरणीयः । स तु "दीप्तिं सान्ध्यामभिनवजवापुष्परक्तां दधानः" इति पाठेन समाधेयः । इतिहासा-दयस्तु सञ्जीवन्यामेव द्रष्टव्याः ॥३६॥

सञ्जीवनी—पश्चादिति । पश्चात् सन्ध्याबल्यनन्तरम्, पशुपतेः शिवस्य नृत्यारम्भे ताण्डवप्रारम्भे प्रतिनवजवापुष्परक्तं प्रत्यग्रजवा-कुसुमारुणं सन्ध्यायां भवं सान्ध्यं तेजो दधानः, उच्चैरुन्नतं भुजा एव तरवस्तेषां वनं मण्डलेन मण्डलाकारेण अभिलीनः अभिव्याप्तः सन् । कर्त्तरि क्तः । भवान्या भवपत्न्या । "इन्द्रवरुणभवशर्व—" इत्यादिना ङीष् आनुगागमश्च । शान्त उद्वेगो गजाजिनदर्शनभयं ययोस्ते अतएव स्तिमिते निश्चले नयने यस्मिन् कर्म्मणि तत् तथोक्तम् । "उद्वेगस्त्वरिते क्लेशे भये मन्थरगामिनि" इति शब्दार्णवः । भक्तिः पूज्येष्वनुरागः, भावार्थे क्तिन्प्रत्ययः । दृष्टा भक्तिर्यस्य स दृष्टभक्तिः सन्, पशुपतेः आर्द्रं

शोणितार्द्रं यत् नागाजिनं गजचर्म्म । "अजिनं चर्म्म कृत्तिः स्त्री" इत्यमरः । तत्र इच्छां हर निवर्त्तय ; त्वमेव तत्स्थाने भवेत्यर्थः । गजासुरमर्द्दनानन्तरं भगवान् महादेवः तदीयमार्द्राजिनं भुजमण्डलेन बिभ्रत् ताण्डवं चकारेति प्रसिद्धिः । दृष्टभक्तिरिति कथं रूपसिद्धिः दृष्टशब्दस्य "स्त्रियाः पुंवत्" इत्यादिना पुंवद्भावस्य दुर्घटत्वात् "अपूरणी-प्रियादिषु" इति निषेधात् भक्तिशब्दस्य प्रियादिषु पाठादिति तदेतच्चोद्यम्, दृढ़भक्तिरिति शब्दमाश्रित्य प्रतिविहितं गणव्याख्याने दृढ़ं भक्तिरस्येति नपुंसकं पूर्वपदम्, अदार्ढ्यनिवृत्तिमात्रपरत्वे दृढ़शब्दात् लिङ्गविशेषस्य अनुपकारित्वात् स्त्रीत्वमविवक्षितमिति । भोजराजस्तु "भक्तौ च कर्म्म-साधनाया"मित्यनेन सूत्रेण भज्यते सेव्यते इति कर्म्मार्थत्वे भवानीभक्ति-रित्यादि भवति, भावसाधनायान्तु स्थिरभक्तिर्भवान्यामित्यादि भवति" इत्याह । तदेतत् सर्वं सम्यग् विवेचितं रघुवंशसञ्जीवन्यां "दृढ़-भक्तिरिति ज्येष्ठे" इत्यत्र । तस्मात् दृष्टभक्तिरित्यत्रापि मतभेदेन पूर्वपदस्य स्त्रीत्वेन नपुंसकत्वेन च रूपसिद्धिरस्तीति स्थितम् ॥३६॥

**हिन्दी**—सन्ध्यापूजाके बाद महादेवके नृत्य आरम्भमें नया जपाफुलकी माफिक अरुण साम्ध्यतेज धारण करते हुये (और) उन्नत भुजस्वरूप वृक्षकी वनकी मण्डलसी आसकर भवानीके शान्त और उद्वेगवाली नेत्रोंसे दृष्टभक्ति होते हुये तुम आर्द्रनागाजिनकी इच्छा पूर्ण करो ॥३६॥

**বাঙ্গালা**—হে মেঘ! সন্ধ্যাকালের পূজার পর মহাদেবের নৃত্যা-রম্ভের সময়, তাঁহার ঊর্দ্ধপ্রসারিত বাহুরূপ-বৃক্ষসমূহের উপরিভাগে গোলাকারে অবস্থান করিয়া এবং নববিকসিত জবাপুষ্পের ন্যায় রক্তবর্ণ সন্ধ্যাকালীয় তেজ ধারণ করিয়া তাঁহার রক্তাক্ত হস্তিচর্ম্ম ধারণের ইচ্ছা নিবৃত্ত করিবে; তখন পার্ব্বতীদেবী নির্ভয়তাবশতঃ নিশ্চল নেত্রে তোমার ভক্তি দর্শন করিতে থাকিবেন ॥৩৬॥

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।
सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मास्म भूर्विक्लवास्ताः ॥३७॥

अन्वयः—तत्र नक्तं रमणवसतिं गच्छन्तीनां योषितां सूचिभेद्यैः तमोभिः रुद्धालोके नरपतिपथे कनकनिकषस्निग्धया सौदामन्या उर्वीं दर्शय, तोयोत्सर्गस्तनित-मुखरः मास्म भूः, ( यतः ) ताः विक्लवाः ॥३७॥

चञ्चला—गच्छन्तीनामिति। तत्र उज्जयिन्याम्, नक्तं रात्रौ, रमणवसतिं वल्लभगृहम्, गच्छन्तीनां योषिताम् अभिसारिकाणां स्त्रीणाम्, सूचिभेद्यैः सूच्या भेदयोग्यैः प्रगाढैरित्यर्थः, तमोभिरन्धकारैः, रुद्ध आलोको नक्षत्रद्युतिर्यस्मिन् तादृशे, नरपतिपथे राजमार्गे, कनक-निकषवत् निकषपाषाणस्थकनकरेखावदित्यर्थः स्निग्धं तेजो यस्यास्तया, सौदामन्या विद्युता, उर्वीं भूमिं दर्शय। किन्तु तोयोत्सर्गस्तनिताभ्यां वृष्टिगर्जनाभ्यां मुखरः शब्दायमानो मास्म भूर्न भव ; यतस्ता योषितः विक्लवा अल्पेनैव भीताः स्युरित्यर्थः।

अत्र तमसां सूचिभेद्यत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, तया च तेषां प्रगाढत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः, कनकनिकषस्निग्धये-त्यत्र समासगता लुप्तोपमा, तथा मुखरत्वनिषेधं प्रति विक्लवास्ता इति वाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्च इत्येतेषां मिथो नैरपेक्ष्यस्थितेः संसृष्टिः ॥३७॥

सञ्जीवनी—इत्थं महाकालनाथस्य सेवाप्रकारमभिधाय पुनरपि

(३७) तत्र रात्रौ। कनकनिकषच्छायया। मा च भूः। इति पाठभेदाः।

तां कस्याञ्चिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः ।
दृष्टे सूर्य्ये पुनरपि भवान् वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥३८॥

नगरसञ्चारप्रकारमाह गच्छन्तीनामिति। तत्र उज्जयिन्यां नक्तं रात्रौ रमणवसतिं प्रियभवनं प्रति गच्छन्तीनां योषितामभिसारिकाणामित्यर्थः, सूचिभिर्भेद्यैः अतिसान्द्रैरित्यर्थः तमोभिः रुद्धालोके निरुद्धदृष्टिप्रसारे नरपतिपथे राजमार्गे, कनकस्य निकषः निकष्यत इति व्युत्पत्त्या निकषोपलगतरेखा तस्येव स्निग्धं तेजो यस्यास्तया। "स्निग्धन्तु मसृणे सान्द्रे रम्ये क्लीवन्तु तेजसि" इति शब्दार्णवः। सुदाम्नाद्रिणा एकदिक् सौदामनी विद्युत्। "तेनैकदिक्" इत्यण् प्रत्ययः। तया उर्वीं मार्गं दर्शय। किञ्च तोयोत्सर्गस्तनिताभ्यां वृष्टिगर्जिताभ्यां मुखरः शब्दायमानो मास्म भूः। कुतः? ता योषितः विक्लवा भीरवः, ततो वृष्टिगर्जिते न कार्य्ये इत्यर्थः। नात्र तोयोत्सर्गसहितं स्तनितमिति विग्रहः, विशिष्टस्येव केवलस्तनितस्यापि अनिष्टत्वात्। । न च द्वन्द्वपक्षे अल्पाच्तरपूर्वनिपातशास्त्रविरोधः, "लक्षणहेत्वोः क्रियायाः" इति सूत्रे विपरीतनिर्द्देशेन पूर्वनिपातशास्त्रस्य अनित्यत्वज्ञापनादिति ॥३७॥

हिन्दी—उज्जयिनीमें रातको प्रियभवन जाती हुई औरतोंको घन अन्धकार समावृत (अतएव) रुद्धालोक सड़कमें कसौटीके उपर रेखासदृश स्निग्ध बिजलीसे रास्ता दिखलावो ; वृष्टि और गर्ज्जनसे शब्दकरनेवाले न हो ; (क्योंकि) वे भीरु है ॥३७॥

**বাঙ্গালা**—হে মেঘ! সেই উজ্জয়িনীতে রাত্রিকালে অভিসারিকাগণ প্রিয়তমের গৃহে যাইতে থাকিবে; এদিকে প্রগাঢ় অন্ধকারে রাজপথে

নক্ষত্রের আলোক পর্য্যন্ত অবরুদ্ধ থাকিবে। সুতরাং তখন তুমি নিকষ-পাষাণস্থস্বর্ণরেখার ন্যায় উজ্জ্বল বিদ্যুৎদ্বারা তাহাদিগকে পথ দেখাইয়া দিবে; কিন্তু বৃষ্টি বা গর্জ্জনের শব্দ করিও না; কারণ, তাহারা অনেকেই ভীত হইয়া থাকে ॥৩৭॥

अन्वयः—चिरविलसनात् खिन्नविद्युत्कलत्रः भवान् सुप्तपारावतायां कस्याञ्चित् भवनवलभौ तां रात्रिं नीत्वा सूर्य्ये दृष्टे (सति) पुनः अपि अध्वशेषं वाहयेत्, सुहृदां अभ्युपेतार्थकृत्याः न खलु मन्दायन्ते ॥३८॥

चञ्चला—तामिति। चिरं विलसनात् प्रकाशनात् रमणाच्च खिन्नं परिश्रान्तं विद्युदेव कलत्रं यस्य स तादृशो भवान् मेघः, सुप्ता निद्रिताः पारावताः कपोता यस्यां तस्याम्, कस्याञ्चित् भवनवलभौ वाटीस्थचन्द्रशालायाम्, "वलभी चन्द्रशालायाम्" इति विश्वः, तां रात्रिं नीत्वा अतिवाह्य, सूर्य्ये दृष्टे सति पुनरपि अध्वशेषं पथोऽवशिष्टमंशम्, वाहयेत् अतिक्रामेत्। तथा च सुहृदां सम्बन्धे अभ्युपेता स्वीकृता अर्थकृत्या प्रयोजनसम्पादनक्रिया यैस्ते जनाः, न खलु मन्दायन्ते न मन्दवदाचरन्ति न विलम्बन्त इत्यर्थः।

अत्र विद्युति कलत्रत्वारोपः शाब्दः मेघे तत्पतित्वारोपस्तु आर्थ इत्येकदेशविवर्त्ति रूपकम्, तथा रात्रियापनं प्रति खिन्नविद्युत्कलत्र-पदस्यार्थो हेतुरिति काव्यलिङ्गं सामान्येन विशेषसमर्थनरूपोऽर्थान्तर-न्यासश्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

एतदनुरूपं वाक्यं यथा—"निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम्।" "अङ्गीकृतं सुकृतिनः परिपालयन्ति॥" ॥३८॥

सञ्जीवनी—तामिति। चिरं विलसनात् स्फुरणात् खिन्नं विद्युदेव कलत्रं यस्य स भवान्, सुप्ताः पारावताः कलरवा यस्यां तस्यां विविक्तायामित्यर्थः। "पारावतः कलरवः। कपोतः" इत्यमरः। जन-

**तस्मिन् काले नयनसलिलं योषितां खण्डितानां**
**शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु।**
**प्रालेयास्रं कमलवदनात् सोऽपि हर्त्तुं नलिन्याः**
**प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥३९॥**

सञ्चारखलासम्भावित एवेति भावः। कस्याञ्चित् भवनस्य वलभौ आच्छादने उपरिभाग इत्यर्थः। "आच्छादनं स्याद्वलभी गृहाणाम्" इति हलायुधः। तां रात्रिं नीत्वा सूर्य्ये दृष्टे सति उदिते सतीत्यर्थः पुनरपि अध्वशेषं वाहयेत्। तथाहि सुहृदां मित्राणाम् अभ्युपेता अङ्गीकृता अर्थस्य प्रयोजनस्य कृत्या क्रिया यैस्ते अभ्युपेतसुहृदर्था इत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। "कृत्या क्रियादेवतयोः कार्य्ये स्त्री कुपिते त्रिषु" इति यादवः। "कृञः श च" इति चकारात् क्यप्। न मन्दायन्ते खलु न मन्दा भवन्ति हि न विलम्बन्त इत्यर्थः। "लोहितादिडाज्भ्यः क्यष्" इति क्यष्। "वा क्यषः" इत्यात्मनेपदम् ॥३८॥

**हिन्दी**—बहुत समयतक स्फुरणसे बिजलीरूपी औरत हार गई है जिसका, ऐसे तुम पारावतवाली किसी मकानके उपरिगृहके उपर सोते हुये वह रात्रियापन करो। सुवा सूर्य्यदेवको देखनेके बाद फिर बाकी रास्तापर चलो। (क्योंकि) दोस्तोंके नजदीक स्वीकृत हुए कामकरनेवाले आदमी देर नहीं लगाते ॥३८॥

**বাঙ্গালা**—হে মেঘ! বহুক্ষণপর্য্যন্ত বিলসন (উন্মেষণ, ভ্রমণ) করায় তোমার বিদ্যুৎপত্নী পরিশ্রান্ত হইবে; অতএব যথায় কপোতগণ নিদ্রিত থাকিবে, সেইরূপ কোনও বাড়ীর চিলেকোঠাতে সেই রাত্রি

(३९) कमलनयनात् इति पाठभेदः।

অতিবাহিত করিবে। তাহার পর সূর্য্যোদয় হইলে পুনরায় তুমি পথের অবশিষ্ট অংশ অতিক্রম করিতে থাকিবে। কারণ, বন্ধুর কার্য্য সম্পাদন করিতে স্বীকার করিয়া কেহই বিলম্ব করে না ॥৩৮॥

**अन्वयः**—तस्मिन् काले प्रणयिभिः खण्डितानां योषितां नयनसलिलं शान्तिं नेयं अतः आशु भानोः वर्त्म त्यज, सः अपि नलिन्याः कमलवदनात् प्रालेयास्रं हर्त्तुं प्रत्यावृत्तः, त्वयि कररुधि अनल्पाभ्यसूयः स्यात् ॥३९॥

**चञ्चला**—तस्मिन्निति। तस्मिन् काले प्रागुक्तसूर्य्योदयसमये, प्रणयिभिर्दयितजनैः, खण्डितानां वक्ष्यमाणलक्षणानाम्, योषितां स्त्रीणाम्, नयनसलिलं मनःकष्टजनितमश्रुजलम्, शान्तिं नेयम् अनुनयादिना निवृत्तिं प्रापणीयम्; अतः कारणात् आशु शीघ्रम्, भानोः सूर्य्यस्य, वर्त्म पन्थानम्, त्यज। ननूक्तो हेतुर्भानोर्वर्त्मपरित्यागे कथं हेतुः स्यादित्याह प्रालेयेति। सोऽपि भानुरपि, नलिन्याः पद्मिन्याः, कमलं पद्ममेव वदनं मुखं तस्मात्, प्रालेयं हिममेव अस्रं नयनजलं तत्, हर्त्तुं शमयितुं प्रत्यावृत्त उपस्थितः, अतएव त्वयि मेघे, करं किरणं हस्तञ्च रुणद्धीति तस्मिन् सति अनल्पा महती अभ्यसूया रोषो यस्य स तादृशः स्यात् स भानुरित्यर्थः, इष्टव्याघातादिति भावः।

अत्र भानोर्वर्त्मपरित्यागं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, तथा नलिनीसूर्य्ययोर्लिङ्गसाम्येन नायिकानायकव्यवहारसमारोपात् समासोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः। न च प्रालेये अस्रत्वारोपः कमले वदनत्वारोपश्च शाब्दः नलिन्यां नायिकात्वारोपः सूर्य्ये नायकत्वारोपश्च आर्थः इत्येकदेशविवर्त्ति रूपकमिति वाच्यम्, "विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिम्" इत्यादौ दर्पणोदाहृते तिमिरांशुकामिति पाठे एकदेशस्य रूपणेऽपि तिमिरांशुकयोरावरकत्वेन स्फुटसादृश्यतया समासोक्तिसिद्धान्तवत् अत्रापि प्रालेयास्रयोः

कमलवदनयोश्च यथाक्रमं तरलत्वेन सुन्दरत्वेन च स्फुटसादृश्यतया समासोक्तिसिद्धान्तस्यैव औचित्यात्।

एवमुक्तसमासोक्त्या नलिन्याः खण्डितात्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। खण्डितामाह दर्पणे—

"पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता॥"

तथा "स्यादनल्पाभ्यसूयः" इत्यत्र असूयाया एव वाक्यार्थे प्राधान्यात् तस्याश्च समासे गुणीभावात् विधेयाविमर्शदोषः, स तु "स्यादसूयास्य गुर्वी" इति पाठेन परिहरणीयः॥३९॥

सञ्जीवनी—तस्मिन्निति। तस्मिन् काले पूर्वोक्ते सूर्य्योदयकाले प्रणयिभिः प्रियतमैः खण्डितानां योषितां नायिकाविशेषाणाम्। "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता" इति दशरूपके। नयनसलिलं शान्तिं नेयं नेतव्यम्। नयतिर्द्विकर्म्मकः। अतो हेतोः भानोर्वर्त्म आशु शीघ्रं त्यज, तस्यावरको मा भूरित्यर्थः। विपक्षे अनिष्टमाचष्टे—सोऽपि भानुः, नलानि अम्बुजानि अस्याः सन्तीति नलिनी पद्मिनी। "दलेऽम्बुजे नलं ना तु राज्ञि नाले तु न स्त्रियाम्" इति शब्दार्णवः। तस्याः स्वकान्तायाः कमलं स्वकुसुममेव वदनं तस्मात् प्रालेयं हिममेव अस्त्रमश्रु हर्त्तुं शमयितुं प्रत्यावृत्तः प्रत्यागतः। नलिन्याश्च भर्त्तुर्भानोर्देशान्तरे नलिन्यन्तरगमनात् खण्डितात्वमित्याशयः। ततस्त्वयि, करान् अंशून् रुणद्धीति कररुत् क्विप्, तस्मिन् कररुधि सति, हस्तरोधिनि सतीति च गम्यते। "बलिहस्तांशवः कराः" इत्यमरः। अनल्पाभ्यसूयः अधिकविद्वेषः स्यात्। प्रायेण इच्छाविशेषविघातात् द्वेषो रोषविशेषश्च कामिनां भवतीति भावः। किञ्च "आश्रयां चार्कमीशानं विष्णुं वा

गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्य्यात्
मोघीकर्त्तुं चटुलसफरोद्वर्त्तनप्रेक्षितानि ॥४०॥

द्वेष्टि यो जनः। श्रेयांसि तस्य नश्यन्ति रौरवञ्च भवेत् ध्रुवम् ॥" इति निषेधात् कार्य्यहानिश्च भविष्यतीति ध्वनिः ॥३९॥

**हिन्दी**—सूर्य्योदयके समयपर प्रियतमोंका खण्डिता औरतोंके आंसु शान्त करना योग्य है। इस वास्ते सूर्य्यदेवकी रुकावट जलदीसे दूर करना चाहिये। (क्योंकि) वहभी अपनी नलिनीके कमलरूप वदनसे हिमरूप आंसु हटानेके लिये उपस्थित होकर तुमको किरण रोकनेवाले समझकर तुम्हारे उपर विद्विष्ट हो जावेगा ॥३९॥

**বাঙ্গালা**—সেই সূর্য্যোদয়কালে প্রণয়িগণ খণ্ডিতারমণীদিগের চোখের জল মুছাইয়া দিয়া থাকে; অতএব তুমি তখন তাড়াতাড়ি সূর্য্যের পথ ছাড়িয়া দিবে। কারণ, তিনিও (সূর্য্যও) পদ্মিনীর পদ্ম বদন হইতে শিশির-অশ্রু মুছাইয়া দিবার জন্য উপস্থিত হইবেন; সে সময়ে তুমি তাঁহার কররোধ করিলে তিনি তোমার প্রতি অত্যন্ত ক্রুদ্ধ হইবেন ॥৩৯॥

**अन्वयः**—गम्भीरायाः सरितः प्रसन्ने चेतसि इव पयसि प्रकृतिसुभगः ते छायात्मापि प्रवेशं लप्स्यते, तस्मात् त्वं कुमुदविशदानि अस्याः चटुलशफरोद्वर्त्तनप्रेक्षितानि धैर्य्यात् मोघीकर्त्तुं न अर्हसि ॥४०॥

**चञ्चला**—गम्भीरायाः इति। गम्भीरा नाम काचित् तत्रत्या सरित् नदी तस्याः, धीरायाः नायिकायाः इवेति च गम्यते। प्रसन्ने

अनुरक्ततया निर्द्दोषे निर्म्मले च चेतसि मनसीव, पयसि जले, प्रकृति-सुभगः स्वभावसुन्दरः ते तव, छायात्मापि प्रतिविम्बभूतदेहोऽपि प्रवेश-मनिच्छोरपि तव प्रतिविम्बभूतो देह इत्यपिशब्दस्यार्थः प्रवेशं लप्स्यते प्राप्स्यति। तस्मात् कारणात्, त्वं कुमुदविशदानि कैरवतुल्यधवलानि, अस्या गम्भीरायाः चटुलानि सत्वराणि शफराणां प्रोष्ठीमत्स्यानाम् उद्वर्त्तनानि उल्लसितान्येव प्रेक्षितानि दर्शनानि तानि, धैर्य्यात् धीर-त्वात् निर्विकारतामवलम्ब्येत्यर्थः, मोघीकर्त्तुं प्रत्यनुरागाप्रदर्शनेन निष्फलीकर्त्तुं न अर्हसि न योग्यो भवसि; अनुरक्तां प्रति प्रत्यनुराग-प्रदर्शनस्यैवौचित्यादिति भावः।

अत्र प्रथमचरणे चेतसः साम्यं वाच्यं धीराया नायिकायाः साम्यन्तु गम्यमिति एकदेशविवर्त्तिन्युपमा, तृतीये चरणे कुमुदविशदानीत्यत्र समासगता लुप्तोपमा, तथा चतुर्थे चटुलेत्यादौ निरङ्गं केवलरूपकमिति लुप्तोपमारूपकयोरङ्गाङ्गिभावेन सङ्करः, तस्य च उक्तया एकदेशविवर्त्युप-मया सह नैरपेक्ष्येण संसृष्टिः ॥४०॥

सञ्जीवनी—गम्भीराया इति। गम्भीरा नाम सरित् उदात्त-नायिका च ध्वन्यते। तस्याः प्रसन्ने अनुरक्तत्वात् दोषरहिते चेतसीव प्रसन्ने अतिनिर्म्मले पयसि प्रकृत्या स्वभावेनैव सुभगः सुन्दरः। "सुन्दरे-ऽधिकभाग्ये च दुर्द्दिनेतरवासरे। तुरीयांशे श्रीमति च सुभगः" इति शब्दार्णवः। ते तव छाया चासौ आत्मा च, सोऽपि प्रतिविम्बशरीरञ्च प्रवेशं लप्स्यते, अपिशब्दात् प्रवेशमनिच्छोरपीति भावः। तस्मात् छायाद्वारापि प्रवेशावश्यम्भावित्वात्, अस्या गम्भीरायाः कुमुदवत् विशदानि धवलानि चटुलानि शीघ्राणि शफराणां मीनानाम् उद्वर्त्तनानि उल्लुण्ठितान्येव प्रेक्षितानि अवलोकनानि। "त्रिषु स्यात् चटुलं शीघ्रम्" इति विश्वः। एतावदेव गम्भीराया अनुरागलिङ्गम्, धैर्य्यात् धार्ष्ट्यात्

तस्याः किञ्चित् करधृतमिव प्राप्तवानीरशाखं
हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम्।
प्रस्थानं ते कथमपि सखे! लम्बमानस्य भावि
ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः ॥४१॥

---

धूर्त्तत्वेन वैयात्यादिति यावत्, मोघीकर्त्तुं विफलीकर्त्तुं नार्हसि नानुरक्ता विप्रलब्धव्या इत्यर्थः। धूर्त्तलक्षणन्तु—"क्लिश्नाति नित्यं दयिताम् अङ्गस्थामतिसुन्दरः। अन्यत्यरक्तां यत्नेन रक्तां धूर्त्तो विमुञ्चति॥" इति ॥४०॥

हिन्दी—गम्भीरा-नदीके चित्तके माफिक निर्म्मल पानीमें स्वभाव-सुन्दर तुम्हारे छायारूप आत्माभी प्रवेश लाभ करेगा। इस वास्ते इसकी (नदीकी) कुमुदके सदृश विशद त्वरित पोठीमछलियोंका उल्लुण्ठनरूप अवलोकन धीरतासे विफल करनेमें तुम योग्य न हो ॥४०॥

বাঙ্গালা—হে মেঘ! ধীরা নায়িকার চিত্তের ন্যায় গম্ভীরানদীর নির্ম্মল জলে তোমার স্বভাব সুন্দর প্রতিবিম্ব শরীর প্রবেশ লাভ করিবে। অতএব ঐ গম্ভীরানদীর কুমুদের ন্যায় শুভ্রবর্ণ প্রোষ্ঠীমৎস্যের শীঘ্র উল্লাসরূপ দৃষ্টিগুলিকে ধৈর্য্যবশতঃ নিষ্ফল করা তোমার উচিত নহে ॥৪০॥

अन्वयः—(हे) सखे! प्राप्तवानीरशाखं किञ्चित् करधृतं इव मुक्तरोधोनितम्बं नीलं तस्याः सलिलवसनं हृत्वा लम्बमानस्य ते प्रस्थानं कथं अपि भावि ज्ञातास्वादः कः विवृतजघनां विहातुं समर्थः ॥४१॥

चञ्चला—तस्या इति। हे सखे! मेघ! प्राप्ता वानीरस्य तीरोत्पन्नवेतसस्य शाखा येन तत्; अतएव किञ्चित्करधृतमिव हस्तेनावमाकृष्टमिव स्थितम्, मुक्तः अधःसंसनात् परित्यक्तः रोधः स्फीत-

---

(४१) नीला नीलं। पुलिनजघनां। इति पाठभेदौ।

मध्यदेशं तीरमेव नितम्बो यैन तत् तादृशम्, नीलं नीलवर्णम्, तस्या गम्भीराया नद्याः कस्याश्चिन्नायिकायाश्च, सलिलं जलमेव वसनं वस्त्रम्, हृत्वा गृहीत्वा अपहृत्य च, लम्बमानस्य तज्जलभारेण अवनतीभूतस्य तदीयजघनदेशे अवतिष्ठमानस्य च, ते तव प्रस्थानं गन्तव्यदेशे गमनं कथमपि महाकष्टेन, भावि भविष्यति। कथमेतदित्याह ज्ञातेति। तथाहि ज्ञातास्वादः अवगतसङ्गमसुखः को जनः विवृतजघनां वसनस्रंसनात् प्रकटितजघनदेशां कामिनीम्, विहातुं परित्यक्तुं समर्थो भवति? अपि तु कोऽपि नेत्यर्थः।

अत्र करधृतमिवेति क्रियोत्प्रेक्षा, तामुत्प्रेक्षां प्रति च प्राप्तवानीर-शाखेति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमित्यनयोरङ्गाङ्गि-भावेन सङ्करः। तथा सलिले वसनत्वारोपः रोधसि नितम्बत्वारोपश्च शाब्दः, गम्भीरायां नायिकात्वारोपस्तु आर्थः, रोधोनितम्बयोः सादृश्य-स्यास्फुटमित्यतः किमेकदेशविवर्त्ति रूपकम्, किंवा मेघगम्भीरयोः पुंस्त्रीलिङ्गसाम्येन नायकनायिकाव्यवहारसमारोपात् सलिलवसनयोः सादृश्यस्य स्फुटत्वाच्च समासोक्तिरिति सन्देहात् तयोः सन्देहसङ्करः। एवं चतुर्थपादे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः अर्थापत्तिश्च अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः। एषाञ्च त्रयाणां सङ्कराणामेव अङ्गाङ्गिभावेन पुनः सङ्करः। संसृष्टिसङ्करयोरपि पुनः संसृष्टिसङ्करौ भवितुमर्हत इति प्रदर्शितमस्माभिः साहित्यदर्पणे सङ्करप्रकरणे। साहित्यदर्पणे समासोक्तिप्रकरणे एकदेशविवर्त्तिरूपकसमासोक्त्योरुक्त-विशेषो द्रष्टव्यः ॥४१॥

सञ्जीवनी—तस्या इति। हे सखे! प्राप्ता वानीरशाखा वेतसशाखा येन तत् तथोक्तम् अतएव किञ्चिदीषत् करधृतं हस्ताव-लम्बितमिव स्थितम्, मुक्तस्यक्तः रोधस्तटमेव नितम्बः कटिर्येन तत्तथोक्तम्।

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः
स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥४२॥

---

"नितम्बः पश्चिमे श्रोणिभागेऽद्रिकटके कटौ" इति यादवः। नीलं कृष्णवर्णं तस्या गम्भीरायाः सलिलमेव वसनं हृत्वा अपनीय। प्रस्थान-समये प्रेयसीवसनहरणं विरहतापापनोदनार्थमिति प्रसिद्धम्। लम्ब-मानस्य पीतसलिलभरात् लम्बमानस्य अन्यत्र जघनारूढ़स्य ते तव प्रस्थानं प्रयाणं कथमपि कृच्छ्रेण भावि। कृच्छ्रत्वे हेतुमाह ज्ञातेति। ज्ञातास्वादः अनुभूतरसः कः पुमान् विवृतं प्रकटीकृतं जघनं कटिस्तत्-पूर्वभागो वा यस्यास्ताम्। "जघनं स्यात् कटौ पूर्वश्रोणिभागापरांशयोः" इति यादवः। विहातुं त्यक्तुं समर्थः? न कोऽपीत्यर्थः ॥४१॥

**हिन्दी**—हे मित्र! वेतसोंकी शाखा जिनका मिल गई, इस वास्ते हाथसे कुछ चकड़े हुएकी तरह वर्त्तमान किनारारूप नितम्बको छोड़ दिया जिसने, ऐसी नील नदीके पानीरूप कपड़ा लेकर लम्बे हुये तुम्हारे जाना किसी तरह (अर्थात् कष्टसे) सम्भव होगा। (क्योंकि) रस अनुभव करनेवाला कौन विवृत जघनवाली औरतको छोड़नेमें समर्थ है? कोईभी नहीं ॥४१॥

**বাঙ্গালা**—হে সখে! তীরস্থিত বেতসের শাখা আসিয়া সংযুক্ত হওয়ায় যাহাকে হস্তদ্বারা কিঞ্চিৎ ধৃত বলিয়া বোধ হইবে এবং যে পুলিন-রূপ নিতম্বদেশ পরিত্যাগ করিয়া নীচে সরিয়া যাইবে; গম্ভীরানদীর সেই নীলবর্ণ জলরূপ বস্ত্র হরণ করিয়া তুমি লম্বিত হইয়া পড়িবে; সুতরাং তখন অত্যন্ত কষ্টেই তোমার প্রস্থান করা সম্ভব হইবে। কারণ, সংসর্গ

সুখ অনুভব করিয়া কোন্ ব্যক্তি বিবৃতজঘনা রমণীকে পরিত্যাগ করিতে সমর্থ হইয়া থাকে ? ॥৪১॥

**अन्वयः**—त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः दन्तिभिः स्रोतोरन्ध्रध्वनितसुभगं पीयमानः काननोदुम्बराणां परिणमयिता शीतः वायुः देवपूर्व्वं गिरिं उपजिगमिषोः ते नीचैः वास्यति ॥४२॥

**चञ्चला**—अधःशीतलवायुवहनात् गमनश्रमलाघवमपि ते भविष्यतीत्याह त्वदिति। हे मेघ! तव निष्यन्देन जलवर्षणेन उच्छ्वसिता स्फीतीभूता या वसुधा भूमिस्तस्या गन्धसम्पर्केण सौरभसंसर्गेण रम्यो मनोहरः। एतेन वायोः सौगन्ध्यमुक्तम्। दन्तिभिर्हस्तिभिः, स्रोत इन्द्रियं तच्चात्र नासिकारूपम्। "स्रोतोऽम्बुवेगेन्द्रिययोः" इत्यजयः। तस्य रन्ध्रेषु अग्रदेशस्थच्छिद्रेषु यत् ध्वनितं ग्रहणकालीनशब्दस्तेन सुभगं सुन्दरं यथा स्यात्तथा, पीयमानो गृह्यमाणः। अनेन वायोर्मान्द्यं द्योतितं तीव्रवायोः सुभगपानासम्भवात्। तथा काननोदुम्बराणां वन्योदुम्बरफलानां परिणमयिता पक्वताजनकः। एतेनापि सौगन्ध्यं सूचितम्। शीतः शीतलो वायुः, देवपूर्वं गिरिं देवगिरिम्, उपजिगमिषोरुपगन्तुमिच्छोः, ते तव, नीचैरधःप्रदेशे वास्यति प्रवक्ष्यति; अतस्ते गमनश्रमलाघवमवश्यमेव भविष्यतीति भावः।

अत्र नासिकारूपेन्द्रियविशेषे वक्तव्ये इन्द्रियसामान्यवाचकस्रोतःशब्दप्रयोगात् विशेषे अविशेषाख्यदोषः; स तु "नासारन्ध्रध्वनितसुभगम्" इति पाठेन परिहरणीयः। तथा देवो देवशब्दः पूर्वो यस्य गिरिशब्दस्य स देवपूर्वो गिरिर्गिरिशब्दस्तम्। ततश्च वाच्यवाचकयोरभेदोपचारात् देवगिरिनामकपर्वतप्रतीतिः। एवञ्च देवपूर्वगिरिशब्दस्य तादृशानुपूर्वीकशब्दपरत्वे लक्षणैव फलिता, सा च रूढिप्रयोजनयोरभावादशक्तिक्षतेति साहित्यदर्पणमते नेयार्थत्वदोषः। मल्लिनाथस्तु अवाच्यवचनं नाम

दोष इत्याहुः स्म। "नीचैर्वायात्तव जिगमिषोर्देवगिर्य्याख्यशैलम्" इति पाठे तु उभयोरपि समाधानमिति ध्येयम्।

वर्त्तमान-"झान्सी"नगरात् नैऋर्तकोणे क्रोशत्रयाभ्यन्तरे एष देवगिरिर्वर्त्तत इति साम्प्रदायिकाः ॥४२॥

सञ्जीवनी—त्वदिति। त्वन्निष्यन्देन तव वृष्ट्या उच्छ्वसिताया उपबृंहितायाः वसुधाया भूमेः गन्धस्य सम्पर्केण रम्यः सुरभिरित्यर्थः। स्रोतःशब्देन इन्द्रियवाचिना तद्विशेषो घ्राणं लक्ष्यते। "स्रोतोऽम्बुवेगेन्द्रिययोः" इत्यजयः। स्रोतोरन्ध्रेषु नासाग्रकुहरेषु यत् ध्वनितं शब्दस्तेन सुभगं यथा तथा दन्तिभिर्गजैः पीयमानः वसुधागन्धलोभादाघ्रायमाण इत्यर्थः। अनेन मान्द्यमुच्यते। काननेषु वनेषु उदुम्बराणां जन्तुफलानाम्। "उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः" इत्यमरः। परिणमयिता परिपाचयिता, "मितां ह्रस्वः" इति ह्रस्वः। शीतो वायुः, देवपूर्वं देवशब्दपूर्वं गिरिं देवगिरिमित्यर्थः, उपजिगमिषोः उपगन्तुमिच्छोः, गमेः सनन्तादुप्रत्ययः। ते तव नीचैः शनैः वास्यति, त्वां वीजयिष्यतीत्यर्थः। सम्बन्धमात्रविवक्षायां षष्ठी। "देवपूर्वं गिरिम्" इत्यत्र देवपूर्वत्वं गिरिशब्दस्य न तु संज्ञिनस्तदर्थस्येति संज्ञायाः संज्ञित्वाभावात् अवाच्यवचनं दोषमाहुरालङ्कारिकाः। तदुक्तमेकावल्याम्—"यदवाच्यस्य वचनमवाच्यवचनं हि तत्" इति। समाधानन्तु देवशब्दविशेषितेन गिरिशब्देन शब्दपरेण मेघोपगमनयोग्यो देवगिरिर्लक्ष्यत इति कथञ्चित् सम्मान्यम् ॥४२॥

हिन्दी—तुम्हारी वृष्टिसे वर्द्धित पृथिवीकी गन्धवहसे सुरभि, और नासिकाके रन्ध्रोंसे जो शब्द उससे मनोहर होकर, हाथियोंसे आघ्रात होता हुआ वनोंका उदुम्बरफल पकानेवाली ठण्ढी वायु देवगिरिपर जानेकी इच्छा करनेवाले तुमको धीरसे ढकी लेगी ॥४२॥

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः ॥४३॥

বাঙ্গালা—হে মেঘ! তুমি দেবগিরিতে যাইতে ইচ্ছা করিয়া প্রস্থান করিলে, তোমারই বৃষ্টির জলে পরিস্ফীত ভূমির সৌরভ বহন করায় মনোহর, হস্তিগণকর্তৃক নাসিকা-রন্ধ্রের শব্দে সুন্দরভাবে পরিগৃহীত এবং বন্য উডুম্বরফলের পক্কতাসম্পাদক শীতল বায়ু তোমার নিম্নদেশে বহিত হইতে থাকিবে ॥৪২॥

अन्वयः—भवान् पुष्पमेघीकृतात्मा व्योमगङ्गाजलार्द्रैः पुष्पासारैः तत्र नियतवसतिं स्कन्दं स्नपयतु, हि वासवीनां चमूनां रक्षाहेतोः नवशशिभृता तत् अत्यादित्यं तेजः हुतवहमुखे सम्भृतं (आसीत्) ॥४३॥

सञ्जला—तत्रेति। हे मेघ! भवान् पुष्पमेघीकृतः कामरूपत्वात् पुष्पवर्षिमेघस्वरूपीकृत आत्मा स्वदेहो येन तादृशः सन्, व्योमगङ्गाया मन्दाकिन्या जलेन आर्द्रैः सिक्तैः, पुष्पाणाम् आसारैर्धारया वर्षणैः, तत्र देवगिरौ, नियता नित्या वसतिरवस्थितिर्यस्य तं तथोक्तम्, स्कन्दं कार्त्तिकेयं स्नपयतु पूज्यत्वबुद्ध्या अभिषिञ्चतु। ननु कार्त्तिकेयस्य पूज्यत्वं कुतः येनासौ स्नपयितव्य इत्याह रक्षेति। हि यस्मात्, वासवीनाम् इन्द्रसम्बन्धिनीनाम्, चमूनां सेनानाम्, रक्षाहेतोः सेनापतित्वार्थमित्यर्थः, नवशशिभृता चन्द्रशेखरेण महादेवेन, तत् कार्त्तिकेयरूपम्, अत्यादित्यम् आदित्याभिभवि, तेजः स्वकीयवीर्य्यम्, हुतवहमुखे वह्निवदने, सम्भृतं स्थापितमासीत्। अतोऽस्य सर्वथैव पूज्यत्वमिति भावः।

अत्र पूर्वार्द्धसूचितकार्त्तिकेयपूज्यत्वरूपकार्य्यस्य परार्द्धद्योतिततत्-प्रभावातिशयरूपकारणेन समर्थनादर्थान्तरन्यासोऽलङ्कारः। अनेन च देवतापूजनेन तव महदेव मङ्गलं भविष्यतीति ध्वन्यते इति वस्तुना वस्तुध्वनिः॥४३॥

सञ्जीवनी—तत्रेति। तत्र देवगिरौ, नियता वसतिर्यस्य तं नित्यसन्निहितमित्यर्थः। पुरा किल तारकाख्यासुरविजयसन्तुष्टसुर-प्रार्थनावशात् भगवान् भवानीनन्दनः स्कन्दः—"नित्यमहमिह सह शिवाभ्यां वसामि" इत्युक्ता तत्र वसतीति प्रसिद्धिः। स्कन्दं कुमारं स्वामिनम्, पुष्पमेघः कृत आत्मा येन स पुष्पमेघीकृतात्मा कामरूपत्वात् पुष्पवर्षुकमेघीकृतविग्रहः सन् व्योमगङ्गाजलार्द्रैः पुष्पासारैः पुष्पसम्पातैः। "धारासम्पात आसारः" इत्यमरः। भवान् स्वयमेव स्नपयतु अभिषिञ्चतु, स्वयं पूजाया उत्तमत्वादिति भावः। तथा च शम्भुरहस्ये—"स्वयं यजति चेद्देवमुत्तमा सोदरात्मजैः। मध्यमा याजयेद्भृत्यैरधमा याजनक्रिया॥" इति। स्कन्दस्य पूज्यत्वसमर्थनेनार्थेन अर्थान्तरं न्यस्यति रचेति। तत् भगवान् स्कन्द इत्यर्थः। विधेयप्राधान्यान्नपुंसकनिर्द्देशः। वासवस्य इमा वासव्यः। "तस्येदम्" इत्यण्। तासां वासवीनामैन्द्री-णाम्, चमूनां सेनानां रचैव हेतुस्तस्य रचाहेतोः रचया कारणेन रचार्थ-मित्यर्थः। "षष्ठी हेतुप्रयोगे" इति षष्ठी। नवशशिभृता भगवता चन्द्रशेखरेण, वहतीति वहः, पचाद्यच्, हुतस्य वहो हुतवहो वह्निस्तस्य मुखे सम्भृतं सञ्चितम्, आदित्यमतिक्रान्तम् अत्यादित्यम्। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः। तेजो हि [illegible]त् भगवतो हरस्यैव मूर्त्त्यन्तरमित्यर्थः। अतः पूज्यमिति भावः॥ [illegible]यान्तु शुद्धत्व[illegible] सूचनार्थम्। तदुक्तं शम्भुरहस्ये—"गवा [illegible] द्विजस्याग्नि यो[illegible]

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्त्तयेथाः ॥४४॥

हृत् कवेर्वचः । परं शुचितमं विद्यान्मुखं स्त्रीवह्निवाजिनाम् ॥"
इति ॥४३॥

**हिन्दी**—वह देवगिरिमें सर्वदा रहनेवाले कार्त्तिकको तुमने फुलवर्षानेवाले मेघोंकास्वरूप ग्रहण कर आकाशके गङ्गापानीसे भिगी हुई पुष्पवृष्टिसे स्नान करा देना । (क्योंकि ) वह स्कन्द इन्द्रकी सेनाओंकि रक्षाकरनेके वास्ते नवशशाङ्कधारी महादेवने अग्निके वदनमें सूर्य्यसे बढ़ा हुआ सञ्चित तेज ही है ॥४३॥

**বাঙ্গালা**—হে মেঘ! তুমি পুষ্পবর্ষী-মেঘের রূপ ধারণ করিয়া, আকাশগঙ্গার জলসংসিক্ত পুষ্পবৃষ্টিদ্বারা সেই দেবগিরিতে সর্ব্বদা অবস্থিত কার্ত্তিকেয়কে স্নান করাইবে। কারণ, ভগবান্ মহাদেব ইন্দ্রের সৈন্যগণকে রক্ষা করিবার নিমিত্ত সূর্য্য হইতেও অধিক তেজস্বী সেই কার্ত্তিকেয়রূপ নিজের তেজকে অগ্নির মুখে স্থাপিত করিয়াছিলেন ॥৪৩॥

**अन्वयः**—भवानी पुत्रप्रेम्णा ज्योतिर्लेखावलयि गलितं यस्य बर्हं कुवलयदलप्रापि कर्णे करोति, हरशशिरुचा धौतापाङ्गं पावकेः तं मयूरं पश्चात् अद्रिग्रहणगुरुभिः गर्जितैः नर्त्तयेथाः ॥४४॥

**चम्बला**—आत्मनो मङ्गलाय कार्त्तिकेयसन्तोषजनकं कार्य्यान्तरमपि त्वया तत्र कर्त्तव्यमित्याह ज्योतिरिति । भवानी पार्वती, पुत्रे

(४४) हरशशिरुचाप्याययेथाम् । पुत्रप्रीत्या । कुवलयदलक्षेपि । कुवलयदलश्रि । इति पाठान्तराणि ।

कार्त्तिकेये यत् प्रेम स्नेहस्तेन, पुत्रं कार्त्तिकेयं प्रति स्नेहेन तद्वाहनं मयूरं प्रत्यपि समादरपातादिति भावः, ज्योतिर्लेखायास्तेजःपङ्क्तेः वलयं मण्डलमस्यास्तीति तत् गलितं स्वयमेव विच्युतं न तु छिन्नं मयूरस्य वेदनासम्भवादिति भावः, यस्य मयूरस्य वर्हं पिच्छं कुवलयदलं नीलोत्पलपत्रं प्राप्नोतीति कुवलयदलप्राप् तस्मिन्, कर्णे करोति अर्पयति। हरशशिरुचा महादेवमस्तकस्थितचन्द्रप्रभया, धौतौ अधिक-परिष्कृतौ अपाङ्गौ नेत्रयोः प्रान्तौ यस्य तम्, पावकेरग्निसुतस्य कार्त्तिकेयस्य, तं मयूरम्, पश्चात् पुष्पवृष्टेः परम्, अद्रिग्रहणं गुहासु गर्जितशब्दादानं प्रतिध्वनिरित्यर्थः तेन गुरुभि-र्महद्भिः, गर्जितैः स्वकीयगर्जनैः नर्त्तयेथाः नृत्यं कारयेः। "मेघध्वानेषु नृत्यं भवति च शिखिनाम्" इति कविसमयप्रसिद्धिरत्र द्रष्टव्या ॥४४॥

सञ्जीवनी—ज्योतिरिति। ज्योतिषस्तेजसो लेखा राजयस्तासां वलयं मण्डलमस्यास्तीति तथोक्तम्, गलितं भ्रष्टम्, न तु लौल्यात् स्वयं छिन्नमिति भावः। यस्य मयूरस्य वर्हं पिच्छम्। "पिच्छवर्हे नपुंसके" इत्यमरः। भवानी गौरी पुत्रप्रेम्णा पुत्रस्नेहेन कुवलयस्य दलं पत्रं तत्प्रापि तद्योगि यथा तथा कर्णे करोति दलेन सह धारयतीत्यर्थः। यद्वा कुवलयस्य दलप्रापि दलभाजि दलार्हे कर्णे करोति। क्विबन्तात् सप्तमी। दलं परित्यज्य तत् स्थाने वर्हं धत्ते इत्यर्थः। नाथस्तु "कुवलयदलक्षेपि" इति पाठमनुसृत्य "क्षेपे च निन्दा अपसारणं वा" इति व्याख्यातवान्। हरशशिरुचा हरशिरश्चन्द्रिकया धौतापाङ्गं स्वतोऽपि शौक्ल्यादतिधवलितनेत्रान्तम्। "अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः। पावकस्य अग्नेरपत्यं पावकिः स्कन्दः। "अत इञ्" इति इञ्। तस्य तं पूर्वोक्तं मयूरं पश्चात् पुष्पाभिषेचनानन्तरम्, अद्रे-र्देवगिरेः कर्त्तुः ग्रहणेन गुहासंक्रमणेन गुरुभिः प्रतिध्वानमहद्भिरित्यर्थः,

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्त्तिम् ॥४५॥

गर्जितैः नर्त्तयेथाः नृत्यं कारय। माङ्गलिकभावेन भगवन्तं कुमारमुपास्स्व इति भावः। नर्त्तयेथा इत्यत्र "अणावकर्मकाच्चित्तवत्कर्त्तृकात्" इत्यात्मनेपदापवादः। "निगरणचलनार्थेभ्यश्च" इति परस्मैपदं न भवति तस्य "न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः" इति प्रतिषेधात् ॥४४॥

**हिन्दी**—पार्व्वती स्वयं भ्रष्ट तेजरेखावाली जिसका (मयूरका) पिच्छ लड़कीका स्नेहसे कुवलयपत्र देनेमें योग्य कानमें रखती है। महादेवकी चन्द्रकान्तिसे सफेद नेत्रवाले, वह स्कन्द मयूरके पिच्छे पहाड़की गुफा ग्रहण करनेमें गम्भीर गर्ज्जनोंसे तुम नचावो ॥४४॥

**বাঙ্গালা**—দুর্গাদেবী, পুত্র কার্ত্তিকেয়ের প্রতি স্নেহবশতঃ নীলোৎপলদল ধারণের যোগ্য কর্ণদেশে যে ময়ূরের তেজোমণ্ডলসমন্বিত এবং স্বয়ং নিপতিত পিচ্ছ ধারণ করিয়া থাকেন এবং যে ময়ূরের নয়নযুগলের প্রান্তদেশ মহাদেবের মস্তকস্থিত চন্দ্রের কিরণে আরও পরিষ্কৃত হইয়া থাকে; পুষ্পবৃষ্টির পর পর্ব্বতগুহাতে প্রতিধ্বনি হওয়ায় বৃদ্ধিপ্রাপ্ত গর্জ্জনদ্বারা কার্ত্তিকেয়ের সেই ময়ূরকে নৃত্য করাইবে ॥৪৪॥

**अन्वयः**—एनं शरवणभवं देवं आराध्य वीणिभिः सिद्धद्वन्द्वैः जलकणभयात् मुक्तमार्गः उल्लङ्घिताध्वा सुरभितनयालम्भजां भुवि स्रोतोमूर्त्या परिणतां रन्तिदेवस्य कीर्त्तिं मानयिष्यन् (सन्) व्यालम्बेथाः ॥४५॥

(४५) रत्नमाली। रत्नवती। इति पाठभेदौ।

चञ्चला—आराध्येति। एनं पूर्वोक्तम्, शरवणभवं शराख्यतृण-काननं समुत्पन्नम्, देवं कार्त्तिकेयम् आराध्य पुष्पवृष्टिमयूरनर्त्तनाभ्यां सन्तोष्य, वीणाभिर्वीणाधारिभिः, सिद्धद्वन्द्वैः सिद्धनामकदेवयोनिविशेष-दम्पतिभिः कार्त्तिकेयमेव उपासितमुपागतैरिति भावः, जलकणभयात् त्वदीयैरेव वृष्टिविन्दुभिर्वीणाया आर्द्रत्वे चारुशब्दोत्पत्तिबाधाभया-दित्यर्थः, मुक्तस्त्यक्तो मार्गः पन्था यस्य स तादृशस्त्वम्, उल्लङ्घितः कियदतिक्रान्तः अध्वा पन्था येन स तथोक्तः सन्, सुरभितनयानां गवाम् आलम्भात् गोमेधयज्ञे छेदनात् जायत इति ताम्, भुवि स्रोतोमूर्त्या प्रवाहरूपेण परिणतां रन्तिदेवस्य तदाख्यस्य दशपुराधिपतेः कीर्त्तिं गोमेधयज्ञजनितां सुख्यातिं चर्म्मण्वतीं नाम नदीमिति तात्पर्य्यम्, मानयिष्यन् तदीयजलपानेनाभ्यर्थयिष्यन् सन्, व्यालम्बेथास्तदीयं जलं ग्रहीतुं विलम्बितः अवतीर्णः भवेः।

अत्र कीर्त्तेः स्रोतोमूर्त्या परिणतत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्ति-रलङ्कारः।

पुरा किल भगवता शिवेन पार्वतीसंसर्गानन्तरनिर्गतं स्वतेजो वह्निवदने निक्षिप्तम्, वह्निनापि वोढुमशक्नुवता गङ्गायामपसारितम्, गङ्गया च धारणाशक्तया तीरे शरवणे तरङ्गान्दोलनेनोत्थापितम्, तत्र च बालकरूपेण परिणतं तदवलोक्य षड्भिः कृत्तिकाभिः परिपालित-मित्यतः स बालकः शिवपार्वत्योः पुत्रः वह्निपुत्रः ( पावकिः ), शरवणभवः कार्त्तिकेय इति च गीयत इति स्कन्दपुराणम्। चर्म्मण्वतीवृत्तान्तस्तु सञ्जीवन्यामेवाभिहितः।

इयं चर्म्मण्वती नाम नदी इदानीं "चम्बल"नाम्ना प्रसिद्धा विन्ध्या-चलस्य वायुकोणान्निर्गता ॥४५॥

सञ्जीवनी—आराध्येति। एनं पूर्वोक्तं शरवणजन्मानं...

"शरो वाणो वाणवृणो" इति शब्दार्णवः, तेषां वनं शरवणम्, "प्रनिरन्तःशरः—" इत्यादिना णत्वम्, तत्र भवो जन्म यस्य तं शरवण-भवम्, "अवर्ण्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदे" इति वामनः। अवर्ण्यः अगतिकत्वादाश्रयणीय इत्यर्थः। देवं स्कन्दम्, "शरजन्मा षड़ाननः" इत्यमरः। आराध्य उपास्य, वीणिभिर्वीणावद्भिः, व्रीह्या-दित्वादिनिः। सिद्धद्वन्द्वैः सिद्धमिथुनैः भगवन्तं स्कन्दमुपवीणयितुमागतै-रिति भावः। जलकणभयात् जलसेकस्य वीणाक्वणनप्रतिबन्धकत्वादिति भावः। मुक्तमार्गस्त्यक्तवर्त्मा सन् उल्लङ्घिताध्वा कियन्तमध्वानं गत इत्यर्थः। सुरभितनयानां गवाम् आलम्भेन संज्ञपनेन जायत इति तथोक्तां भुवि लोके स्रोतोमूर्त्या प्रवाहरूपेण परिणतां रूपविशेषमापन्नां रन्तिदेवस्य दशपुरपतेर्महाराजस्य कीर्त्तिं चर्म्मण्वत्याख्यां नदीमित्यर्थः, मानयिष्यन् सत्करिष्यन् व्यालम्बेथा आलम्ब्यावतरेरित्यर्थः। पुरा किल राज्ञो रन्तिदेवस्य गवालम्भेषु एकत्र सम्भृतात् रक्तनिष्यन्दात् चर्म्मराशेः काचित् नदी सस्यन्दे, सा चर्म्मण्वतीत्याख्यायते ॥४५॥

हिन्दी—शरवणमें जात यह कुमारस्वामीकी उपासना करके वीणाकी सेते हुये सिद्धमिथुनोंसे पानीवर्षानेके डरसे त्यक्तमार्ग होकर (अतएव) रास्ता उल्लङ्घनके बाद गाभियोंकी हत्यासे उत्पन्न हुई स्रोतरूपसे पृथ्वीपर विशेषरूपको प्राप्त हुई रन्तिदेवकी कीर्त्ति (नदी चर्म्मण्वती) सत्कारपूर्वक तुमने उतर जाना ॥४५॥

বাঙ্গালা—হে মেঘ! শরবণসমুৎপন্ন ঐ কার্ত্তিকেয়দেবের আরাধনা করিয়া তুমি যাইবার উপক্রম করিলে, বীণাধারী সিদ্ধদম্পতিগণ তোমারই বৃষ্টির কণায় বীণা ভিজিয়া যাইবার ভয়ে পথ ছাড়িয়া দিবে; তখন তুমি কিছু পথ অতিক্রম করিবে। তাহার পর গোমেধযজ্ঞে অসংখ্য গো-হত্যা-সম্ভূত ভূতলে চর্ম্মণ্বতীনদীরূপে পরিণত মহারাজ রন্তিদেবের কীর্ত্তিকে জলগ্রহণ করিয়া সম্মানিত করিবে বলিয়া অবতীর্ণ হইবে ॥৪৫॥

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम्।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम्॥ ४६॥

अन्वयः—शार्ङ्गिणः वर्णचौरे त्वयि जलं आदातुं अवनते गगनगतयः नूनं दृष्टीः आवर्ज्य पृथुं अपि दूरभावात् तनुं तस्याः सिन्धोः प्रवाहं स्थूलमध्येन्द्रनीलं एकं भुवः मुक्तागुणं इव प्रेक्षिष्यन्ते॥४६॥

चञ्चला—त्वयीति। शार्ङ्गिणः श्रीकृष्णस्य, वर्णचौरे श्यामकान्त्यपहारिणि, त्वयि मेघे, जलम् आदातुं ग्रहीतुम्, अवनते अवतीर्णे चर्म्मण्वतीजलसंलग्नदेहे सतीत्यर्थः, गगने गतिर्येषां ते सिद्धगन्धर्वादयः खेचराः, नूनं निश्चितम्, दृष्टीः आवर्ज्य पातयित्वा पृथुमपि स्वतो विशालमपि दूरभावात् दूरत्वात् तनुं कृशं कृशत्वेन प्रतीयमानम्, तस्याः सिन्धोर्नद्याश्चर्म्मण्वत्याः, प्रवाहं स्रोतः, स्थूलो विशालः मध्यो मध्यवर्त्ती इन्द्रनीलो मणिविशेषो यत्र तं तादृशम्, एकम् एकलहरीकम्, भुवः पृथिव्याः मुक्तागुणं मौक्तिकमालामिव प्रेक्षिष्यन्ते द्रक्ष्यन्ति, तव इन्द्रनीलस्थानपतितत्वादिति भावः।

अत्र अन्यस्य वर्णं कथमन्यश्चोरयतीति वस्तुसम्बन्धः असम्भवन् शार्ङ्गिणो वर्ण इव वर्ण इति सादृश्यं बोधयतीति निदर्शनालङ्कारः। केचित्तु उपमामाचक्षते। तन्न, तत्साधकाभावात् शिशुपालवधे "अपचुरश्चन्द्रमसोऽभिरामताम्" इत्यत्र मल्लिनाथेन निदर्शनाया एव व्यवस्थापितत्वात् अत्रापि तत्तुल्यत्वाच्च। तथा पृथिव्या मुक्तागुणस्या-

(४६) दूरमावर्ज्य। नूनमावध्य। इति पाठान्तरद्वयम्।

तामुत्तीर्य्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुग-मधुकर-श्रीमुषामात्मविम्बं
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ॥४७॥

भावेनैव चर्म्मण्वतीप्रवाहे मुक्तागुणत्वसम्भावनात् भावाभिमानिनी वाच्या जात्युत्प्रेक्षा च अनयोरङ्गाङ्गिभावेन सङ्करः ॥४६॥

सञ्जीवनी—त्वयीति। शार्ङ्गिणः कृष्णस्य वर्णस्य कान्तेश्चौरे वर्णचौरे तत्तुल्यवर्णे इत्यर्थः, त्वयि जलमादातुमवनते सति, पृथुमपि दूरभावात् दूरत्वात् तनुं सूक्ष्मतया प्रतीयमानम्, तस्याः सिन्धोश्चर्म्मण्वत्याख्यायाः प्रवाहम्, गगने गतिर्येषां ते गगनगतयः खेचराः सिद्धगन्धर्वादयः। अयमपि बहुव्रीहिः पूर्ववत् जन्माद्युत्तरपदेषु द्रष्टव्यः। नूनं सत्यं दृष्टीरावर्ज्य नियम्य, एकमेकयष्टिकम्, स्थूलो महान् मध्यो मध्यमणीभूतः इन्द्रनीलो यस्य तम्, भुवो भूमेर्मुक्तागुणं मुक्ताहारमिव प्रेक्षिष्यन्ते। अत्र अत्यन्तनीलमेघसङ्गतस्य प्रवाहस्य भूकण्ठमुक्तागुणत्वेन उत्प्रेक्षैवेयमितीवशब्देन व्यज्यते। निबन्धकारस्तु—"तत्र तत्रोपमा यत्र इवशब्दस्य दर्शनम्" इति इवशब्ददर्शनादलाप्युपमैवेति मभ्राम ॥४६॥

हिन्दी—कृष्णके माफिक कान्ति तुम पानी उठानेके लिये अवनत होनेसे स्थूलभी दूरके वदे सूक्ष्म वह चर्म्मण्वतीनदीके प्रवाह सिद्धगन्धर्वों ने निबद्धदृष्टि होकर, स्थूलमध्यमणिस्वरूप इन्द्रनील है जिसका, ऐसी पृथ्वीके मुक्ताहारकी तरह देखेंगे ॥४६॥

बाङ्गाला—हे मेघ! तुमि श्रीकृष्णेर श्यामल कान्ति अपहरण

(४७) श्रीमुषामित्यत्र "श्रीजुषाम्" इति क्वचित् पाठः।

করিয়াছ; সুতরাং জল লইবার জন্য অবতরণ করিলে সিদ্ধগন্ধর্ব্বপ্রভৃতি খেচরগণ নিশ্চয়ই নীচের দিকে দৃষ্টিপাত করিয়া, বিস্তৃত হইলেও দূরত্ব-নিবন্ধন কৃশ বলিয়া প্রতীয়মান সেই চর্ম্মণ্বতীনদীর প্রবাহটীকে মধ্য-ভাগে বৃহৎ ইন্দ্রনীলমণিসংযুক্ত পৃথিবীর একলহরী মুক্তামালার ন্যায় দেখিবে ॥৪৬॥

**অন্বয়:**—तां उत्तीर्य्य आत्मबिम्बं परिचितभ्रूलताविभ्रमाणां पक्ष्मोत्क्षेपात् उपरि-विलसत्कृष्णशारप्रभाणां कुन्दक्षेपानुगमधुकरश्रीमुषां दशपुरवधूनेत्रकौतूहलानां पात्री-कुर्व्वन् ( सन् ) व्रज ॥४७॥

**चञ्चला**—ततश्च सर्व्वथा कामिजनाभिलषणीयः कामिनीकर्त्तृक-सविलासदृष्टिलाभोऽपि तव भविष्यतीत्याह तामिति। तां चर्म्मण्वतीं नदीम् उत्तीर्य्य अतिक्रम्य, आत्मबिम्बं निजदेहम्, परिचिता अभ्यस्ता भ्रूलतयोर्विभ्रमा विलासा यैस्तेषाम्, पक्ष्मणां नेत्रलोम्नाम् उत्क्षेपात् उत्तोलनात् हेतोः, उपरि विलसन्त्यः प्रसरन्त्यः कृष्णशारप्रभा नीलश्वेत-मिश्रितकान्तयो येषां तेषाम्, अतएव कुन्दक्षेपान् निक्षिप्तकुन्दपुष्पाणी-त्यर्थः अनुगच्छन्तीति कुन्दक्षेपानुगा ये मधुकरा भ्रमरास्तेषां श्रियं शोभां मुष्णन्ति अपहरन्तीति तेषाम्, दशपुरं नाम रन्तिदेवस्य राजधानी तत्र या वध्वः स्त्रियस्तासां यानि नेत्रकौतूहलानि कौतूहलेन दृष्टिपातास्तेषाम्, पात्रीकुर्व्वन् विषयीकुर्व्वन् सन्, व्रज उत्तरां दिशं गच्छ।

अत्रापि अन्यश्रियं कथमन्ये मुष्णन्तीति वस्तुसम्बन्धोऽसम्भवन् श्रियमिव श्रियमिति सादृश्यं बोधयतीति पूर्व्ववदेव निदर्शनालङ्कारः। केचित्तु अत्रापि उपमामेव वदन्ति।

चर्म्मण्वतीनद्याः कियद्दूरे "रिन्तिमपुरम्" "रन्तिमपुरम्" इति वा नाम नगरं पुरा दशपुरनाम्ना ख्यातमासीदिति बहूनामनुमानम् ॥४७॥

**सञ्जीवनी**—तामिति। तां चर्म्मण्वतीमुत्तीर्य्य, भ्रुवौ लता इव

भ्रूलताः। उपमितसमासः। तासां विभ्रमा विलासाः परिचिताः क्रमा येषु तेषाम्, पक्ष्माणि नेत्रलोमानि। "पक्ष्म सूत्रे च सूक्ष्मांशे किञ्जल्के नेत्रलोमनि" इति शाश्वतः। तेषामुत्क्षेपादुन्नमनात् हेतोः, कृष्णाश्च ताः शाराः कृष्णशाराः नीलशवलाः। "वर्णो वर्णेन" इति समासः। "कृष्णरक्तसिताः शाराः" इति यादवः। ततश्च शारशब्दादेव सिद्धे कार्ष्ण्ये पुनः कृष्णपदोपादानं कार्ष्ण्यप्राधान्यार्थम्, रक्तत्वन्तु न विवक्षितम् उपमानानुसारात् तस्य स्वाभाविकस्य स्त्रीनेत्रेषु सामुद्रिक-विरोधात्, इतरस्य अप्रसङ्गात्। कविभावकथनन्तु उपपत्तिविषयम्। उपरि विलसन्त्यः कृष्णशाराः प्रभा येषां तेषां कुन्दानि माघ्यकुसुमानि तेषां क्षेप इतस्ततश्चलनं तस्य अनुगा अनुसारिणो ये मधुकरास्तेषां श्रियं मुष्णन्तीति तथोक्तानां क्षिप्यमाणकुन्दानुधाविमधुकरकल्पाना-मित्यर्थः, दशपुरं रन्तिदेवस्य नगरं तत्र वध्वः स्त्रियः। "वधूर्जाया स्नुषा स्त्री च" इत्यमरः। तासां नेत्रकौतूहलानां नेत्राभिलाषाणां साभिलाषदृष्टीनामित्यर्थः। आत्मबिम्बं स्वमूर्त्तिं पात्रीकुर्वन् विषयी-कुर्वन्, व्रज गच्छ ॥४७॥

हिन्दी—वह नदी पार होकर लताके सदृश भ्रूके प्रसिद्ध हुआ विलास जिनछोंका, आंखके पलोकोंका उपर उठानेसे सफेद काला प्रभा हुई जिनहोंका, और कुन्दफुलोंके हिलनेसे अनुसरण करते हुये भ्रमरोंकी कान्ति हरती है जिनहोंके ऐसे दशपुर (रन्तिदेवकी राजधानी) की औरतोंकी आंखके अभिलाषकी स्वमूर्त्ति विषयी-करके चलो ॥४७॥

বাঙ্গালা—হে মেঘ! তুমি চর্ম্মণ্বতীনদী অতিক্রম করিয়া নিজের দেহকে, ভ্রূবিলাসে অভ্যস্ত এবং পক্ষ্ম উৎক্ষিপ্ত করায় উপরিভাগে কৃষ্ণ ও শ্বেতকান্তিসমন্বিত; অতএব নিক্ষিপ্ত কুন্দকুসুমের অনুগামী ভ্রমরশ্রেণীর

ब्रह्मावर्त्तं जनपदमथ च्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥४८॥

---

সৌন্দর্য্যাপহারী দশপুরনগরস্থিত রমণীগণের সকৌতুক দৃষ্টিপাতের পাত্র করিয়া যাইতে থাকিবে ॥৪৭॥

**अन्वयः**—अथ च्छायया ब्रह्मावर्त्तं जनपदं गाहमानः क्षत्रप्रधनपिशुनं तत् कौरवं क्षेत्रं भजेथाः, यत्र गाण्डीवधन्वा शितशरशतैः राजन्यानां मुखानि त्वं धारापातैः कमलानि इव अभ्यवर्षत् ॥४८॥

**चञ्चला**—ब्रह्मेति। अथ कियद्गमनानन्तरम्, छायया आत्मनोऽनातपेन, ब्रह्मावर्त्तं नाम जनपदं देशम्, गाहमानः प्रविशन्, क्षत्रप्रधनपिशुनम् अद्यापि अस्थिसंस्थानादिमत्तया क्षत्रियाणां युद्धसूचकम्, तत्प्रसिद्धम्, कुरूणामिदं कौरवं क्षेत्रं कुरुक्षेत्रम्, भजेथा गच्छ। यत्र कौरवे क्षेत्रे, गाण्डीवं धनुर्यस्य स गाण्डीवधन्वा अर्ज्जुनः शितशरशतैः सुधारीकृतबाणसमूहैः, राजन्यानां विपक्षक्षत्रियाणाम्, मुखानि मस्तकानि, त्वं धारापातैर्वृष्टिधारानिक्षेपैः, कमलानि पद्मानीव, अभ्यवर्षत् वृष्टवान् अच्छिनदित्यर्थः।

अत्रोपमालङ्कारः, तथा क्षेत्रक्षत्रेति शितशतेति च व्यञ्जनानां सकृत्साम्यात् छेकानुप्रासश्च अनयोः संसृष्टिः। तथा शत्रुभूतानां राजन्यानामिति राजन्यविशेषे वक्तव्ये राजन्यानामिति सामान्याभिधानात् विशेषेऽविशेषाख्यदोषः, स तु "राजन्यानाम्" इत्यत्र "विद्विष्टानाम्" इति

---

(४८) अथच्छायया। अभ्यषिञ्चन्मुखानि। इति पाठभेदौ।

पाठेन समाधेयः । एवं भाविवर्षणस्यापि सम्भवात् त्वं "कमलान्यभ्यवर्षः" इत्यत्र "काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेशयोः" इत्यादिदर्पणोदाहरणवत् प्रसक्तापि कालभेदेन भग्नप्रक्रमता अतीतामेववृष्टिमादाय परिहार्य्या। किन्तु गाण्डीवधन्वा अभ्यवर्षत् त्वन्तु अभ्यवर्षं इति पुरुषभेदेन भग्नप्रक्रमता संरूढ़ैव "लतेव राजसे तन्वि !" इति दर्पणोदाहरणवत् ; सा तु "धारापातैस्त्वमिव कमलान्युत्तमाङ्गानि वृष्टः" इति पाठेन निरसनीया। तत्पाठे "आपाटलीपुलाद्दृष्टो देवः" इत्यादिवत् वृष्ट इति कर्त्तरि क्तः ।

कुरुक्षेत्रं नाम स्थानं वर्त्तमान-"स्थानेश्वर-"नामकस्थानात् किञ्चिद्दक्षिणकोणे वर्त्तते । ब्रह्मावर्त्तदेशस्तु सञ्जीवन्यामेव निर्द्दिष्टः ॥४८॥

सञ्जीवनी—ब्रह्मावर्त्तमिति । अथ अनन्तरं ब्रह्मावर्त्तं नाम जनपदं देशम् । अत्र मनुः—"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥" इति । छायया अनातपमण्डलेन गाहमानः प्रविशन् न तु स्वरूपेण । "पीठक्षेत्राश्रमादीनि परिहृत्यान्यतो व्रजेत्" इति वचनात् दलप्रधनपिशुनम् अद्यापि शिरःकपालादिमत्तया कुरुपाण्डवयुद्धसूचकमित्यर्थः । "युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्" इत्यमरः । तत् प्रसिद्धं कुरूणामिदं कौरवं क्षेत्रं भजेथाः कुरुक्षेत्रं व्रजेत्यर्थः । यत्र कुरुक्षेत्रे, गाण्डी अस्यास्तीति गाण्डीवं धनुर्विशेषः । "गाण्डाजगात् संज्ञायाम्" इति मत्वर्थीयो वप्रत्ययः । "कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ" इत्यमरः । तत् धनुर्यस्य स गाण्डीवधन्वा अर्जुनः । "वा संज्ञायाम्" इत्यनङादेशः । शितशरशतैः निशितबाणसहस्रैः राजन्यानां राज्ञां मुखानि धारासारसदृक्षधारायाः पातैः कमलानि त्वमिव अभ्यवर्षत् अभिमुखं वृष्टवान् शरवर्षेण शिरांसि चिच्छेदेत्यर्थः ॥४८॥

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ।
कृत्वा तासामभिगममपां सौम्य ! सारस्वतीना-
मन्तःशुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥४९॥

हिन्दी—अनन्तर ब्रह्मावर्त्तनामक देशमें छायारूपसे प्रवेश करते हुये तुम क्षत्रियोंके समरसूचक वह कुरुक्षेत्र जावो । जहां पर अर्ज्जुनने क्षत्रियोंका वदनके उपर तीक्ष्णवाण वर्षण चलाया ; जैसा तुमने वृष्टिसे कमलोंके उपर वर्षा करेगी ( अर्थात् शिर काट डाला था ) ॥४८॥

বাঙ্গালা—তাহার পর ছায়াদ্বারা ব্রহ্মাবর্ত্তদেশে প্রবেশ করিয়া, ক্ষত্রিয়গণের সমরসূচক সেই কুরুক্ষেত্রে গমন করিবে। ধারাবৃষ্টিদ্বারা তুমি যেমন পদ্মবর্ষণ ( নিপাতিত ) করিয়াছিলে, সেইরূপ অর্জ্জুন যেখানে সুধার বাণসমূহদ্বারা ক্ষত্রিয়গণের মস্তক বর্ষণ ( নিপাতিত ) করিয়াছিলেন ॥৪৮॥

अन्वयः—बन्धुप्रीत्या समरविमुखः लाङ्गली अभिमतरसां रेवतीलोचनाङ्कां हालां हित्वा याः सिषेवे, ( हे ) सौम्य ! तासां सारस्वतीनां अपां अभिगमं कृत्वा त्वं अपि अन्तःशुद्धः भविता ( किन्तु ) वर्णमात्रेण कृष्णः ( भविता ) ॥४९॥

चञ्चला—हित्वेति । बन्धुप्रीत्या कुरुपाण्डवोभयपक्षयोरेव बन्धुतया तौ प्रति प्रणयवशेन न पुनर्भयेनेत्यर्थः, समरविमुखः कुरुपाण्डवयुद्धपराङ्मुखः, लाङ्गली बलरामः अभिमतः प्रियो रस आस्वादो यस्यास्ताम्, तथा रेवत्यास्तदाख्याया निजप्रियाया लोलके लोचनयोः प्रतिविम्बावेव अङ्कश्चिह्नं यस्यां ताम्, रेवत्या ततृपात्रं गृहीत्वा सादरं

(४९) बन्धुप्रीत्येव 'बन्धुस्नेहात्' । अभियममित्यत्र 'अधिगमम्' इति पाठभेदौ ।

दुष्टत्वादिति भावः, हालां सुरां हित्वा विहाय याः सारस्वतीरपः सिषेवे, सूतवधपापक्षयार्थं पानावगाहनादिनेति शेषः। हे सौम्य! सुन्दर! तासां सारस्वतीनां सरस्वतीनदीसम्बन्धिनीनाम्, अपां जलानाम्, अभिगमं स्पर्शनग्रहणाभ्यां संसर्गम्, कृत्वा त्वमपि असौ बलराम इवेति भावः, अन्तःशुद्धः अभ्यन्तरे निर्म्मलः प्रागुक्तकमलनिपातनजनित-पापेन हीन इत्यर्थः भविता किन्तु वर्णमात्रेण केवलेन शरीरवर्णेन, कृष्णः कृष्णवर्णो भविता स्थाता न पुनः पापेन कृष्णवर्ण इत्याशयः।

अत्र "बन्धुप्रीत्या" इत्युक्तेः "न पुनर्भयेन" इति भयस्य व्यपोहनात् एका आर्थी परिसंख्या; तथा "वर्णमात्रेण" इत्यभिधानात् "न पुनः पापेन" इति पापस्य व्यपोहनात् अपरापि आर्थी परिसंख्यैवेति मिथो नैरपेक्ष्यादनयोः संसृष्टिः। हालाया आदरणीयताप्रतिपादनार्थमेव अभिमतरसामित्यादिविशेषणद्वयोपादानाच्च अपुष्टार्थत्वदोषः।

हिमालयाद्विर्गता सरस्वती नदी कुरुक्षेत्रस्य वायुकोणे प्रवाहिता-सीत् ॥४९॥

सञ्जीवनी—हित्वेति। बन्धुप्रीत्या कुरुपाण्डवस्नेहेन न तु भयेन समरविमुखो युद्धनिस्पृहः लाङ्गलमस्यास्तीति लाङ्गली हलधरः, अभिमत-रसामभीष्टस्वादाम्, तथा रेवत्याः स्वप्रियाया लोचने एव अङ्कः प्रति-बिम्बितत्वात् चिह्नं यस्यास्ताम्, हालां सुराम्। "सुरा हलिप्रिया हाला" इत्यमरः। "अभिप्रयुक्तं देशभाषापदम्" इत्यत्र सूत्रे "हालेति देशभाषा-पदमप्यतीव कविप्रयोगात् साधु" इत्युदाजहार वामनः। हित्वा त्यक्त्वा दुस्त्यजामपीति भावः। याः सारस्वतीरपः सिषेवे। हे सौम्य! सुभग! त्वं तासां सरस्वत्या नद्या इमाः सारस्वत्यस्तासाम् अभिगमं सेवां कृत्वा, अन्तः अन्तरात्मनि शुद्धो निर्म्मलो निर्दोषः भविता।

**तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां**
**जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम्।**
**गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः**
**शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्म्मिहस्ता ॥५०॥**

"खलटचौ" इति टच्। अपि सद्य एव पूतो भविष्यसीत्यर्थः। "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" इति वर्त्तमानप्रत्ययः। वर्णमात्रेण वर्णेनैव कृष्णः श्यामः न तु पापेनेत्यर्थः। अन्तःशुद्धिरेव सम्पाद्या न तु वाह्या, वहिःशुद्धोऽपि सूतवधप्रायश्चित्तार्थं सारस्वतसलिलसेवी तत्र भगवान् बलभद्र एव निदर्शनम् अतो भवतापि सरस्वती सर्वथा सेवितव्येति भावः ॥४९॥

**हिन्दी**—दोनोंके उपर स्नेहसे लड़ाई न करनेवाला बलदेवजी स्वादिष्ट और रेवतीके लोचनोंसे प्रतिविम्बित सुरा छोड़ कर जो पानी सेवा किया था, हे सौम्य! वह सरस्वती-नदीको पानी पीकर तुमभी आन्तरिक पवित्र होकरके रङ्गसे काले रहोगे ॥४९॥

**বাঙ্গালা**—বলরাম বন্ধুস্নেহবশতঃ কুরুক্ষেত্রযুদ্ধে পরাঙ্মুখ হইয়া, সুস্বাদু বলিয়া অভিমত এবং রেবতীদেবীর নয়নের প্রতিবিম্বচিহ্নিত সুরা পরিত্যাগ করিয়া, যে জলের সেবা করিয়াছিলেন; হে সৌম্য! তুমিও সেই সরস্বতীনদীর জলের সেবা করিয়া ভিতরে শুদ্ধ হইবে, কেবল বাহিরে কৃষ্ণবর্ণ থাকিয়া যাইবে ॥৪৯॥

**अन्वयः**—तस्मात् अनुकनखलं शैलराजावतीर्णां सगरतनयस्वर्गसोपानपङ्क्तिं जह्नोः कन्यां गच्छेः, या फेनैः गौरीवक्त्रभ्रुकुटिरचनां विहस्य इव इन्दुलग्नोर्म्मिहस्ता शम्भोः केशग्रहणं अकरोत् ॥५०॥

(५०) या विहस्येव फेनैः। या विहस्योग्रफेनैः। इति पाठभेदौ।

चञ्चला—तस्मादिति। तस्मात् कुरुक्षेत्रात्, कनखलस्य समीपे इत्यनुकनखलं कनखलाख्यपर्वतसमीपे, शैलराजात् हिमालयात् अवतीर्णाम्, सगरतनयानां कपिलशापेन भस्मीभूतानामित्यर्थः स्वर्गसोपानपङ्क्तिं स्वर्गगमनस्य सोपानश्रेणीस्वरूपाम्, तामवलम्ब्यैव सगरतनयानां स्वर्गारोहणादिति भावः, जह्नोः कन्यां जाह्नवीं गङ्गां गच्छेः। या जह्नोः कन्या, फेनैः, गौर्य्याः पार्वत्या वक्त्रे वदने या भ्रुकुटिरचना सपत्नीविद्वेषेण भ्रूकुटीकरणं ताम्, विहस्येव तुच्छत्वेनोपहस्येव, फेनस्य शुभ्रत्वात् कविसमयप्रसिद्धया हासस्यापि शुभ्रत्वाच्चेति भावः, इन्दौ मौलिस्थे चन्द्रे लग्ना ऊर्म्मिस्तरङ्ग एव हस्तो यस्याः सा तादृशी सती, शम्भोर्महादेवस्य, केशग्रहणं केशस्पर्शं स्वाधीनभर्तृकतया आत्मगर्वावेशात् केशाकर्षणञ्च अकरोत्।

अत्र द्वितीयार्द्धे विहस्येवेति भावाभिमानिनी वाच्या क्रियोत्प्रेक्षा, तथा गौरीगङ्गयोः कार्य्यद्वारा परस्परसपत्नीव्यवहारसमारोपात् समासोक्तिरित्यनयोरङ्गाङ्गिभावेन सङ्करः; तस्य च प्रथमार्द्धे सगरेत्यादौ स्थितेन निरङ्गकेवलरूपकेण सह पुनः संसृष्टिः। न च गङ्गा गौर्य्या वस्तुत एव सपत्नीति कथं गङ्गायां गौर्य्याः सपत्नीव्यवहारसमारोप इति वाच्यम्, जलमय्या गङ्गायाः सपत्नीत्वासम्भवात् मूर्त्तिमत्या एव तत्सम्भवात्। न च तथापि ऊर्म्मौ हस्तत्वारोपः शाब्दः गङ्गायां सपत्नीत्वारोपश्च आर्थ इत्येकदेशविवर्त्ति रूपकमेवेति वाच्यम्, ऊर्म्मिहस्तयोः सादृश्यस्य स्फुटतया रूपकेण समासोक्तेर्वाध्यत्वासम्भवात् समासोक्त्यैव च रूपकस्य वाध्यत्वात् तथैव दर्पणकृता समासोक्तिप्रकरणे मीमांसितत्वात् ॥५०॥

सञ्जीवनी—तस्मादिति। तस्मात् कुरुक्षेत्रात् कनखलस्य अद्रेः समीपे अनुकनखलम्। "अनुर्यत्समया—" इत्यव्ययीभावः। शैलराजात् हिमवतः अवतीर्णां सगरतनयानां स्वर्गसोपानपङ्क्तिं स्वर्ग-

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्द्धलम्बी
त्वञ्चे दच्छस्फटिकविशदं तर्क येस्तिर्य्यगम्भः।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥५१॥

प्राप्तिसाधनभूतामित्यर्थः। जह्नोर्नाम राज्ञः कन्यां जाह्नवीं गच्छेः गच्छ। विध्यर्थे लिङ्। या जाह्नवी गौर्य्या वक्त्रे या भ्रुकुटिरचना सापत्न्यरोषात् भ्रूभङ्गकरणं तां फेनैर्विहस्य हसित्वेव धावल्यात् फेनानां हासत्वेनोत्प्रेक्षा। इन्दौ शिरोमाणिक्यभूते लग्ना ऊर्म्मय एव हस्ता यस्याः सा इन्दुलग्नोर्म्मिहस्ता सती शम्भोः केशग्रहणमकरोत्। यथा काचित् प्रौढ़ा नायिका सपत्नीमसहमाना स्वबाल्लभ्यं प्रकटयन्ती स्वभर्त्तारं सह शिरोरत्नेन केशेष्वाकर्षति, तद्वदिति भावः। इदञ्च पुरा किल भगीरथप्रार्थनया भगवतीं गगनपथात् पतन्तीं गङ्गां गङ्गाधरो जटाजूटेन जग्राहेति कथामुपजीव्योक्तम् ॥५०॥

हिन्दी—तिसके पीछे कनखलके नजदीक हिमालयसे बहती हुई सगरतनयोंको स्वर्गप्राप्तिके कारण गङ्गाजीमें जावो। जो गङ्गा अपनी सपत्नीके मुंहकी भ्रूकुटियोंको फेनसे जैसी ढकेलती हुई चन्द्रके ऊपर तरङ्गरूप हाथको फैलाती हुई महादेवजीके केशग्रहण करती है ॥५०॥

বাঙ্গালা—সেই কুরুক্ষেত্র হইতে প্রস্থান করিয়া, কনখলনামক পর্ব্বতের নিকট হিমালয় হইতে অবতীর্ণা এবং সগররাজার পুত্রগণের স্বর্গারোহণ করার সোপানশ্রেণীস্বরূপা গঙ্গাতে উপস্থিত হইবে। যে

(५१) पूर्वार्द्धलम्बी। अच्छस्फटिकविशदम्। सङ्क्रपन्त्या। स्यादस्थानोपगतयमुनासङ्गमेनाभिरामा। इति पाठान्तराणि।

গঙ্গা নিজের ফেনদ্বারা পার্ব্বতীর মুখের ভ্রূকুটিরচনাকে তুচ্ছ জ্ঞানেই যেন উপহাস করিয়া, মস্তকস্থিত চন্দ্রে তরঙ্গরূপ হস্ত সংলগ্ন করতঃ মহাদেবের কেশ ধারণ করিয়াছিলেন ॥৫০॥

**अन्वयः**—सुरगजः इव व्योम्नि पश्चार्द्धलम्बी (सन्) त्वं चेत् अच्छस्फटिकविशदं तस्याः अम्भः तिर्य्यक् पातुं तर्कयेः, सपदि स्रोतसि संसर्पन्त्या भवतः छायया असौ अस्थानोपगतयमुनासङ्गमा इव अभिरामा स्यात् ॥५१॥

चञ्चला—तस्या इति। सुरगजः कश्चित् दिग्दन्तीव, व्योम्नि आकाशे, पश्चार्द्धेन देहस्य पश्चाद्भागेन लम्बते तिष्ठतीति पश्चार्द्धलम्बी सन्, त्वञ्चेत्, अच्छस्फटिकवत् निर्म्मलस्फटिकवत् विशदं धवलम्, तस्या गङ्गाया अम्भो जलम्, तिर्य्यक् तिरश्चीनभावेन पातुं तर्कयेः 'कियत् पातव्यम्' इति तर्कणेन किञ्चिदवतिष्ठेथा इत्यर्थः ; तदा सपदि तत्-क्षणात्, स्रोतसि संसर्पन्त्या सञ्चरन्त्या, भवतश्छायया नीलप्रतिबिम्बेन, असौ गङ्गा, अस्थाने प्रयागभिन्नस्थले उपगतो लब्धः यमुनासङ्गमो यया सा तादृशीव अभिरामा मनोहरा स्यात्।

अत्र प्रथमे पादे श्रौत्युपमा, द्वितीये समासगता लुप्तोपमा, चतुर्थे च वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा इत्येतेषां मिथो निरपेक्षतया संसृष्टिः ॥५१॥

सञ्जीवनी—तस्या इति। सुरगज इव कश्चित् दिग्गज इव, व्योम्नि, पश्चादर्द्धं पश्चार्द्धम्। पृषोदरादित्वात् साधुः। तेन लम्बत इति पश्चार्द्धलम्बी सन्, पश्चार्द्धभागेन व्योम्नि स्थित्वा पूर्व्वार्द्धेन जलोन्मुख इत्यर्थः। केचित् "पूर्व्वार्द्धलम्बी" इति पठन्ति। अच्छस्फटिकविशदं निर्म्मलस्फटिकावदातं तस्या गङ्गायाः अम्भः तिर्य्यक् तिरश्चीनं यथा तथा पातुं त्वं तर्कयेः विचारयेः, चेत् सपदि स्रोतसि प्रवाहे संसर्पन्त्या

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥५२॥

संक्रामन्त्या भवतश्छायया प्रतिबिम्बेन असौ गङ्गा, अस्थाने प्रयागादन्यत्र उपगतः प्राप्तः यमुनासङ्गमो यया सा तथाभूता इव अभिरामा स्यात् ॥५१॥

**हिन्दी**—दिग्गजके सदृश आकाशमें पीछेके भागसे स्थित हुये निर्म्मल स्फटिकके माफिक गङ्गापानी, वक्र होकर पीनेके विचार अगर तुम करोगे। तो हठात् प्रवाहमें फैलते हुये तुम्हारे प्रतिविम्ब यह प्रयागसे भिन्न जगहहीमें यमुनाके साथ मिलनेके सदृश सुन्दर हो जावेगा ॥५१॥

**बाङ्गाला**—হে মেঘ! তুমি যদি কোনও দিগ্‌হস্তীর ন্যায় দেহের পশ্চাদ্ভাগদ্বারা আকাশে অবস্থান করিয়া নির্ম্মল স্ফটিকের ন্যায় শুভ্রবর্ণ সেই গঙ্গার জল তেরচাভাবে পান করিবার জন্য বিবেচনা করিতে থাক; তবে তৎক্ষণাৎ গঙ্গার স্রোতে নিপতিত তোমার প্রতিবিম্বদ্বারা ঐ গঙ্গা অস্থানে যমুনার সম্মেলন প্রাপ্ত হইয়াই যেন মনোহর হইবে ॥৫১॥

**अन्वयः**—आसीनानां मृगाणां नाभिगन्धैः सुरभितशिलं तुषारैः गौरं तस्याः एव प्रभवं अचलं प्राप्य अध्वश्रमविनयने तस्य शृङ्गे निषण्णः (सन्) शुभ्रत्रिनयनवृषोत्खात-पङ्कोपमेयां शोभां वक्ष्यसि ॥५२॥

**चञ्चला**—आसीनानामिति। आसीनानामुपविष्टानाम्, मृगाणां कस्तूरीयुक्तहरिणानाम्, नाभिगन्धैः कस्तूरीसौरभैः, सुरभिता सुगन्धी-कृता शिला प्रस्तरो यस्य तम्, तुषारैर्हिमैः गौरं शुभ्रवर्णम्, तस्या

गङ्गाया एव, प्रभवत्यस्मादिति प्रभव उत्पत्तिस्थानं तम्, अचलं पर्वतं हिमालयम्, प्राप्य गत्वा, अध्वश्रमः पथिक्लान्तिर्विनीयते दूरीक्रियते अनेनेति अध्वश्रमविनयनं तस्मिन्, तस्य हिमालयस्य शृङ्गे, निषण्ण उपविष्टः सन्, त्वम्, शुभ्रो यस्त्रिनयनस्य त्रिलोचनस्य महादेवस्य वृषो वृषभस्तेन उत्खातो वप्रक्रीड़ाकाले शृङ्गोपरि उत्तोलितो यः पङ्कः कर्दमस्तेन उपमेयाम् उपमातुं योग्यां तत्सदृशीमित्यर्थः, शोभां वक्ष्यसि धारयिष्यसि।

अत्र आर्थी उपमालङ्कारः। अध्वश्रमदूरीकरणयोग्यतासूचनार्थं "सुरभितशिलम्" इति विशेषणम्, तत्रत्यगङ्गातो हिमालयस्य नातिदूरवर्त्तित्वद्योतनार्थं "तस्या एव प्रभवम्" इति विशेषणम्, तथा वृषसादृश्यबोधनार्थं "तुषारैर्गौरम्" इति विशेषणम्, अतो नापुष्टार्थत्वदोषः ॥५२॥

सञ्जीवनी—आसीनानामिति। आसीनानामुपविष्टानां मृगाणां कस्तूरिकामृगाणाम्, अन्यथा नाभिगन्धानुपपत्तेः। नाभिगन्धैः कस्तूरीगन्धैः तेषां तदुद्भवत्वात्, अतएव मृगनाभिसंज्ञा च। "मृगनाभिर्मृगमदः कस्तूरी च" इत्यमरः। अथवा नाभयः कस्तूर्य्यः। "नाभिः प्रधाने कस्तूर्य्यां मदे च क्वचिदीरितः" इति विश्वः। तासां गन्धैः सुरभिताः सुरभीकृताः शिला यस्य तम्, तस्या गङ्गाया एव, प्रभवत्यस्मादिति प्रभवः कारणम्, तुषारैर्गौरं सितम्। "अवदातः सितो गौरः" इत्यमरः। अचलं प्राप्य, विनीयते अनेनेति विनयनम्। करणे ल्युट्। अध्वश्रमस्य विनयने अपनोदने तस्य हिमाद्रेः शृङ्गे निषण्णः सन्, शुभ्रो यस्त्रिनयनस्य त्र्यम्बकस्य वृषो वृषभः। "सुकृते वृषभे वृषः" इत्यमरः। तेन उत्खातेन विदारितेन पङ्केन सह उपमेयामुपमातुमर्हां शोभां वक्ष्यसि वोढासि। वहतेर्लृट्। त्रिनयनेत्यत्र "पूर्वपदात् संज्ञायाम्" इति णत्वं न

तञ्चेद्वायौ सरति सरलस्कन्धसङ्घट्टजन्मा
बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रैः
आपन्नार्त्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥५३॥

भवति, "लुम्ब्यादिषु च" इति निषेधात् । तस्याः प्रभवमित्यादिना हिमाद्रौ मेघस्य वैवाहिको गृहविहारो ध्वन्यते ॥५२॥

हिन्दी—उपविष्ट मृगोंका नाभिगन्धसे शिला सुगन्धित हुई है जिसका, ऐसे हिमसे सफेद हिमालय प्राप्त होकर, रास्ताकी क्लान्ति दूर करनेके वास्ते उसका शृङ्गके उपर बैठ कर, महादेवके शुभ वृषसे विदीर्ण पङ्कके माफिक कान्ति पावोगे ॥५२॥

বাঙ্গালা—হে মেঘ! উপবিষ্ট হরিণগণের নাভির গন্ধে যাহার শিলাতল সুগন্ধ হইয়া থাকে এবং সেই গঙ্গারই যে উৎপত্তিস্থান ও তুষারপাতে শুভ্রবর্ণ; সেই হিমালয়ে উপস্থিত হইয়া এবং পথের পরিশ্রম দূরকারী তদীয়শৃঙ্গে উপবেশন করিয়া তুমি, মহাদেবের শুভ্রবর্ণ বৃষের শৃঙ্গের উপর উত্তোলিত কর্দ্দমের তুল্য শোভা ধারণ করিবে ॥৫২॥

अन्वयः—वायौ सरति (सति) सरलस्कन्धसङ्घट्टजन्मा उल्काक्षपितचमरीबाल-भारः दवाग्निः तं बाधेत चेत् एनं वारिधारासहस्रैः अलं शमयितुं अर्हसि, हि उत्तमानां सम्पदः आपन्नार्त्तिप्रशमनफलाः (भवन्ति) ॥५३॥

चञ्चला—तमिति । वायौ सरति प्रवर्त्तति सति, सरलानां देवदारूणां ये स्कन्धाः प्रकाण्डदेशा मूलावधिशाखोत्पत्तिपर्य्यन्तस्थानानि तेषां सङ्घट्टात् परस्परघर्षणात् जन्म यस्य स तादृशः, तथा उल्कया ज्वालया क्षपिता दाहेन नाशिताः चमरीणां हरिणीविशेषाणां बालभाराः केश-

(५३) सरतीत्यत्र स्फुरतीत्येव केचित् पठन्ति ।

समूहा येन स तथोक्तश्च। एतेनास्य विशालतनुमूलत्वं सूचितम्। दवाग्निर्वनवह्निः, तं हिमालयम्, वाधेत चेत् पीड़येद् यदि, तदा एनं दवाग्निम्, वारिधारासहस्रैः वाहुल्येन जलवर्षणैः, अलमत्यर्थम्, शमयितुं निर्वापयितुम्, अर्हसि योग्यो भवसि। हि यस्मात्, उत्तमानां जनानां सम्पदः याः काश्चित् समृद्धयः, आपन्नानाम् आपत्प्राप्तानाम्, आर्त्तिः पीड़ायाः प्रशमनं निवारणमेव फलं प्रयोजनं यासां तास्तथोक्ता भवन्ति। अतएव जलसम्पदोऽपि दवाग्निकृतहिमालयपीड़ाप्रशमनफलत्वमेवोचितमिति भावः।

अत्र 'सर-सर' इति व्यञ्जनसङ्घस्य अनेकधा सकृत्साम्यात् छेकानुप्रासः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च अनयोः परस्परनिरपेक्षतया संसृष्टिः। तथा "वायौ सरति" इत्यत्र वायुशब्दः सृधातोः कर्त्तृवाचकतया पायुवायुं प्रत्याययतीति जुगुप्साव्यञ्जकत्वादश्लीलतादोषः। एतच्चास्माभिः साहित्यदर्पणटीकायामश्लीलतादोषप्रकरणे सयुक्तिकमेव समर्थितमिति द्रष्टव्यम्। "तञ्चेद्वायौ वहति" इति पाठे तु तत्परीहारः ॥५३॥

सञ्जीवनी—तमिति। वायौ वनवाते सरति वाति सति सरलानां देवदारुद्रुमाणाम्। स्कन्धाः प्रदेशविशेषाः। "अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोः" इत्यमरः। तेषां सङ्घट्टेन सङ्घर्षणेन जन्म यस्य स तथोक्तः। जन्मोत्तरपदत्वात् व्यधिकरणोऽपि वहुब्रीहिः साधुरित्युक्तम्। उल्काभिः स्फुलिङ्गैः क्षपिता निर्दग्धाः चमरीणां वालभाराः केशसमूहा येन, दव एव अग्निर्दवाग्निर्वनवह्निः। "वने च वनवह्नौ च दवो दाव इवेष्यते" इति यादवः। तं हिमाद्रिं वाधेत चेत् पीड़येद् यदि, एनं दवाग्निम्, वारिधारासहस्रैः शमयितुमर्हसि। युक्तञ्चैतदित्याह—उत्तमानां महतां सम्पदः समृद्धयः आपन्नानामार्त्ता-

ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम् ।
तान् कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥५४॥

नाम् आर्त्तिप्रशमनम् आपन्निवारणमेव फलं प्रयोजनं यासां तास्तथोक्ता हि ; अतो हिमाचलस्य दावानलस्त्वया शमयितव्य इति भावः ॥५३॥

हिन्दी—वायु चलनेमें देवदारुवृक्षोंकी शाखाओंके सङ्घर्षणसे उत्पन्न, स्फुलिङ्गसे चमरीके दग्ध किया है केशसमूह जिसने, ऐसे दावाग्नि, अगर हिमाद्रिको बाधा करे (तो) हजारवृष्टि धारासे इनको बुताना ठिक है। (क्योंकि) अच्छा आदमीयोंकी सम्पद, दुःखके विपद प्रशमनके वास्ते है ॥५३॥

বাঙ্গালা—হে মেঘ! বায়ু বহিত হইতে লাগিলে দেবদারুবৃক্ষের স্কন্ধে স্কন্ধে (গুঁড়িতে গুঁড়িতে) সঙ্ঘর্ষ হওয়ায় উৎপন্ন দাবাগ্নি শিখা-দ্বারা চমরীগণের কেশসমূহ দগ্ধ করিয়া যদি হিমালয়কে উৎপীড়িত করিতে থাকে ; তাহা হইলে তুমি অত্যন্ত প্রচুর জল বর্ষণদ্বারা সেই দাবাগ্নিকে নির্বাপিত করিয়া দিবে। কারণ, বিপন্নের বিপত্তি নিবারণ করাই উত্তম ব্যক্তিদিগের সম্পদের ফল ॥৫৩॥

(५४) मुक्ताध्वानमित्यत्र मुक्ताध्वानमिति केचित् पठन्ति। भरत-सनातन-रामनाथ-हरगोविन्दाः पुनः श्लोकमिममित्थं पठन्ति—

"ये त्वां मुक्तध्वनिमसहनाः स्वाङ्गभङ्गाय तस्मिन्
दर्पोत्सेकादुपरि शरभा लङ्घयिष्यन्त्यलङ्घ्यम् ।
तान् कुर्वीथास्तुमुलकरकावृष्टिहासावकीर्णान्
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥"

अन्वयः—तस्मिन् संरम्भोत्पतनरभसाः ये शरभाः स्वाङ्गभङ्गाय मुक्ताध्वानं भवन्तं सपदि लङ्घयेयुः, तान् तुमुलकरकावृष्टिपातावकीर्णान् कुर्वीथाः, निष्फलारम्भयत्नाः के वा परिभवपदं न स्युः ॥५४॥

चञ्चला—य इति । तस्मिन् हिमालये, संरम्भेण गर्जनश्रवणात् कोपेन उत्पतने उत्प्लवने रभसो वेगो येषां ते तादृशाः, ये शरभा अष्टसंख्यकचरणविशिष्टाः पशुविशेषाः, स्वाङ्गभङ्गाय प्रस्तरोपरि पतनेन निजाङ्गभङ्गमात्रफलाय, मुक्तः परित्यक्तः अध्वा तेषामुत्पतनपथो येन तं तादृशमपि भवन्तं मेघम्, सपदि द्रुतम्, लङ्घयेयुः लङ्घयितुं यतेरन्; तान् शरभान् तुमुलो विशृङ्खलो यः करकावृष्टिपातः शिलावृष्टिकरणं तेन अवकीर्णान् विक्षिप्तान् कुर्वीथाः । तथा च निष्फले आरम्भे कार्ये यत्नः प्रवृत्तिर्येषां ते तथोक्ताः, के वा जनाः, परिभवपदम् अवमाननास्थानं न स्युः ? अपि तु सर्व एव स्युरित्यर्थः । "परिभवपदम्" इत्येकवचनान्तस्य विधेयत्वेन प्रधानत्वेऽपि "उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्य" इत्यभिधानात् "के" इत्यस्य उद्देश्यतया "स्युः" इत्यत्र बहुवचनम् ।

अत्र चतुर्थपादगतसामान्येन पूर्वगतविशेषसमर्थनादर्थान्तरन्यासः, तथा तत्रैव चतुर्थपादे अर्थापत्तिश्च इत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः । तथा "मुक्ताध्वानम्" इत्यतः परम् अपिशब्दोऽवश्यं वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानदोषः, स च "मुक्ते वर्त्मन्यपि च शरभास्त्वां द्रुतं लङ्घयेयुः" इति पाठेन परिहार्य्यः ॥५४॥

सञ्जीवनी—य इति । तस्मिन् हिमाद्रौ, संरम्भः कोपः । "संरम्भः सम्भ्रमे कोपे" इति शब्दार्णवः । तेन उत्पतने उत्प्लवने रभसो वेगो येषां ते तथोक्ताः, "रभसो वेगहर्षयोः" इति विश्वः । ये शरभा अष्टापदमृग-

विशेषाः। "शरभः शलभे चाष्टापदे प्रोक्तो मृगान्तरे" इति विश्वः। मुक्ताः अध्वा शरभोत्प्लवनमार्गो येन तं भवन्तं सपदि स्वाङ्गभङ्गाय लङ्घयेयुः। सम्भावनायां लिङ्। भवतोऽतिदूरत्वात् स्वाङ्गभङ्गातिरिक्तं फलं नास्ति लङ्घनस्येत्यर्थः। तान् शरभान्, तुमुलाः सङ्कुलाः करका वर्षोपलाः। "वर्षोपलस्तु करका" इत्यमरः। तासां वृष्टिस्तस्या पातेन अवकीर्णान् विक्षिप्तान् कुर्वीथाः कुरुष्व। विध्यर्थे लिङ्। क्षुद्रोऽप्यधिक्षिपन् प्रतिपक्षः सद्यः प्रतिक्षेप्तव्य इति भावः। तथाहि आरभ्यन्त इत्यारम्भाः कर्म्माणि तेषु यत्र उद्योगः स निष्फलो येषां ते तथोक्ताः निष्फलकर्म्मोपक्रमा इत्यर्थः, अतः के वा परिभवपदं तिरस्कारपदं न स्युर्न भवन्ति सर्व एव भवन्तीत्यर्थः। यदत्र "घनोपलस्तु करकः" इति यादववचनात् करकशब्दस्य नियतपुंलिङ्गताभिप्रायेण करकाणामवृष्टिरिति केषाञ्चित् व्याख्यानम्। तदन्ये नानुमन्यन्ते, "वर्षोपलस्तु करका" इत्यमरवचनव्याख्याने क्षीरस्वामिना "कमण्डलौ च करकः सुगते च विनायकः" इति नानार्थे पुंस्यपि वक्ष्यति" इति वदता उभयलिङ्गताप्रकाशनात्। यादवस्य तु पुंलिङ्गताभिधाने तात्पर्य्यं न तु स्त्रीलिङ्गतानिषेधे इति न तद्विरोधोऽपि। "करकस्तु करङ्के स्यादाक्रोशे च कमण्डलौ। पक्षिभेदे करे चापि करका तु घनोपले" इतिविश्वप्रकाशवचने तु उभयलिङ्गता व्यक्तैवेति न कुत्रापि विरोधवार्त्ता। अतएव रुद्रः—"वर्षोपलस्तु करका करकोऽपि च दृश्यते॥" ॥५४॥

हिन्दी—वह हिमालयमें गुहासे भिड़नेके वास्ते वेग करनेवाले मृगविशेष अपने अङ्ग नष्ट करनेके कारण अगर रास्ता छोड़े हुये तुमको हठात् उल्लङ्घन करेंगे (यानी कोशिश करेंगे) तो उन्होंकी भीषण शिलावर्षासे विक्षिप्त करोगे। (क्योंकि) असम्भव काममें कोशिश करनेवाला कौन पुरुष तिरस्कृत नहीं होता है? ॥५४॥

বাঙ্গালা—হে মেঘ! সেই হিমালয়ে তুমি পথ ছাড়িয়া দিলেও

तत्र व्यक्तं दृषदि चरणन्यासमर्द्धेन्दुमौलेः
शश्वत् सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः।
यस्मिन् दृष्टे करणविगमादूर्द्धमुद्धूतपापाः
सङ्कल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥५५॥

যে শরভগণ ক্রোধবশতঃ বেগে উল্লম্ফন করিয়া, আপনাদেরই অঙ্গভঙ্গের জন্য হঠাৎ তোমাকে লঙ্ঘন করিবার চেষ্টা করিবে; তুমি তুমুল শিলাবৃষ্টি করিয়া তাহাদিগকে তাড়াইয়া দিবে। কারণ, নিষ্ফল কার্য্যে উদ্যত কোন্ ব্যক্তি তিরস্কারের ভাগী না হইয়া থাকে? ॥৫৪॥

**अन्वयः**—तत्र दृषदि व्यक्तं सिद्धैः शश्वत् उपचितबलिं अर्द्धेन्दुमौलेः चरणन्यासं भक्तिनम्रं परीयाः, यस्मिन् दृष्टे श्रद्दधानाः उद्धूतपापाः करणविगमात् ऊर्द्धं स्थिरगणपदप्राप्तयं सङ्कल्पन्ते ॥५५॥

**चञ्चला**—तत्रेति। तत्र हिमालये, दृषदि कस्मिंश्चित् पाषाणे व्यक्तं स्पष्टं व्यक्ततया हठादेव दर्शनयोग्यमित्यर्थः, सिद्धैरणिमादि-सिद्धजनैः, शश्वत् सर्वदा उपचितबलिं दत्तपूजोपहारम्, अर्द्धेन्दुमौले-रर्द्धचन्द्रशेखरस्य शिवस्य, चरणन्यासं चरणस्थापनचिह्नम्, त्वं भक्त्या नम्रः सन्, परीयाः प्रदक्षिणीकुर्य्याः। कुत इत्याह—यस्मिन् चरणन्यासे, दृष्टे सति, श्रद्दधाना देवताचरणचिह्नदर्शनफले विश्वसन्तो जनाः, उद्धूतपापा दूरीकृतकलुषाः सन्तः, करणविगमादूर्द्धं देहावसानात् परम्, स्थिरं चिरस्थायि यद्गणपदं प्रमथानां स्थानं तस्य प्राप्तये लाभाय सङ्कल्पन्ते शक्नुवन्ति।

(५५) दूरमुद्धूतपापाः। कल्पन्तेऽस्य स्थिर...। इति पाठभेदौ।

अत्र शिवपदचिह्नप्रदक्षिणं प्रति पराईवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः ।

तथा संपूर्वकस्य क्लृपधातोर्मानसिककामनाविशेषार्थस्यैव वाचकत्वादत्र तु शक्त्यर्थे प्रयोगादवाचकत्वदोषः, तेन "कल्पन्तेऽस्य" इति पाठ एव साधीयान् ॥५५॥

सञ्जीवनी—तत्रेति । तत्र हिमाद्रौ, दृषदि कस्याञ्चित् शिलायां व्यक्तं प्रकटं शश्वत् सदा सिद्धैर्योगिभिः । "सिद्धिर्निष्पत्तियोगयोः" इति विश्वः । उपचितबलिं रचितपूजाविधिम्, "बलिः पूजोपहारयोः" इति यादवः । अर्द्धश्चासौ इन्दुश्चेति अर्द्धेन्दुः । "अर्द्धः खण्डे समेऽंशके" इति विश्वः । स मौलौ यस्य तस्य ईश्वरस्य चरणन्यासं पादविन्यासम्, भक्तिः पूज्येष्वनुरागः तया नम्रः सन् परीयाः प्रदक्षिणं कुरु । परिपूर्वादिणो लिङ् । यस्मिन् पादन्यासे दृष्टे सति उद्धूतपापाः निरस्तकल्मषाः सन्तः श्रद्दधानाः विश्वसन्तः पुरुषाः । श्रद्धा विश्वास आस्तिक्यबुद्धिरिति यावत् । "श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या" इति श्रत्पूर्वात् दधातेः शानच् । करणस्य चैत्रस्य विगमादूर्द्ध्वं देहत्यागानन्तरम् । "करणं साधकतमं चैत्रगात्रेन्द्रियेष्वपि" इत्यमरः । स्थिरं शाश्वतं गणानां प्रमथानां पदं स्थानम्, "गणाः प्रमथसंख्यौघाः" इति वैजयन्ती । तस्य प्राप्तये सङ्कल्पन्ते समर्था भवन्ति । क्लृपेः पर्य्याप्तिवचनस्य अलमर्थत्वात् तद्योगे "नमः स्वस्ति—" इत्यादिना चतुर्थी । "अलमिति पर्य्याप्त्यर्थग्रहणम्" इति भाष्यकारः । "अव्यक्तं व्यञ्जयामास शिवः श्रीचरणद्वयम् । हिमाद्रौ शाम्भवादीनां सिद्धये सर्वकर्म्मणाम् ॥ दृष्ट्वा श्रीचरणं सम्यक् साधकः स्थिरयेत्तनुम् । इच्छाधीनशरीरो हि विचरेच्च जगत्त्रयम् ॥" इति शम्भुरहस्ये ॥५५॥

हिन्दी—वहां पर ( हिमालयमें ) पत्थरमें प्रकटित इरवक्त सिद्धोंसे पूजा

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्य्यमाणाः
संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः।
निर्ह्रादस्ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्
सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः॥५६॥

प्राप्त महादेवके पादचिह्नको भक्तिपूत होकर प्रदक्षिण करो। जिनको देखनेसे पापशून्य विश्वस्त पुरुष देहत्यागके बाद प्रमथके नित्यपद पानेके लिये सम' होते है ॥५५॥

বাঙ্গালা—সেই হিমালয়ে কোনও প্রস্তরের উপরে ভগবান্ চন্দ্রশেখরের সুস্পষ্ট একটী চরণচিহ্ন আছে; যোগিগণ সর্ব্বদা তাহার পূজা করিয়া থাকেন; তুমি ভক্তিবশতঃ নম্র হইয়া তাহার প্রদক্ষিণ করিবে। কারণ, শ্রদ্ধাশালী ব্যক্তিগণ যে চরণচিহ্ন দর্শনের পর নিষ্পাপ হইয়া দেহত্যাগের পর চিরস্থায়ী প্রমথপদ লাভ করিতে সমর্থ হইয়া থাকেন ॥৫৫॥

अन्वयः—अनिलैः पूर्य्यमाणाः कीचकाः मधुरं शब्दायन्ते, संसक्ताभिः किन्नरीभिः त्रिपुरविजयः गीयते, चेत् कन्दरेषु ते निर्ह्रादः मुरजे ध्वनिः इव स्यात् तत्र पशुपतेः सङ्गीतार्थः समग्रः ननु भावी ॥५६॥

चञ्चला—शब्देति। हे मेघ! अनिलैर्वायुभिः, पूर्य्यमाणाः पूर्य्यमाणरन्ध्राः, कीचका वंशप्रदण्डाः, मधुरं यथा स्यात्तथा शब्दायन्ते शब्दं कुर्वन्ति। एतेन वंशीवाद्यसम्पत्तिः सूचिता। ततश्च संसक्ताभिः सम्मिलिताभिः किन्नरीभिः त्रिपुरविजयः त्रिपुरासुरस्य पुरत्रयविजय-वृत्तान्तः गीयते। एतेन तासां नृत्यमपि सूचितम्, एवञ्च चेद्यदि कन्दरेषु गुहासु, ते तव निर्ह्रादो गर्जनध्वनिः मुरजे मृदङ्गे ध्वनिरिव

(५६) संरक्ताभिः। निर्ह्रादी ते। इति पाठभेदौ।

स्यात् मृदङ्गस्य शब्द इव भवेदित्यर्थः, तत्र तदा पशुपतेस्तत्रावस्थितस्य महादेवस्य, सङ्गीतार्थः सङ्गीतरूपो विषयः, समग्रो ननु सम्पूर्ण एव, भावी भविष्यति। "नृत्यं गीतं तथा वाद्यं त्रयं सङ्गीतमुच्यते" इत्यभिधानादिति भावः।

अत्र कीचकशब्द-किन्नरीगान-मेघनिर्ह्रादानामेकशिवचरणचिह्न-समीपे क्रमाद्भवनात् पर्य्यायो नामालङ्कारः औत्सुपमा चेत्यनयोरङ्गाङ्गि-भावेन सङ्करः। तथा "शब्दायन्ते" इति कर्त्तृवाच्यप्रत्ययेन प्रक्रम्य "गीयते" इति कर्म्मप्रत्ययाभिधानाद्भग्नप्रक्रमतादोषः, एवं द्वितीयपादे समुच्चयार्थकश्चकार आवश्यकः किन्तु नोक्त इति वाच्यानभिधानदोषश्च। "शब्दं कुर्वन्त्यनिलभरिताः कीचकाः शैलरम्यं संगायन्ति त्रिपुरविजयं किन्नरीश्रेणयश्च" इति पाठे तु तयोः समाधानम् ॥५६॥

सञ्जीवनी—शब्दायन्त इति। हे मेघ! अनिलैः पूर्य्यमाणाः कीचका वेणुविशेषाः। "वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इत्यमरः। मधुरं श्रुतिसुखं यथा तथा शब्दायन्ते शब्दं कुर्वन्ति "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इति क्यङ्। अनेन वंशवाद्य-सम्पत्तिरुक्ता। संसक्ताभिः संयुक्ताभिः वंशवाद्यानुषक्ताभिर्वा। संरक्ताभि-रिति पाठे संरक्तकण्ठीभिरित्यर्थः। किन्नरीभिः किन्नरस्त्रीभिः, त्रयाणां पुराणां समाहारस्त्रिपुरम्। "तद्धितार्थोत्तरपद—" इति समासः, पात्रादित्वान्नपुंसकत्वम्। तस्य विजयो गीयते। कन्दरेषु दरीषु। "दरी तु कन्दरो वा स्त्री" इत्यमरः। ते तव निर्ह्रादः मुरजे वाद्यभेदे ध्वनिरिव मुरजध्वनिरिवेत्यर्थः स्याच्चेत् तर्हि तत्र चरणसमीपे पशुपते-र्नित्यसन्निहितस्य शिवस्य सङ्गीतं सम्यक् गीतं तदेव अर्थः सङ्गीतार्थः सङ्गीतवस्तु। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। समग्रः

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्
हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्य्यगायामशोभी
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥५७॥

सम्मूर्च्छः भावी ननु भविष्यति खलु। "भविष्यति गम्यादयः" इति भविष्यदर्थे णिनिः ॥५६॥

**हिन्दी**—हे मेघ ! वायुसे पूर्णाभ्यन्तर वेणुविशेष मधुर शब्द करते है; समवेत किन्नरीयोंने त्रिपुरविजय गाता है; (अतएव) तुम्हारे गर्जन मृदङ्ग शब्दके माफिक गुहामें अगर ध्वनित हो जाय तो वहां महादेवके सङ्गीतवस्तु बिलकुल मिल जाया करेगा ॥५६॥

**বাঙ্গালা**—হে মেঘ! বংশদণ্ডসমূহ বায়ুতে পরিপূর্ণ হইয়া মধুর শব্দ করিয়া থাকে এবং কিন্নরীগণ সম্মিলিত হইয়া মহাদেবের ত্রিপুর-বিজয় বৃত্তান্ত গান করে; (এই অবস্থায়) মৃদঙ্গশব্দের ন্যায় গুহার ভিতরে যদি তোমার গম্ভীর গর্জ্জনধ্বনি হইতে থাকে, তবে সেই স্থানে মহাদেবের সঙ্গীত বিষয়টী সম্পূর্ণই হইবে ॥৫৬॥

**अन्वयः**—प्रालेयाद्रेः उपतटं तान् तान् विशेषान् अतिक्रम्य हंसद्वारं भृगुपति-यशोवर्त्म यत् क्रौञ्चरन्ध्रं, तेन बलिनियमनाभ्युद्यतस्य विष्णोः श्यामः पादः इव तिर्य्यगायां आशोभी उदीचीं दिशं अनुसरेः ॥५७॥

**चञ्चला**—प्रालेयेति। हे मेघ! प्रालेयाद्रेर्हिमालयपर्वतस्य, तटस्य समीपे इत्युपतटं सन्निहितप्रदेशे इत्यर्थः, तान् तान् सर्वान् विशेषान् वनप्रस्रवणादिद्रष्टव्यपदार्थान् अतिक्रम्य, हंसद्वारं तदाख्यम्,

(५७) अतिक्रम्य त्वं उपक्रम्य। अनुसरेरित्यत्र अनुपतेः। इति पाठभेदौ।

भृगुपतेर्भृगुवंशश्रेष्ठस्य परशुरामस्य यद् यशो वीरत्वमुख्यातिस्तस्य वर्त्म प्रसरणपथस्वरूपम्, यत् क्रौञ्चस्य तदाख्यपर्वतस्य रन्ध्रं छिद्रम्, वर्त्तत इति शेषः, तेन क्रौञ्चरन्ध्रेण, बलेर्बलिनामकदैत्यराजस्य नियमने बन्धने अभ्युद्यतस्य प्रवृत्तस्य, विष्णोस्त्रिविक्रमरूपस्य वामनस्य, श्यामः श्यामवर्णः पादश्चरण इव, तिर्य्यगायामेन वक्रदीर्घतया शोभत इति स तादृशस्त्वम्, उदीचीमुत्तरां दिशम्, अनुसरेर्गच्छ।

अत्र यशोवर्त्म इति निरङ्गं केवलरूपकम्, विष्णोः पाद इवेति श्रौत्युपमा च, अनयोर्मिथो निरपेक्षतया संसृष्टिः। तथा "तान् तान् विशेषानतिक्रम्य उदीचीं दिशमनुसरेः" इति वाक्यमध्ये द्वितीयचरणात्मक-वाक्यान्तरस्य प्रवेशाद्गर्भितता नाम दोषः; स तु द्वितीयचरणमेव प्रथमं पठित्वा यथाकथञ्चित् समाधेयः। क्रौञ्चरन्ध्रस्य इतिहासः सञ्जीवन्यामभिहितः बलिबन्धनेतिहासस्तु प्रसिद्ध एव ॥५७॥

सञ्जीवनी—प्रालेयाद्रेरिति। प्रालेयाद्रेर्हिमाद्रेः, उपतटं तट-समीपे। "अव्ययं विभक्ति—" इत्यादिना समीपार्थे अव्ययीभावः। तान् तान् वीप्सायां द्विरुक्तिः। विशेषान् द्रष्टव्यार्थान्। "विशेषो-ऽवयवे द्रव्ये द्रष्टव्योत्तमवस्तुनि" इति शब्दार्णवः। अतिक्रम्य अनुसरे-र्गच्छेरिति अनागतेन सम्बन्धः। हंसानां द्वारं हंसद्वारम्। मानस-प्रस्थायिनो हंसाः क्रौञ्चरन्ध्रेण सञ्चरन्ते इत्यागमः। भृगुपतेर्जामदग्न्यस्य यशोवर्त्म यशःप्रवृत्तिकारणमित्यर्थः, यत् क्रौञ्चस्य अद्रेः रन्ध्रमस्ति, तेन क्रौञ्चबिलेन, बलेर्दैत्यस्य नियमने बन्धने अभ्युद्यतस्य प्रवृत्तस्य विष्णो-र्व्यापकस्य त्रिविक्रमस्य श्यामः कृष्णवर्णः पाद इव तिर्य्यगायामेन क्षिप्र-प्रवेशनार्थं तिरश्चीनदैर्घ्येण शोभत इति तथाविधः सन्, उदीचीमुत्तरां दिशम् अनुसरेरनुगच्छ। पुरा किल भगवतो देवात् धूर्जटेः धनुरुप-निषदमधीयानेन भृगुनन्दनेन स्कन्दस्य स्पर्द्धया क्रौञ्चशिखरिणमति-

गत्वा चोर्द्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥५८॥

निशितविशिखमुखेन हेलया मृत्पिण्डभेदं भित्त्वा ततः क्रौञ्चभेदादेव सद्यः समुज्जृम्भिते कस्मिन्नपि यशःक्षीरनिधौ निखिलमपि जगज्जाल-माप्लावितमिति कथा श्रूयते ॥५७॥

**हिन्दी**—हिमालयके तटके नजदीक बहु बहु द्रष्टव्यविषय अतिक्रम करके परशुरामके यशोमार्ग और हंसोंकी जानेकी, दरवाजा जो क्रौञ्च पाहाड़के छिद्र है, तिससे बलिदैत्यको बांधनेके वास्ते प्रवृत्त विष्णुमहाराजके कालाचरण सदृश वक्रभावसे दीर्घ होकर उत्तर दिशाको चलो ॥५७॥

**বাঙ্গালা**—হে মেঘ! হিমালয়ের নিকটবর্ত্তী সেই সমস্ত দ্রষ্টব্য পদার্থ অতিক্রম করিবে; তাহার পর (হংসগণের মানসসরোবরে যাইবার দ্বার বলিয়া) হংসদ্বারনামে প্রসিদ্ধ এবং পরশুরামের কীর্ত্তি-বিস্তারের পথস্বরূপ যে ক্রৌঞ্চপর্ব্বতের রন্ধ্র আছে, তাহা দ্বারা, দৈত্যরাজ বলিকে বন্ধন করিতে প্রবৃত্ত ভগবান্ ত্রিবিক্রমদেবের শ্যামবর্ণ চরণের ন্যায় দীর্ঘ ও তীর্য্যক্-(তেরচা) ভাবে শোভমান হইয়া তুমি ক্রমে উত্তর দিকে যাইতে থাকিবে ॥৫৭॥

**अन्वयः**—ऊर्द्ध्वं च गत्वा दशमुखभुजोच्छ्वासितप्रस्थसन्धेः त्रिदशवनितादर्पणस्य कैलासस्य अतिथिः स्याः; यः कुमुदविशदैः शृङ्गोच्छ्रायैः खं वितत्य प्रतिदिनं राशीभूतः त्र्यम्बकस्य अट्टहासः इव स्थितः ॥५८॥

(५८) तुङ्गोच्छ्रायैः। कुसुमविशदैः। प्रतिदिशमिव। इति पाठभेदाः।

चञ्चला—गत्वेति । क्रौञ्चरन्ध्रेण निर्गम्य ऊर्द्ध्वञ्च गत्वेति तात्पर्य्यम्, दशमुखस्य रावणस्य भुजैर्बाहुभिः उच्छ्वासिता विश्लेषिताः प्रस्थसन्धयः सानुसंयुक्तदेशा यस्य तस्य, तथा त्रिदशवनितानां देवरमणीनां दर्पणस्य दर्पणस्वरूपस्य, स्फटिकमयत्वेन रजतमयत्वेन च प्रतिविम्बग्राहित्वादिति भावः, कैलासस्य पर्वतस्य, अतिथिरवस्थातुकामः, स्या भवेः । यः कैलासः, कुमुदवत् विशदैः शुभ्रैः, शृङ्गाणाम् उच्छ्रायैस्तुङ्गत्वैः उच्चशृङ्गैरित्यर्थः, खमाकाशम्, वितत्य व्याप्य, प्रतिदिनं राशीभूतः पुञ्जीभूतः, त्र्यम्बकस्य शिवस्य, अट्टहासो महाहास इव स्थितः । "यशसि धवलता वर्ण्यते हासकीर्त्योः" इति कविसमयप्रसिद्धया रजतादिमयत्वेन च उभयोरपि शुभ्रत्वादित्याशयः ।

अत्र कुमुदविशदैरिति समासगता लुप्तोपमा अट्टहास इवेति गुणोत्प्रेचा चानयोरङ्गाङ्गिभावेन सङ्करः; तस्य च त्रिदशवनितादर्पणस्येति निरङ्गकेवलरूपकेण सह पुनः संसृष्टिः परस्परनिरपेचत्वात् । दशमुखेत्यादिविशेषणेन रावणस्याप्यादरणीयतया सर्वेषामेवादरणीयत्वं त्रिदशेत्यादिविशेषणेन च निर्म्मलत्वान्मनोहरत्वं व्यज्यते, तेन च मेघस्यातिथित्वे रुचिः प्रतिपादितेति न अपुष्टार्थत्वदोषः ।

कदाचित् परममाहेश्वरो लङ्केश्वरः प्रतिदिनमेव शिवपूजनाय नितान्तदूरागमनपरिश्रमपरिजिहीर्षया शिवस्यावासभूतं कैलासमेव लङ्कासमीपमुपनेतुं तमुत्तोलयामास । शिवस्तु विश्वम्भरभारेण पुनस्तं स्वस्थान एव स्थापयामासेति पुराणप्रवादः । अन्ये तु अन्यथापि प्रवादमाचचते ॥५८॥

सञ्जीवनी—गत्वेति । क्रौञ्चविलनिर्गमनानन्तरम् ऊर्द्ध्वञ्च गत्वा दशमुखस्य रावणस्य भुजैर्बाहुभिः उच्छ्वासिता विश्लेषिताः प्रस्थानां

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृत्तद्विरददशनच्छेदगौरस्य तस्य।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्रीम्
अंसन्यस्ते सति हलभृतो मेचके वाससीव ॥५९॥

---

सानूनां सन्चयो यस्य तस्य। एतेन नयनकौतुकसद्भाव उक्तः। त्रिदश-परिमाणमेषामस्तीति त्रिदशाः। "संख्याव्यय—" इत्यादिना बहुव्रीहिः। "बहुव्रीहौ संख्येये डच्" इत्यादिना समासान्तो डच् प्रत्ययः। त्रिदशानां देवानां वनितास्तासां दर्पणस्य कैलासस्य स्फटिकमयत्वात् रजतमयत्वाद्वा विम्बग्राहित्वेनेदमुक्तम्। कैलासस्य अतिथिः स्याः। यः कैलासः कुमुदविशदैर्निर्म्मलैः शृङ्गाणामुच्छ्रायैरौन्नत्यैः खमाकाशं वितत्य व्याप्य प्रतिदिनं दिने दिने राशीभूतः त्र्यम्बकस्य त्रिलोचनस्य अट्टहासः अतिहास इव स्थितः। "अट्टौ अतिशयक्षौमौ" इति यादवः। धावल्यात् हासत्वेन उत्प्रेक्षा। हासादीनां धावल्यं कविसमय-प्रसिद्धम् ॥५८॥

हिन्दी—वह क्रौञ्चविलसे बाहर आकर ऊपर जानेके बाद रावणकी भुजाओंसे विश्लेषित तटकी सन्धि हुआ है जिसका, ऐसा कैलास पहाड़; जोकि रजतमय होनेसे देवोंकी औरतोंकी दर्पणस्वरूप, उसका अतिथि हो जावो। जो कुमुदके माफिक विशद शिखरोंके औन्नत्यसे आकाश व्याप्त करके वर्त्तमान है, जैसे हर रोजका महादेवके हास्य ॥५८॥

বাঙ্গালা—( ক্রৌঞ্চরন্ধ্র হইতে নির্গমনের পর ) ঊর্দ্ধদিকে গমন করিয়া, রাবণের বাহুবলে উত্তোলিত হওয়ায় বিভক্তসন্ধি এবং দেবরমণী-গণের দর্পণস্বরূপ কৈলাসপর্ব্বতের অতিথি হইবে। যে কৈলাসপর্ব্বত,

কুমুদের ন্যায় শুভ্রবর্ণ ও উচ্চ শৃঙ্গসমূহদ্বারা আকাশ ব্যাপ্ত করিয়া প্রত্যহ মহাদেবের পুঞ্জীভূত অট্টহাস্যের ন্যায় অবস্থান করিতেছে ॥৫৮॥

अन्वयः—स्निग्धभिन्नाञ्जनाभे त्वयि तटगते (सति) सद्यःकृत्तद्विरददशनच्छेद-गौरस्य तस्य अद्रेः मेचके वाससि अंसन्यस्ते हलभृतः इव स्तिमितनयनप्रेक्षणीयां भवित्रीं शोभां उत्पश्यामि ॥५९॥

चञ्चला—उदिति। स्निग्धं चिक्कणं भिन्नं घृष्टञ्च यदञ्जनं कज्जलं तस्य आभा इव आभा यस्य तादृशे, त्वयि मेघे, तटगते उच्चप्रदेश-विशेषावस्थिते सति, सद्यःकृत्तस्तत्क्षणमेव छिन्नः एतेन धावल्यातिशयो व्यज्यते, यो द्विरददशनच्छेदो हस्तिदन्तखण्डः तद्वद्गौरो धवलस्तस्य, तस्य प्रागुक्तस्य, अद्रेः कैलासपर्वतस्य, मेचके श्यामवर्णे, वाससि वस्त्रे, अंसन्यस्ते स्कन्धस्थापिते सति, हलभृतो बलरामस्य इव, स्तिमिताभ्यां सौन्दर्य्यातिशयात् निश्चलाभ्यां नयनाभ्यां सर्वस्यैव चक्षुर्भ्यां प्रेक्षणीयां दर्शनीयाम्, भवित्रीं भाविनीम्, शोभाम् उत्पश्यामि सम्भावयामि।

अत्र प्रथमचरणे समासगता लुप्तोपमा, द्वितीयचरणे रद-दशन-शब्दयोः पर्य्यायतया आपाततस्तदर्थस्य पौनरुक्त्यावभासनात् परञ्च द्विरदस्य दशनेति तद्भेदावगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासः समासगता लुप्तोपमा च अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः, द्वितीयार्द्धे च श्रौती पूर्णोपमा, इत्येतेषां पुनरङ्गाङ्गिभावेन सङ्करः ॥५९॥

सञ्जीवनी—उत्पश्यामीति। स्निग्धं मसृणं भिन्नं मर्द्दितञ्च यदञ्जनं कज्जलं तस्य आभा इव आभा यस्य तस्मिन् त्वयि तटगते सानुगते सति, सद्यः कृत्तस्य छिन्नस्य द्विरददशनस्य गजदन्तस्य छेदवत् गौरस्य धवलस्य तस्य अद्रेः कैलासस्य, मेचके श्यामले। "कृष्णे नीलासितश्यामकालश्यामलमेचकाः" इत्यमरः। वाससि वस्त्रे अंस-

हित्वा तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता
क्रीड़ाशैले यदि च विचरेत् पादचारेण गौरी ।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥६०॥

---

न्यस्ते सति, हलभृतो बलभद्रस्य इव स्तिमिताभ्यां नयनाभ्यां प्रेक्षणीयां शोभां भवित्रीं भाविनीम् उत्पश्यामि शोभा भविष्यतीति तर्कयामीत्यर्थः। श्रौती पूर्णोपमालङ्कारः ॥५९॥

हिन्दी—चिकने और मर्द्दित काजलके माफिक तुम तटपर होनेमें अभी हाथीके छिन्न दांतकी टुकड़े सदृश उसका कैलासका, काले कपड़े स्कन्धपर लिये हुये बलदेवजीके समान, निश्चल आंखोंसे दर्शनीय होनेवाली शोभामें विचारता हूं ॥५९॥

বাঙ্গালা—হে মেঘ! তুমি স্নিগ্ধ এবং মর্দ্দিত কজ্জলের ন্যায় কৃষ্ণবর্ণ, আর কৈলাসপর্ব্বত সত্যশ্ছিন্ন হস্তিদন্তখণ্ডের ন্যায় শুভ্রবর্ণ; অতএব তুমি ঐ কৈলাসপর্ব্বতের কোনও উপরিভাগে আরোহণ করিলে, স্কন্ধদেশে নীলবর্ণ বসন সংস্থাপন করিলে বলরামের ন্যায় ঐ কৈলাসপর্ব্বতের শোভা হইবে এবং তাহা সকলেই নিশ্চলনেত্রে দর্শন করিবে ইহা আমি মনে করি ॥৫৯॥

अन्वयः—तस्मिन् क्रीड़ाशैले शम्भुना भुजगवलयं हित्वा दत्तहस्ता गौरी पादचारेण यदि च विचरेत्, (तदा) अग्रयायी स्तम्भितान्तर्जलौघः भङ्गीभक्त्या विरचितवपुः मणितटारोहणाय सोपानत्वं कुरु ॥६०॥

चञ्चला—हित्वेति। किञ्चेति चार्थः। तस्मिन् प्रागुक्ते, क्रीड़ा-

---

(६०) यदि च विहरेत्। कुरु सुखपदारोहणामाग्रयायी। अत्र सुखपदास्वर्गमारोहणेषु। इति पाठान्तराणि।

शैले विहारपर्वते कैलासे, शम्भुना शिवेन, भुजगः सर्प एव वलय-स्तदीयहस्तभूषणं तम्, हित्वा गौर्य्या भयसम्भावनया परित्यज्य, दत्तो हस्तो यस्याः सा शम्भोः करं धारयन्तीत्यर्थः, गौरी पार्वती, पादचारेण चरणक्षेपेण, यदि विचरेत्; तदा त्वम्, अग्रयायी तयोः पुरोगामी, स्तम्भितः स्तम्भनेन घनत्वं प्रापितः अन्तर्जलौघः स्वाभ्यन्तरगतजलसमूहो येन सः, अन्यथा स्वदेहस्य कठिनत्वासम्भवेन सोपानत्वासम्भव इति भावः, तथा भङ्गीनां सोपानवदुन्नतावनतभावानां भक्त्या भजनेन विधानेनेत्यर्थः विरचितं विहितं वपुः शरीरं येन सः आत्मनो देहम्, सोपानवदेव उन्नतावनतं विधायेत्यर्थः, मणितटे रत्नमयसानुदेशे आरोहणाय गौरीशिवयोरधिरोहणाय सोपानत्वं कुरु स्वदेहेनैव सोपानत्वं प्रतिपादय। तेन च त्वं सर्वाङ्गीनगौरीशिवपादस्पर्शलाभेन सद्य एव धन्यो भविष्यसीति भावः।

अत्र सोपानत्वकरणं प्रति "भङ्गीभक्त्या विरचितवपुः" इत्यस्य "स्तम्भितान्तर्जलौघः" इत्यस्य च पदस्यार्थौ हेतुरिति काव्यलिङ्ग-मलङ्कारः ॥६०॥

सञ्जीवनी—हित्वेति। तस्मिन् क्रीड़ाशैले कैलासे। "कैलासः कनकाद्रिश्च मन्दरो गन्धमादनः। क्रीड़ार्थं निर्म्मिताः शम्भोर्देवैः क्रीड़ाद्रयोऽभवन्॥" इति शम्भुरहस्ये। शम्भुना शिवेन भुजग एव वलयः कङ्कणं तं हित्वा गौर्य्या भीरुत्वात् त्यक्त्वा दत्तहस्ता सती गौरी पादचारेण विचरेद् यदि, तर्हि अग्रयायी पुरोगतः तथा स्तम्भितो घनीभावं प्रापितः अन्तर्जलस्य ओघः प्रवाहो येन स तथाभूतः, भङ्गीनां पर्वणां भक्त्या रचनया विरचितवपुः कल्पितशरीरः सन् मणीनां तटं मणितटं तस्य आरोहणाय सोपानत्वं कुरु सोपानभावं भजेत्यर्थः ॥६०॥

हिन्दी—वह कैलासमें महादेवजीने सर्परूप कङ्कण छोड़ कर डाला हुआ

तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।
ताभ्यो मोक्षस्तव यदि सखे ! घर्म्मलब्धस्य न स्यात्
क्रीड़ालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ताः ॥६१॥

---

हाथ जिनकी ऊपर ऐसी पार्वतीजी अगर पादचारसे भ्रमण करें तो आगुये होकर पर्वों की रचनानेसे शरीर बनाकर वर्षासे पानी भितरमें रोक करके मणितटपर चढ़नेकेवास्ते सोपान बन जाना ॥६०॥

বাঙ্গালা—হে মেঘ! সেই ক্রীড়াপর্ব্বত কৈলাসে মহাদেব সর্পবলয় পরিত্যাগ করিয়া হস্তালম্বন দান করিলে, পার্ব্বতী যদি পদব্রজে বিচরণ করিতে থাকেন, তাহা হইলে তুমি তাঁহাদের সম্মুখে যাইয়া, নিজের দেহকে সোপানের ন্যায় উন্নত ও অবনত করিয়া এবং নিরুদ্ধ করায় অভ্যন্তরের জলরাশিকে কঠিন করিয়া, তাঁহাদের মণিময় তটে আরোহণের জন্য সোপানের কার্য্য করিবে ॥৬০॥

अन्वयः—तत्र सुरयुवतयः वलयकुलिशोद्घट्टनोद्गीर्णतोयं त्वां अवश्यं यन्त्रधारागृहत्वं नेष्यन्ति, ( हे ) सखे ! घर्म्मलब्धस्य तव ताभ्यः यदि मोक्षः न स्यात् ( तदा ) श्रवणपरुषैः गर्जितैः क्रीड़ालोलाः ताः भाययेः ॥६१॥

चञ्चला—तत्रेति। तत्र कैलासपर्वते, सुरयुवतयो देवानां तरुणारमण्यः, वलयानां स्वस्वकरकङ्कणानां कुलिशैः कोट्यग्रभागैर्यानि उद्घट्टनानि सन्ताड़नानि तैः उद्गीर्णं वहिष्कृतं तोयं जलं येन तं तथोक्तम्, त्वां मेघम्, अवश्यं निश्चितमेव, यन्त्रनिर्गता धारा यन्त्रधारास्तासां गृहत्वं क्षुद्रक्षुद्रधाराभिर्जलनिःसारकत्वमित्यर्थः नेष्यन्ति

---

(६१) तत्रावश्यं जनितसलिलोद्गारमन्तःप्रवेश्य इति पाठान्तरम् ।

प्रापयिष्यन्ति। हे सखे! घर्म्मे ग्रीष्मे लब्धस्य ताभिरेव प्राप्तस्य, अतएव सहसा मोक्षासम्भव इति भावः, तव, ताभ्यः सुरयुवतिभ्यः, यदि मोक्षो मुक्तिर्न स्यात्, तादृशजलधाराणामत्यन्तशीतलतया ग्रीष्म-निवारणादिति भावः, तदा श्रवणपरुषैः श्रुतिरूक्षैः गर्ज्जितैः स्वकीय-गर्ज्जनैः, क्रीड़ालोलाः खेलायामासक्ताः खेलासक्तत्वादेवान्यमनस्का इत्यर्थः, अतएव च तासां भीत्युत्पादनं सुकरमिति भावः, ताः सुरयुवतीः, भाययेस्त्रासयेः, तेनैव च तव ताभ्यः सहसैव मोक्षो भवेदित्याशयः।

अत्र मोक्षो न स्यादित्यर्थं प्रति घर्म्मलब्धपदस्यार्थो हेतुरिति पदार्थ-हेतुकं काव्यलिङ्गमलङ्कारः। कुलिशवत् सुतीक्ष्णताप्रतिपादनयोजनेन कुलिशपदस्य अग्रभागार्थे लक्षणाकरणान्न नेयार्थतादोषः॥६१॥

सञ्जीवनी—तत्रेति। तत्र कैलासे अवश्यं सर्वथा सुरयुवतयः वलयकुलिशानि कङ्कणकोटयः। शतकोटिवाचिना कुलिशशब्देन कोटिमात्रं लक्ष्यते। तैरुद्घट्टनानि प्रहाराः तैरुद्गीर्णमुत्सृष्टं तोयं येन तं त्वां यन्त्रेषु धारा यन्त्रधारास्तासां गृहत्वं कृत्रिमधारागृहत्वं नेष्यन्ति प्रापयिष्यन्ति। हे सखे! मित्र! घर्म्मे निदाघे लब्धस्य। घर्म्मलब्धत्वञ्चास्य देवभूमिषु सर्वदा सर्वर्त्तुसमाहारात् प्राथमिकमेघत्वाद्वा। यथोक्तम्—"आषाढ़स्य प्रथम—" इति। तव ताभ्यः सुरयुवतिभ्यः मोक्षो न स्यात् यदि तदा क्रीड़ालोलाः क्रीड़ासक्ताः प्रमत्ता इत्यर्थः। ताः सुरयुवतीः, श्रवणपरुषैः कर्णकटुभिः गर्ज्जितैः करणैः भायये-स्त्रासयेः। अत्र हेतुभयाभावात् आत्मनेपदं षुगागमश्च न॥६१॥

हिन्दी—वहांपर अवश्य सुरोंकी औरतें वलयकोटिके प्रहारसे छोड़ा हुआ पानी जिसने, ऐसी तुमको फुहारा बनावेंगी। हे सखे! अगर वे गरमीमें प्राप्त होकर तुमको न छोड़ेंगी तो कड़े गर्जनसे खेलपरवश उनहोंको भय देखाना॥६१॥

हेमाम्भोजप्रसवि सलिलं मानसस्याददानः
कुर्वन् कामं क्षणमुखपटप्रीतिमैरावतस्य।
धुन्वन् कल्पद्रुमकिशलयान्यंशुकानीव वातैः
नानाचेष्टैर्जलद! ललितैर्निर्विशेस्तं नगेन्द्रम् ॥६२॥

বাঙ্গালা—সেই কৈলাসপর্ব্বতে দেবরমণীগণ করকঙ্কণের সুতীক্ষ্ণ অগ্রভাগের প্রহারদ্বারা জলবর্ষণ করাইয়া অবশ্যই তোমাকে যন্ত্রধারা-গৃহের স্থানপাতী করিবে। হে সখে! তাহারা তোমাকে গ্রীষ্মের সময়ে পাইবে, সুতরাং তাহাদের হস্ত হইতে তোমার যদি মুক্তি না হয়, তবে তুমি শ্রুতিরূক্ষ গর্জ্জনদ্বারা খেলায় প্রবৃত্ত সেই দেবরমণীগণকে ভীত করিবে ॥৬১॥

अन्वयः—(हे) जलद! हेमाम्भोजप्रसवि मानसस्य सलिलं आददानः ऐरावतस्य क्षणमुखपटप्रीतिं कुर्वन् वातैः अंशुकानि इव कल्पद्रुमकिशलयानि धुन्वन् नानाचेष्टैः ललितैः तं नगेन्द्रं कामं निर्विशेः ॥६२॥

चञ्चला—हेमेति। हे जलद! मेघ! हेमाम्भोजानां स्वर्ण-पद्मानां प्रसवि उत्पादकम्, मानसस्य मानससरोवरस्य, सलिलं जलम्, आददानो गृह्णन्, ऐरावतस्य शिवपूजार्थमागतेन देवराजेन वाहनीकृत्य आनीतस्य तदीयगजस्य क्षणे जलदानसमये मुखे ऐरावतस्यैव वदने पटेन जलनिर्गमनिवारकवस्त्रेण या प्रीतिरानन्दस्ताम्, कुर्वन् निजदेहमेव वस्त्रस्थानपातीकृत्य तेन च जलनिर्गमनिवारणात् ऐरावतमत्यन्त-मानन्दयन्नित्यर्थः, तथा वातैः स्वकीयवायुभिः, अंशुकानीव सूक्ष्मवस्त्रा-

(६२) काममित्यत्र कामादिति। धुन्वन् वातैः सजलपृषतैः कल्पवृक्षांशुकानि छायाभिन्नस्फाटिकविशदं निर्विशेस्तं नगेन्द्रम्। इति पाठभेदो।

णीव, कल्पद्रुमाणां किशलयानि पल्लवानि, धुन्वन् कम्पयन्, नाना विविधाश्चेष्टा व्यवहारा येषु तैस्तादृशैः, ललितैः क्रीड़ाभिः, तं नगेन्द्रं कैलासम्, कामं यथेच्छम्, निर्विशेः उपभुञ्जीथाः ।

अत्र श्रौती उपमालङ्कारः ॥६२॥

सञ्जीवनी—हेमेति । हे जलद ! हेमाम्भोजानां प्रसवि जनकम् । "जिदृक्षि—" इत्यादिना इनिप्रत्ययः । मानसस्य सरसः सलिलमाददानः पिबन्नित्यर्थः । तथा ऐरावतस्य इन्द्रगजस्य कामचारित्वाद्वा शिवसेवार्थमिन्द्रागमनाद्वा समागतस्येति भावः, त्वयि जलदानकाले मुखे पटेन या प्रीतिस्तां कुर्वन्, तथा कल्पद्रुमाणां किशलयानि पल्लवभूतानि अंशुकानि सूक्ष्मवस्त्राणीव । "अंशुकं वस्त्रमात्रे स्यात् परिधानोत्तरीययोः । सूक्ष्मवस्त्रे नातिदीप्तौ" इति शब्दार्णवः । वातैर्मेघवातैः धुन्वन् नाना बहुविधाश्चेष्टास्तोयपानादयो येषु तैः ललितैः क्रीड़ितैः । "ना भावभेदे स्त्रीन्टत्ये ललितं त्रिषु सुन्दरे । अस्त्रियां प्रमदागारे क्रीड़िते जातपल्लवे ॥" इति शब्दार्णवः । तं नगेन्द्रं कैलासं कामं यथेष्टं निर्विशेः समुपभुङ्क्ष्व । "निर्वेशो भृतिभोगयोः" इत्यमरः । यथेच्छविहारो मित्रगृहेषु मैत्र्याः फलम् । सहजमित्रञ्च ते कैलासः । मेघपर्वतयोरकसूर्य्ययोरश्विचन्द्रयोः शिखिजीमूतयोः समीराग्नयोर्मिलता स्वयमिति भावः ॥६२॥

हिन्दी—हे मेघ ! स्वर्णमय पद्मोंका जनक मानससरोवरके पानी लेते हुये ऐरावत हाथीका पानी लेनेकी वक्त वदनमें कपड़ेकी तरह प्रीति करते हुये और वायुसे वस्त्रके सदृश कल्पद्रुमके पल्लवोंको कंपाते हुये तुम बहुचेष्टासमन्वित क्रीड़ाओंसे वह कैलासको यथेच्छ भोग करो ॥६२॥

বাঙ্গালা—হে মেঘ ! স্বর্ণময় পদ্ম-উৎপাদক মানসসরোবরের জল পান করিয়া, জলগ্রহণ করিবার সময়ে মুখে বস্ত্রের কার্য্য করায় ঐরাবত-

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्!।
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम्॥६३॥

---

হস্তীর আনন্দ জন্মাইয়া এবং স্বকীয় বায়ুদ্বারা সূক্ষ্ম বস্ত্রের ন্যায় কল্পবৃক্ষের পল্লবগুলিকে কম্পিত করিয়া—এই জাতীয় নানাবিধ ব্যবহারাত্মক ক্রীড়াদ্বারা তুমি সেই পর্ব্বতশ্রেষ্ঠ কৈলাসে ইচ্ছানুসারে ভোগ করিবে॥৬২॥

अन्वयः—प्रणयिनः इव तस्य उत्सङ्गे स्रस्तगङ्गादुकूलां अलकां दृष्ट्वा (हे) कामचारिन्! त्वं पुनः न ज्ञास्यसे (इति) न, उच्चैः विमाना या वः काले कामिनी मुक्ताजालग्रथितं अलकं इव सलिलोद्गारं अभ्रवृन्दं वहति॥६३॥

चञ्चला—तस्येति। प्रणयिनो दयितस्येव, तस्य कैलासपर्वतस्य, उत्सङ्गे उपरिभागे क्रोड़देशे च, स्रस्तं गलितं गङ्गा दुकूलं शुभ्रवस्त्रमिव अन्यत्र तु गङ्गेव दुकूलं यस्यास्ताम्, अलकां तदाख्यां कुवेरनगरीं प्रणयिनीञ्च, दृष्ट्वा, हे कामचारिन्! इच्छानुरूपविचरणक्षम! त्वं पुनर्न ज्ञास्यसे न परिचेष्यसे इति न अपि तु ज्ञास्यस एवेत्यर्थः, कामचारितया पूर्वमपि बहुवारदर्शनादिति भावः। उच्चैरुच्चानि विमानानि सप्तभूमिकभवनानि सप्ततलगृहाणि यस्यां सा, अन्यत्र तु उच्चैरत्यन्तं विगतो मानः कोपो यस्याः सा, या अलका, वो युष्माकं काले वर्षाकाल इत्यर्थः, कामिनी स्त्री, मुक्ताजालेन मौक्तिकमालया ग्रथितम् अलकं चूर्णकुन्तलमिव, सलिलं जलम् उद्गिरति वर्षतीति सलिलोद्गारम्, अभ्रवृन्दं मेघसमूहम्, वहति उच्चत्वात् धारयति।

---

(६३) व्योमचारिन्!। उच्चैर्विमानैः। इति पाठभेदौ।

अत्र पूर्वार्द्धे प्रणयिन इवेत्यभिधानात् कैलासे प्रणयिसाम्यस्य वाच्यत्वम्, किमप्यनभिधानात् अलकायां प्रणयिनीसाम्यस्य तु गम्यत्वमिति एकदेशविवर्त्तिन्युपमा ; परार्द्धे तु श्रौती उपमा ; अनयोः परस्परनिरपेक्षतया संसृष्टिः । तथा "अलकां ज्ञास्यसे" इत्युक्तिमात्रेणैव सिद्धौ पुनः "न न" इत्यभिधानेन अधिकपदतादोषप्रसक्तावपि अयोगव्यवच्छेदसूचनात् न तन्निर्वाहः । अतएवोक्तं साहित्यदर्पणे—"गुणः क्वाप्यधिकं पदम्" इति ॥६३॥

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीश-
भट्टाचार्य्यविरचितायां मेघदूतटीकायां
चञ्चलाभिधानायां पूर्वमेघः ॥०॥

---

सञ्जीवनी—तस्येति । प्रणयिनः प्रियतमस्येव तस्य कैलासस्य उत्सङ्गे ऊर्द्ध्वभागे कटौ च । "उत्सङ्गो मुक्तसंयोगे सक्थ्न्यूर्द्ध्वतलेऽपि च" इति मालतीमालायाम् । गङ्गा दुकूलं शुभ्रवस्त्रमिव इत्युपमितसमासः । "दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके" इति शब्दार्णवः । अन्यत्र तु गङ्गेव दुकूलं तत् स्रस्तं यस्यास्तां तथोक्ताम्, अलकां कुवेरनगरीं दृष्ट्वा कामिनीमिवेति शेषः, हे कामचारिन् ! त्वं पुनस्त्वन्तु न ज्ञास्यसे इति न, किन्तु ज्ञास्यस एवेत्यर्थः । कामचारित्वात्ते पूर्वमपि बहुकृत्वो दर्शनसम्भवादज्ञानमसम्भावितमेवेति निश्चयार्थं नञ्द्वयप्रयोगः । तदुक्तम्—"स्मृतिनिश्चयसिद्धार्थेषु नञ्द्वयप्रयोगः" इति । उच्चैर्विमानानि उन्नतानि सप्तभूमिभवनानि । "विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि" इति यादवः । तानि यस्यां सा । मेघसंवाहनस्थानसूचनार्थमिदं विशेषणम् । अन्यत्र विमाना निष्कोपा या अलका वो युष्माकं काले मेघकाले इत्यर्थः । कालस्य सर्वमेघसाधारणत्वात् व इति बहुवचनम् । सलिल-

मुद्गिरतीति सलिलोद्गारं स्रवत्सलिलधारमित्यर्थः। अभ्रवृन्दं मेघ-कदम्बकं कामिनी स्त्री मुक्ताजालैर्मौक्तिकसरैः ग्रथितं प्रत्युप्तम्। "पुंस्त्र्यां मौक्तिके मुक्ते" इति यादवः। अलकमिव चूर्णकुन्तलानीव जातावेकवचनम्। "अलकाश्चूर्णकुन्तलाः" इत्यमरः। वहति बिभर्त्ति। अत्र कैलासस्य अनुकूलनायकत्वम् अलकायाश्च स्वाधीनपतिकाख्य-नायिकात्वं ध्वन्यते। "एकायत्तोऽनुकूलः स्यात्" इति "प्रियोपलालिता नित्यं स्वाधीनपतिका मता" इति च लक्षयन्ति। उदाहरन्ति च— "लालयन् अलकप्रान्तान् रचयन् पत्रमञ्जरीम्। एकां विनोदयन् कान्तां छायावदनुवर्त्तते॥" इति॥६३॥

इति महामहोपाध्याय-कोलाचल-श्रीमल्लिनाथसूरिविरचितायां मेघसन्देश-व्याख्यायां सञ्जीवनीसमाख्यायां पूर्वमेघः॥०॥

हिन्दी—जैसे स्वामीके क्रोड़पर शिथिल सफेद कपड़ा पहनी हुजी स्त्री होती है, वैसे कैलासकी उपरसे गङ्गा गिरती है जहांसे, ऐसी अलकाको देख कर हे अपनी मर्जीसे घूमनेवाले। तुम न पहचानोगे यह नहीं बल्कि समझोगे। जो उन्नत सातमहलवाली बरसातके समयपर पानी वर्षते हुये मेघोंको पकड़ती है, जैसे औरत मुक्ताको जालीसे ग्रथित केशको धारण करती है॥६३॥

বাঙ্গালা—হে কামচারী মেঘ! প্রিয়তমের ক্রোড়দেশে গলিত-বসনা প্রিয়তমার ন্যায় সেই কৈলাসপর্ব্বতের উপরিভাগে গলিতগঙ্গা অলকাকে দেখিয়া তুমি যে চিনিবে না তাহা নহে (বহুবার দেখিয়াছ বলিয়া অবশ্যই চিনিবে,) সম্পূর্ণরূপে ক্রোধবিহীনা কামিনী যেমন মুক্তামালায় গ্রথিত স্খলিত কেশকলাপ ধারণ করে, সেইরূপ উচ্চ সপ্ততল-ভবনান্বিত যে অলকাপুরী তোমাদের কালে (বর্ষাকালে) জলবর্ষী মেঘ-সমূহকে ধারণ করে॥৬৩॥

## उत्तरमेघः ।

——::०::——

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥१॥

---

अन्वयः—यत्र ललितवनिताः सचित्राः सङ्गीताय प्रहतमुरजाः मणिमयभुवः अभ्रंलिहाग्राः प्रासादाः तैः तैः विशेषैः विद्युत्वन्तं सेन्द्रचापं स्निग्धगम्भीरघोषं अन्तस्तोयं तुङ्गं त्वां तुलयितुं अलं ॥१॥

चञ्चला—विद्युत्वन्तमिति। यत्र अलकायाम्, ललिताः सुन्दर्य्यो वनिताः स्त्रियो येषु ते। एतेन विद्युत्साहश्यं द्योतितम्। चित्रैश्चित्रितलक्ष्मीनारायणप्रभृतिमूर्त्तिभिः सहेति सचित्राः। अनेन इन्द्रचापसाम्यं सूचितम्। सङ्गीताय सङ्गीतसम्पादनार्थम्, प्रहतास्ताड़िता वादिता मुरजा मृदङ्गा येषु ते। असुना स्निग्धगम्भीरघोषतुलना प्रतिपादिता। मणिमय्यो मणिनिर्म्मिताः भुवः अङ्गनानि येषां ते। एतेन अन्तस्तोयतुल्यता दर्शिता अभ्यन्तरे तुल्यतरलतादर्शनात्। अभ्रंलिहानि गगनस्पर्शीनि अत्युच्चानीत्यर्थः अग्राणि उपरिभागा येषां ते। अनेन च तुङ्गवर्त्तितासाहश्यं ध्वनितम्। प्रासादा अट्टालिकाविशेषाः, तैस्तैः प्रागुक्तैर्ललितवनितत्वादिभिः, विशेषैर्धर्म्मैः, विद्युत्वन्तं विद्युद्विशिष्टम्, सेन्द्रचापम् इन्द्रधनुषा समन्वितम्, स्निग्धः अकर्कशः

गम्भीरश्च घोषो गर्जनं यस्य तम्, अन्तरभ्यन्तरे तोयं जलं यस्य तम्, तुङ्गम् अत्युच्चावस्थितम्, त्वां मेघम्, तुलयितुं सदृशीकर्त्तुम् उपमानी-कर्त्तुमिति यावत्, अलं समर्थाः।

अत्र विद्युत्वन्तमित्यादीनामुपमानानामनुक्रमेण ललितवनितादीना-मुपमेयानामभिधानाद् यथासंख्यं नामालङ्कारः आर्थी उपमा च, अनयोरङ्गाङ्गिभावेन सङ्करः। तथा प्रथमे तृतीये च चरणे द्वितीया-विभक्त्यन्तानि उपमानपदानि पूर्वं प्रथमाविभक्त्यन्तानि उपमेयपदानि च, पश्चात् द्वितीये चतुर्थे च चरणे तद्वैपरीत्यमिति भग्नप्रक्रमतादोषः, स तु 'स्निग्धामन्द्रध्वनितसुभगं गीतगर्जन्मृदङ्गाः' इति द्वितीयचरणे 'त्वां प्रासादाः' इति चतुर्थचरणे च पाठवैषम्येन समाधेयः ॥१॥

सञ्जीवनी—विद्युत्वन्तमिति। यत्र अलकायां ललिता रम्या वनिताः स्त्रियो येषु ते, सह चित्रैर्वर्त्तन्त इति सचित्राः। "आलेख्या-श्चर्य्ययोश्चित्रम्" इत्यमरः। "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः, "वोपसर्जनस्य" इति सह शब्दस्य समासः। सङ्गीताय तौर्य्यत्रिकाय प्रहतमुरजास्ताड़ितमृदङ्गाः। "मुरजा तु मृदङ्गे स्यात् ढक्कामुरजयो-रपि" इति शब्दार्णवः। मणिमय्यो मणिविकारा भुवो येषु ते। अभ्रं लिहन्तीति अभ्रंलिहानि अभ्रङ्कषाणि। "वहाभ्रे लिहः" इति खश्प्रत्ययः, "अरुर्द्विष—" इत्यादिना मुमागमः। अग्राणि शिखराणि येषां ते तथोक्ताः अतितुङ्गा इत्यर्थः, प्रासादा देवगृहाणि। "प्रासादो देवभूभुजाम्" इत्यमरः। विद्युतः अस्य सन्तीति विद्युत्वन्तम्, सेन्द्र-चापं इन्द्रचापवन्तम्, स्निग्धः श्राव्यः गम्भीरो घोषो गर्जितं यस्य तम्, अन्तः अन्तर्गतं तोयं यस्य तम्, तुङ्गमुन्नतं त्वां तैस्तैर्विशेषैः ललितवनितत्वादिधर्म्मैः तुलयितुं समीकर्त्तुम् अलं पर्य्याप्ताः। "अलं भूषणपर्य्याप्तिशक्तिवारणवाचकम्" इत्यमरः। अत्र उपमानोपमेयभूत-

हस्ते लीलाकमलमलके बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥२॥

मेघप्रासादधर्म्माणां विद्युद्वनितादीनां यथासंख्यमन्योन्यसादृश्यात् मेघ-प्रासादसादृश्यसिद्धिरिति विम्बप्रतिविम्बभावेन इयं पूर्णोपमा। वस्तुतो भिन्नयोः परस्परसादृश्यादभिन्नयोरुपमानोपमेयधर्म्मयोः पृथगुपादानात् विम्बप्रतिविम्बभावः ॥१॥

हिन्दी—जहां रम्य औरतोंवाले सचित्र, गानेकेवास्ते मृदङ्ग बजाते हुये, मणिमय भूवाले एवं मेघोंका शिखर लगा हुआ है, जिनके ऐसे महल, स्निग्ध और गम्भीर शब्द करनेवाले इन्द्रधनु धारण करते हुये, विद्युद्युक्त, भितर पूर्ण जल तुमको पूर्वोक्त विशेषणोंसे उपमित करणेमें योग्य है ॥१॥

বাঙ্গালা—হে মেঘ! তোমাতে বিদ্যুৎ আছে, অট্টালিকাসমূহেও সুন্দরী রমণী আছে; তোমাতে ইন্দ্রধনু আছে, অট্টালিকাসমূহেও চিত্র আছে; তোমাতে সুশ্রাব্য গম্ভীর গর্জ্জন রহিয়াছে, অট্টালিকাসমূহেও সঙ্গীতের নিমিত্ত বাদিত মৃদঙ্গের ধ্বনি রহিয়াছে; তোমার ভিতরে জল আছে, অট্টালিকাসমূহের ভিতরেও মণিময় প্রাঙ্গণ আছে এবং তুমি উচ্চদেশে থাক, অট্টালিকাসমূহের উপরিভাগও অতি-উচ্চদেশবর্ত্তী; সুতরাং যে অলকানগরীর অট্টালিকাসমূহ সেই সেই ধর্ম্মদ্বারা তোমার তুলনা করিতে সমর্থ ॥১॥

(२) अलके बालकुन्दानुवेधः, अलकं बालकुन्दानुविद्धं । आननश्रीः । इति पाठभेदाः ।

अन्वयः—यत्र वधूनां हस्ते लीलाकमलं अलके बालकुन्दानुविद्धं आनने श्रीः लोध्रप्रसवरजसा पाण्डुतां नीता, चूड़ापाशे नवकुरवकं कर्णे चारु शिरीषं सीमन्ते च त्वदुपगमजं नीपं ॥२॥

चञ्चला—अलकायां सर्वेषामेव ऋतूनां युगपदवस्थितिमाह हस्त इति। यत्र अलकायाम्, वधूनां स्त्रीणाम्, हस्ते लीलाकमलं विलासपद्मम्, अस्तीति शेषः। एवं सर्वत्र। एतेन शरदृतोरवस्थितिः सूचिता। अलके चूर्णकुन्तलप्रान्ते, बालं कलिकावस्थं यत् कुन्दं कुसुमं तस्य अनुविद्धं ग्रथनम्। अनेन हेमन्तावस्थितिर्द्योतिता। आनने मुखे, श्रीः शोभा, लोध्रप्रसवानां लोध्रपुष्पाणां रजसा परागेण पाण्डुतां नीता प्रापिता। अमुना शीतावस्थितिर्दर्शिता। चूड़ापाशे केशकलापोपरि नवकुरवकं नूतनं कुरवकपुष्पम्। एतेन वसन्तावस्थितिर्ध्वनिता। कर्णे चारु मनोहरम्, शिरीषं तदाख्यं पुष्पम्। अनेन ग्रीष्मस्थितिः सूचिता। सीमन्ते च केशवीथ्याञ्च, त्वदुपगमो वर्षाकालस्तज्जम्, नीपं कदम्बपुष्पम्।

अत्र अलकायाः प्रस्तुततया तदवस्थितानां षण्णामृतूनां तत्कार्य्यभूतपुष्पाणाञ्च प्रस्तुतत्वं वेदितव्यम्। तेन अस्तीत्यध्याहर्त्तव्यया एकया क्रियया लीलाकमलादीनां प्रस्तुतानां कर्त्तृतया अभिसम्बन्धात् तुल्ययोगिता, तथा कार्य्यभूतषड्विधपुष्पवर्णनात् कारणीभूतषड्ऋतुस्थितिप्रतीतेः पर्य्यायोक्तश्चालङ्कारः, इत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥२॥

सञ्जीवनी—सम्प्रति सर्वदा सर्वर्त्तुसम्पत्तिमाह हस्त इति। यत्र अलकायाम्, वधूनां स्त्रीणां हस्ते लीलार्थं कमलं लीलाकमलम्। शारद्भमेतत्। तदुक्तम्—"शरत् पङ्कजलक्षणा" इति। अलके कुन्तले। जातावेकवचनम्, अलकेष्वित्यर्थः। बालकुन्दैः प्रत्यग्रमाघ्यकुसुमैः अनु-

विद्धम् अनुवेधो ग्रन्थनम्। नपुंसके भावे क्तः। यद्यपि कुन्दानां ग्रैष्मिरत्वमस्ति, "माघ्यं कुन्दम्" इत्यभिधानात्, तथापि हेमन्ते प्रादुर्भावः शिशिरे प्रौढ़त्वमिति व्यवस्थाभेदेन हेमन्तकार्य्यत्वमित्याशयेन बाल इति विशेषणम्। अलकमिति प्रथमान्तपाठे सप्तमीप्रक्रमभङ्गः स्यात्। नाथस्तु "नियतपुंलिङ्गताहानिश्च" इति दोषान्तरमाह; तदसत्, "स्वभाववक्राण्यलकानि तासाम्" 'निधूतान्यलकानि पाटितमुरः क्षतृत्तो-ऽधरः खण्डितः" इत्यादिषु प्रयोगेषु नपुंसकलिङ्गतादर्शनादिति। आनने मुखे लोध्रप्रसवानां लोध्रपुष्पाणां शैशिराणां रजसा परागेण। "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः। पाण्डुतां नीता श्रीः शोभा। चूड़ापाशे केशपाशे नवकुरवकं वासन्तः पुष्पविशेषः। कर्णे चारु पेशलं शिरीषं ग्रैष्मः पुष्पविशेषः। सीमन्ते मस्तककेश-वीथ्याम्। "सीमन्तमस्त्रियां मस्तकेशवीथ्यामुदाहृतम्" इति शब्दार्णवः। तव उपगमो मेघागम इत्यर्थः, तत्र जातं त्वदुपगमजं वार्षिकमित्यर्थः, नीपं कदम्बकुसुमम्। सर्वत्र अस्तीति शेषः। अस्तिर्भवतिपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति न्यायात्। इत्थं कमलकुन्दादितत्तत्-कार्य्यसमाहाराभिधानादर्थात् सर्वर्त्तुसमाहारसिद्धिः, कारणं विना कार्य्यस्यासिद्धेरिति भावः ॥२॥

**हिन्दी**—जहां पर औरतोंका हाथमें खेलनेकेवास्ते पद्म है; केशमें अभिनव कुन्दफुलोंका ग्रथन है; वदनमें लोध्रफुलोंकी धूलिसे सफेद शोभा है; केशपाशमें नव कुरवक फूल है; कर्णमें मनोहर शिरीष पुष्प है एवं मस्तककी केशवीथीमें तुम्हारे आगमनसे जात नीपपुष्प है ॥२॥

**বাঙ্গালা**—যে অলকায় কামিনীগণের হস্তে লীলাপদ্ম, স্খলিত কেশের প্রান্তভাগ কুন্দকুসুমের কলিকামালাদ্বারা গ্রথিত, লোধ্রকুসুমের পরাগ মুখশ্রীকে পাণ্ডুবর্ণ করিয়া থাকে, কেশপাশের উপরিভাগে নূতন

यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पाः,
हंसश्रेणीरचितरशना नित्यपद्मा नलिन्यः।
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापाः,
नित्यज्योत्स्नाः प्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥३॥

কুরুবকপুষ্প, কর্ণে মনোহর শিরীষকুসুম এবং সীমন্তদেশে (সিঁতিতে) বর্ষাকালসঞ্জাত কদম্বকুসুম শোভিত থাকে ॥২॥

**अन्वयः**—यत्र पादपाः नित्यपुष्पाः उन्मत्तभ्रमरमुखराः नलिन्यः नित्यपद्माः हंसश्रेणीरचितरशनाः भवनशिखिनः नित्यभास्वत्कलापाः केकोत्कण्ठाः (तथा) प्रदोषाः नित्यज्योत्स्नाः प्रतिहततमोवृत्तिरम्याः (भवन्ति) ॥३॥

**वल्लभा**—यत्रेति। यत्र अलकायाम्, पादपा सर्व एव पुष्पवृक्षाः, नित्यानि स्वं स्वम् ऋतुमननुसृत्य सर्वदैवोत्पन्नानीत्यर्थः पुष्पाणि येषां ते अतएव उन्मत्तैः मधुपानाय उन्मत्तीभूतैः भ्रमरैः स्वदीयशब्दैरिति तात्पर्य्यं मुखराः शब्दायमानाः। नलिन्यः पद्मिन्यः सरोवरा इत्यर्थः नित्यानि हेमन्तकालेऽपि स्थितानीत्यर्थः पद्मानि यासां ताः, तेनैव च हंसश्रेण्या रचिता विहिता रशना रशनावत् परिवेष्टनानि यासां तास्तथोक्ताः। भवनशिखिनो गृहपालितमयूराः, नित्यं वर्षेतरकालेऽपीत्यर्थः भास्वन्तः प्रकाशमानाः कलापाः पिच्छानि येषां ते, तस्मादेव च केकाभिः स्ववाणीभिः उत्कण्ठा उद्ग्रीवाः। तथा प्रदोषा रात्रयः, नित्याः कृष्णपक्षेऽपि स्थिता इत्यर्थः ज्योत्स्ना येषां ते तादृशाः, अतएव च प्रतिहता तया ज्योत्स्नयैव नाशिता या तमोवृत्तिरन्धकारप्रवृत्तिस्तया रम्या मनोहराः। सर्वत्र भवन्तीति शेषः।

अत्र कथ्यावस्था भवन्तीत्येकया क्रियया प्रागुक्तरीत्या प्रस्तुताना-

मेव पादपादीनां कर्तृतया अभिसम्बन्धात् तुल्ययोगितालङ्कारः, व्याख्यान-प्रकारेण च चत्वारि पदार्थहेतुकानि काव्यलिङ्गानि इत्येतेषामङ्गाङ्गि-भावेन सङ्करः। केचित्तु उदात्तालङ्कारमपि वदन्ति। एभिश्च वस्तुभि-रलकाया इतरनगरीभ्य उत्कर्षो व्यज्यत इति वस्तुना व्यतिरेकालङ्कार-ध्वनिः। तथा पुनः पुनरेव केवलनित्यपदोपादानात् अनवीकृतत्वदोषः ; "पादपा नित्यपुष्पाः" "शश्वदब्जा नलिन्यः" "सर्वदा दीप्तवर्हाः" "ज्योत्स्नावन्तः" इत्थं पाठैस्तु तद्दोषनिरासः। ज्योत्स्नावन्त इति पाठे नित्ययोगे मतुप् ॥३॥

सञ्जीवनी—यत्रेति। यत्र अलकायाम्, पादपा वृक्षाः नित्यानि पुष्पाणि येषां ते तथा न तु ऋतुनियमादिति भावः, अतएव उन्मत्तै-र्भ्रमरैः मुखराः शब्दायमानाः। नलिन्यः पद्मिन्यः नित्यानि पद्मानि यासां ताः तथा न तु हेमन्तवर्जितमित्यर्थः, अतएव हंसश्रेणीभिः रचितरशनाः नित्यं हंसपरिवेष्टिता इत्यर्थः। भवनशिखिनः क्रीड़ा-मयूराः नित्यं भास्वन्तः कलापा वर्हाणि येषां ते तथोक्ताः, न तु वर्षास्वेव, अतएव केकाभिरुत्कण्ठा उदग्रीवाः। प्रदोषा रात्रयः नित्या ज्योत्स्ना येषां ते न तु शुक्लपक्ष एव, अतएव प्रतिहता तमसां वृत्तिर्व्याप्ति-र्येषां ते च ते रम्याश्चेति तथोक्ताः ॥३॥

हिन्दी—जहां पेड़ नित्यफुलवाले है, मधुमत्तभ्रमरोंसे मुखरित ; नित्यपद्म हंसों करके बनी हुई काञ्ची जिनकी, ऐसी पद्मिनी है हररोज प्रदीप्त बर्हवाले घरके मयूर स्वरसे उदग्रीव है ; और रात्रि नित्य ज्योत्स्ना होकर अन्धकार दूर करनेसे मनोहर है ॥३॥

বাঙ্গালা—যে অলকানগরীতে সকল ফুলের গাছেই সর্ব্বদাই ফুল থাকে বলিয়া মধুপানের নিমিত্ত উন্মত্ত ভ্রমরগণের রবে সে গাছগুলি মুখরিত হইয়া থাকে ; সরোবরে সর্ব্বদাই পদ্ম থাকে বলিয়া হংসশ্রেণী

आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तै:
नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ।
नाप्यन्यस्मात् प्रणयकलहाद्विप्रयोगोपपत्ति:
वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥४॥

মেখলার ন্যায় তাহাকে বেষ্টন করিয়া থাকে ; গৃহপালিত ময়ূরগণ সকল সময়েই পিচ্ছদাম প্রকাশ করিয়া কেকারবে উদ্‌গ্রীব হইয়া থাকে এবং সকল কালেই রাত্রিতে জ্যোৎস্না থাকে বলিয়া অন্ধকার বিনষ্ট হওয়ায় সে রাত্রিগুলি মনোহর হইয়া থাকে ॥৩॥

अन्वयः—यत्र वित्तेशानां नयनसलिलं आनन्दोत्थं अन्यैः निमित्तैः न, इष्टसंयोगसाध्यात् कुसुमशरजात् अन्यः तापः न, प्रणयकलहात् अन्यस्मात् विप्रयोगोपपत्तिः न अपि, यौवनात् अन्यत् च वयः न खलु अस्ति ॥४॥

चञ्चला—आनन्दोत्थमिति । यत्र अलकायाम्, वित्तेशानां यक्षाणाम्, नयनसलिलम् अश्रुजलम्, आनन्दादेव उत्थमुत्पन्नम्, अन्यैः शोकादिभिर्निमित्तैर्न । सर्वत्र अस्तीति परेणान्वयः । इष्टसंयोगेन वल्लभजनसङ्गमेन साध्यात् प्रतीकार्य्यात्, कुसुमशरजात् कन्दर्पतो जातात् तापात्, अन्यस्तापो नास्ति । प्रणयकलहात् अन्यस्मात् प्रणयकलहभिन्नात् मरणादिहेतोः, विप्रयोगोपपत्तिः दम्पत्योर्विरहोत्पत्तिर्नास्ति । इदन्तु प्रायिकाभिप्रायेणाभिहितम्, अन्यथा कुवेरशापवियुक्ते आत्मन्येव व्यभिचारः स्यादिति बोध्यम् । यौवनादन्यच्च वयो वार्द्धकं न खल्वस्ति ।

अत्र चतसृणामेव शाब्दीनां परिसंख्यानां मिथो निरपेक्षतया संसृष्टिः, अस्तीत्येकया क्रियया नयनसलिलादीनामप्रस्तुतानां पदार्थानां कर्त्तृतया अभिसम्बन्धात् तुल्ययोगिता च अनयोः पुनरङ्गाङ्गिभावेन सङ्करः । तथा

द्वितीयचरणे 'तापात्' इति पदं न्यूनमिति न्यूनपदत्वदोषः, एवं 'साध्यात्' इत्यनेन 'निष्साध्यात्' इत्यर्थस्य प्रतीतेर्विरुद्धमतिकारिता-दोषश्च। "नान्यस्तापः कुसुमशरजात् वल्लभीतृसाध्यतापात्" इति पाठे तु तयोः समाधानम्। न चैवं पाठे तापशब्दस्य द्विःपाठात् पुनः कथितपदतादोष इति वाच्यम्, तस्य उद्देश्यप्रतिनिर्द्देश्यव्यतिरिक्त-विषयत्वात् ॥४॥

सञ्जीवनी—आनन्दोत्थमिति। यत्र अलकायाम्, वित्तेशानां यक्षाणाम्। "वित्ताधिपः कुवेरः स्यात् प्रभौ धनिकयक्षयोः" इति शब्दार्णवः। आनन्दोत्थम् आनन्दजन्यमेव नयनसलिलम्, अन्यैर्निमित्तैः शोकादिभिर्न। इष्टसंयोगेन प्रियजनसमागमेन साध्यात् निवर्त्तनीयात् न तु अप्रतीकार्य्यादित्यर्थः। कुसुमशरजात् मदनशरजादन्यस्तापो नास्ति। प्रणयकलहादन्यस्मात् कारणात् विप्रयोगोपपत्तिः विरहप्राप्ति-रपि नास्ति। किञ्च यौवनादन्यत् वयो वार्द्धकं नास्ति। श्लोकद्वयं प्रक्षिप्तम् ॥४॥

हिन्दी—जहां यक्षोंके आनन्दसे आंसु गिरती है नीक शोकादिसे। अभि-लषित जनोंसे निवृत्त होता है, ऐसी कामव्यथाजन्य ताप होता है। प्रणयकलहके सिवा अन्यकारणसे विरहप्राप्ति नहीं होती। और यौवनके सिवा अन्य उमर नहीं है ॥४॥

বাঙ্গালা—যে অলকানগরীতে যক্ষদিগের অশ্রুজল আনন্দবশতই উৎপন্ন হইয়া থাকে, কিন্তু অন্য কারণে নহে; যে সন্তাপ পুষ্পবাণ হইতে উৎপন্ন হইয়া প্রিয়জনসঙ্গমে পুনরায় বিনষ্ট হয়, সেই সন্তাপ ভিন্ন অন্য কোন সন্তাপ নাই; প্রণয়কলহ ব্যতীত অন্য কারণে বিরহের উৎপত্তি নাই এবং যৌবন ভিন্ন অন্য বয়স নাই ॥৪॥

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥५॥

अन्वयः—यस्यां यक्षाः उत्तमस्त्रीसहायाः सितमणिमयानि ज्योतिश्छायाकुसुमरचितानि हर्म्म्यस्थलानि एत्य त्वद्गम्भीरध्वनिषु पुष्करेषु शनकैः आहतेषु कल्पवृक्षप्रसूतं रतिफलं मधु आसेवन्ते ॥५॥

चञ्चला—यस्यामिति। यस्यामलकायाम्, यक्षाः, उत्तमाः सौन्दर्य्यादिना उत्कृष्टाः स्त्रियः सहायाः सहचारिण्यो येषां ते तथाभूताः सन्तः, सितमणिमयानि चन्द्रकान्तमणिनिर्म्मितानि स्फटिकनिर्म्मितानि वा, अतएव ज्योतिषां नक्षत्राणां छायाः प्रतिविम्बान्येव कुसुमानि तैः रचितानि सुशोभनीकृतानीत्यर्थः, हर्म्म्यस्थलानि अट्टालिकानामुपरिभागानित्यर्थः, अन्यथा नक्षत्रप्रतिविम्बपतनासम्भव इति द्रष्टव्यम्, एत्य आगत्य, तव इव गम्भीरध्वनिर्येषां तेषु तादृशेषु, पुष्करेषु वाद्यविशेषेषु, शनकैर्मन्दं मन्दम्, आहतेषु ताड़ितेषु वादितेषु सत्सु। एतेन आमोदप्राचुर्य्यं सूचितम्। कल्पवृक्षेण प्रसूतमुत्पादितम्, रतिः सुरतमेव फलं यस्य तत् अतीवमदनोद्दीपकमित्यर्थः, मधु मद्यम्, आसेवन्ते आदरात् पिबन्ति।

अत्र सितमणिमयानीति लोकातिशयसम्पत्तिवर्णनादुदात्तालङ्कारः, ज्योतिश्छायाकुसुमेति निरङ्गं केवलरूपकम्, त्वद्गम्भीरध्वनिष्विति समासगता लुप्तोपमा च, इत्येतेषां मिथो निरपेक्षतया संसृष्टिः ॥५॥

(५) मधु रतिरसं इति पाठान्तरम्।

सञ्जीवनी—यस्यामिति। यस्यामलकायाम्, यक्षा देवयोनिविशेषाः उत्तमस्त्रीसहाया ललिताङ्गनासहचराः सन्तः, सितमणिमयानि स्फटिकमणिमयानि चन्द्रकान्तमयानि वा, अतएव ज्योतिषां तारकाणां छायाः प्रतिबिम्बान्येव कुसुमानि तैः रचितानि परिष्कृतानि। "ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थाध्वरात्मसु" इति वैजयन्ती। एतेन पानभूमेरम्लानशोभत्वमुक्तम्। हर्म्यस्थलानि, एत्य प्राप्य, त्वद्गम्भीरध्वनिरिव ध्वनिर्येषां तेषु पुष्करेषु वाद्यभाण्डमुखेषु। "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले" इत्यमरः। शनकैर्मन्दम्, आहतेषु सत्सु। एतच्च नृत्यगीतयोरप्युपलक्षणम्। कल्पवृक्षप्रसूतं कल्पवृक्षस्य काङ्क्षितार्थप्रदत्वात् मध्वपि तत्र प्रसूतं रतिः फलं यस्य तत् रतिफलाख्यं मधु मद्यम् आसेवन्ते आदृत्य पिबन्तीत्यर्थः। "तालक्षीरसितामृतामलगुडीमुस्ताक्षिकालाम्रयादर्विन्द्रद्रुममोरटेक्षुकदलीगुल्फप्रसूनैर्युतम्। इत्थं स्वेत् मधुपुष्पभङ्ग्युपचितं पुष्पद्रुमूलावृतं क्वाथेन स्मरदीपनं रतिफलाख्यं स्वादु शीतं मधु॥" इति मदिरार्णवः॥५॥

हिन्दी—जहां यक्षगण उत्तम स्त्रियोंसे मिलकर शुभ्रमणिमय (इसी लिये) तारकाओंकी छायारूप फूलोंसे परिष्कृत हर्म्यस्थलोंको प्राप्त होकरके तुम्हारे गम्भीर गर्जनके सदृश ध्वनिवाले वाद्यभाण्ड धीरसे आहत होनेके वदे कल्पवृक्षसे प्रसूत रतिफलवाले मद्यको प्रीतिपूर्वक पीते हैं॥५॥

বাঙ্গালা—যে অলকাপুরীতে যক্ষগণ উৎকৃষ্ট রমণীগণের সহিত সম্মিলিত হইয়া, শুভ্রমণিময় বলিয়া নক্ষত্রসমূহের প্রতিবিম্বস্বরূপ পুষ্পসুশোভিত অট্টালিকার উপরিভাগে আসিয়া, তোমারই ন্যায় গম্ভীর ধ্বনিসম্পন্ন বাদ্য বাদিত হইতে থাকিলে, অত্যন্ত কামোদ্দীপক কল্পবৃক্ষ হইতে সমুৎপন্ন মদ্য আদরের সহিত পান করিয়া থাকে॥৫॥

मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भिः
मन्दाराणामनुतटरुहां छायया वारितोष्णाः।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
संक्रीड़न्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥६॥

अन्वयः—यत्र अमरप्रार्थिताः कन्याः मन्दाकिन्याः सलिलशिशिरैः मरुद्भिः सेव्यमानाः अनुतटरुहां मन्दाराणां छायया वारितोष्णाः कनकसिकतामुष्टिनिक्षेपगूढैः अन्वेष्टव्यैः मणिभिः संक्रीड़न्ते ॥६॥

चञ्चला—मन्देति। यत्र अलकायाम्, अमरैर्देवैरपि प्रार्थिता अतीवसुन्दरत्वाद् याचिता, कन्या यक्षकुमार्य्यः, मन्दाकिन्याः स्वर्ग-गङ्गायाः, सलिलेन सलिलस्पर्शेनेत्यर्थः शिशिरैः शीतलीभूतैः, मरुद्भि-र्वायुभिः, सेव्यमानाः क्रीड़ापरिश्रमापनोदनेन परिचर्य्यमाणाः, तथा तटेषु इत्यनुतटं तस्मिन् रोहन्तीति अनुतटरुहस्तेषां मन्दाकिन्या एव तीरजातानामित्यर्थः, मन्दाराणां तदाख्यदेवतरूणाम्, छायया अना-तपेन, वारित उष्ण आतपो यासां तास्तथाभूताश्च सत्यः, कनकसिकतासु स्वर्णवालुकासु मध्ये मुष्टिभिर्मुष्टीकृतहस्तैः निक्षेपेण पातनेन गूढै-र्वालुकाराशिमध्ये प्रविष्टत्वाद्गुप्तैः, अतएव अन्वेष्टव्यैः अन्यकन्याभि-रन्वेषणीयैः, मणिभिः स्थूलमुक्तादिभिः, संक्रीड़न्ते सम्यक् खेलन्ति। इयं गुप्तमणिनाम्नी दैशिकी खेला।

अत्र खेलाया एवोपकरणानि मणयः स्वर्णवालुकामयश्च तस्या एव स्थानमिति लोकातिशयसम्पत्तिवर्णनादुदात्तालङ्कारः, तथा अन्वेष्टव्यत्वं

(६) पयसि शिशिरैरिति पाठान्तरम्।

प्रति कनकेत्यादिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च, अनयो-रङ्गाङ्गिभावेन सङ्करः ॥६॥

सञ्जीवनी—मन्दाकिन्या इति। यत्र अलकायाम्, अमरैः प्रार्थिताः सुन्दर्य्य इत्यर्थः, कन्या यक्षकुमार्य्यः। "कन्या कुमारिका-नार्य्योः" इति विश्वः। मन्दाकिन्याः गङ्गायाः सलिलेन शिशिरैः शीतलैर्मरुद्भिः सेव्यमानाः सत्यः, तथा अनुतटं तटेषु रोहन्तीति अनुतटरुहः क्विप्। तेषां मन्दाराणां छायया अनातपेन वारितोष्णाः शमितातपाः सत्यः, कनकस्य सिकतासु मुष्टिभिर्निक्षेपेण गूढैः संवृतैः, अतएव अन्वेष्टव्यैर्मृग्यैः मणिभिः रत्नैः संक्रीड़न्ते, गुप्तमणिसंज्ञया दैशिकक्रीड़या सम्यक् क्रीड़न्तीत्यर्थः। "क्रीड़ोऽनुसम्परिभ्यश्च" इत्यात्मनेपदम्। "रत्नादिभिर्बालुकादौ गुप्तैर्द्रष्टव्यकर्म्मभिः। कुमारीभिः कृता क्रीड़ा नाम्ना गुप्तमणिः स्मृता॥ रासक्रीड़ा गूढ़मणिर्गुप्तकेलि-स्तुलायनम्। पिच्छकन्दुकदण्डाद्यैः स्मृता दैशिककेलयः॥" इति शब्दार्णवः ॥६॥

हिन्दी—जहां पर अमरोंसेभी प्रार्थित कन्या मन्दाकिनीके पानीसे ठण्डा वायु सेवन करती हुई तटमें उत्पन्न मन्दारवृक्षोंकी छायासे गरमी निवृत्त करके कनक-बालुकामें मुष्टियों करके जो निक्षेप तिससे गूढ़ (अतएव) तलाशयोग्य मणियोंसे खेलती हैं ॥६॥

বাঙ্গালা—যে অলকানগরীতে দেবগণেরও প্রার্থিত যক্ষকন্যাগণ মন্দাকিনীর জলস্পর্শে সুশীতল বায়ুকর্ত্তৃক সেবিত হইয়া এবং মন্দাকিনীরই তীরজাত মন্দার বৃক্ষের ছায়ায় রৌদ্রতাপ শূন্য হইয়া, স্বর্ণের বালুকার ভিতরে মুষ্টিদ্বারা নিক্ষিপ্ত করায় লুক্কায়িত হয় বলিয়া

नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥७॥

अन्वयः—यत्र अनिभृतकरेषु प्रियेषु नीवीबन्धोच्छ्वसितशिथिलं क्षौमं रागात् आक्षिपत्सु ह्रीमूढानां बिम्बाधराणां चूर्णमुष्टिः अर्चिस्तुङ्गान् रत्नप्रदीपान् अभिमुखं प्राप्य अपि विफलप्रेरणा भवति ॥७॥

चञ्चला—नीवीति । यत्र अलकायाम्, अनिभृताः कामावेशात् चञ्चलाः करा हस्ता येषां तेषु तादृशेषु, प्रियेषु वल्लभजनेषु, नीवीबन्धस्य कटिदेशस्थवस्त्रबन्धनस्य उच्छ्वसितेन स्खलनेन शिथिलम् अदृढलग्नम्, क्षौमं पट्टवस्त्रम्, रागात् कामासक्तिवशात्, आक्षिपत्सु आकृष्य गृह्णत्सु सत्सु, ह्रिया लज्जया मूढानां विह्वलीभूतानाम्, बिम्बानीव अधरा यासां तासां स्त्रीविशेषाणाम्, चूर्णमुष्टिः मुष्टिपरिमितकुङ्कुमादिचूर्णम्, अर्चिभिः किरणैः तुङ्गान् उच्चान् उच्चस्थानस्थितत्वेन प्रतीयमाना-नित्यर्थः, रत्नानि महामणय एव प्रदीपास्तान्, अभिमुखं साम्मुख्येन प्राप्यापि विफलं तत्प्रदीपनिर्वाणाभावात् निष्फलं प्रेरणं निक्षेपो यस्याः सा तादृशी भवति, तत्प्रदीपानामनग्निरूपत्वादिति भावः ।

अत्र चूर्णमुष्टिनिक्षेपरूपकारणे सत्यपि प्रदीपनिर्वाणरूपतत्कार्य्या-भावात् विशेषोक्तिरलङ्कारः, स च बिम्बाधराणामिति लुप्तोपमया सङ्कीर्य्यते । "नीवी एव बन्धो नीवीबन्धः, चूतवृक्षवदपौनरुक्त्यम्" इति

(७) यत्र यत्रास्मानां । वासः कामादनिभृतकरेषु । अभिमुखगतान् प्राप्य । विफलप्रेरिताः, विफलप्रेरणाः इति पाठान्तराणि ।

मल्लिनाथः, अतएव नार्थगतपुनरुक्ततादोषः। "अर्चिस्तुङ्गान्" इत्यनेन विशालतासूचनद्वारा साकल्येन चूर्णमुष्टिप्राप्तिसम्भवसूचनात् न अपुष्टार्थत्वदोषश्च ॥७॥

सञ्जीवनी—नीवीति। यत्र अलकायाम्, अनिभृतकरेषु चपलहस्तेषु प्रियेषु नीवी वसनग्रन्थिः। "नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि" इति विश्वः। नीवी एव बन्धो नीवीबन्धः, चूतवृक्षवदपौनरुक्त्यम्। तस्य उच्छ्वसितेन त्रुटितेन शिथिलं क्षौमं दुकूलं रागात् आक्षिपत्सु आहरत्सु सत्सु क्षीमूढ़ानां लज्जाविधुराणां बिम्बं बिम्बिकाफलम्। "बिम्बं फलं बिम्बिकायाः प्रतिबिम्बे च मण्डले" इति विश्वः। बिम्बमिव अधरो यासां तासां बिम्बाधराणां स्त्रीविशेषाणाम्। "विशेषाः कामिनी कान्ता भीरुर्बिम्बाधराङ्गना" इति शब्दार्णवः। चूर्णस्य कुङ्कुमादेः मुष्टिः, अर्चिर्भिर्मयूखैः तुङ्गान्। "अर्चिर्मयूखशिखयोः" इति विश्वः। रत्नान्येव प्रदीपान् अभिमुखं यथा तथा प्राप्यापि विफलप्रेरणा दीपनिर्वाणाक्षमत्वात् निष्फलक्षेपा भवति। अत्र अङ्गनानां रत्नप्रदीपनिर्वाणप्रवृत्त्या मौग्ध्यं व्यज्यते ॥७॥

हिन्दी—जहां चञ्चल हाथवाले प्रियोंसे कटिबन्ध तोड़नेमें शिथिल रेशमी कपड़ा अनुरागसे खींचते हुये लज्जाविधुर सुन्दरीयोंका सामने जोरसे प्रदीप्त रत्नप्रदीप पांकरभी कुङ्कुमादियोंकी मुष्टि विफल होती है ॥७॥

বাঙ্গালা—যে অলকানগরীতে রমণীগণের কটিদেশের বন্ধন খুলিয়া যাওয়ায় শিথিল ক্ষৌমবসন ধরিয়া নায়কগণ অনুরাগবশতঃ কম্পিতহস্তে আকর্ষণ করিতে লাগিলে, সেই রমণীরা লজ্জায় আকুল হইয়া অভিমুখস্থ কিরণসমূহে সমুন্নত মণিময় প্রদীপের উপরে মুষ্টিপরিমিত কুঙ্কুমাদি চূর্ণ নিক্ষেপ করে; কিন্তু তাহা সেই মণিময় প্রদীপের উপর পড়িয়াও (তাহা নিবাইতে না পারিয়া) নিষ্ফল হইয়া যায় ॥৭॥

नेत्रा नीताः सततगतिना यद्विमानाग्रभूमी-
रालेख्यानां स्वजलकणिकादोषमुत्पाद्य सद्यः।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा जालमार्गै-
र्धूमोद्‌गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥८॥

अन्वयः—नेत्रा सततगतिना यद्विमानाग्रभूमीः नीताः त्वादृशाः जलमुचः आलेख्यानां स्वजलकणिकादोषं उत्पाद्य सद्यः शङ्कास्पृष्टा इव धूमोद्‌गारानुकृतिनिपुणाः जर्जराः जालमार्गैः निष्पतन्ति ॥८॥

चञ्चला—नेत्रेति। नेत्रा सञ्चालकेन, सततगतिना वायुना, यस्या अलकाया विमानानां सप्ततलसौधानाम् अग्रभूमीः उपरितलस्थगृहा-भ्यन्तराणीत्यर्थः, नीताः प्रापिताः, त्वादृशाः जलमुचो मेघाः आलेख्यानां पटेषु चित्रितमूर्त्तीनाम्, स्वजलकणिकाभिः स्वकीयक्षुद्रक्षुद्रजलबिन्दुभिः दोषं प्रोञ्छनादिविकृतभावम्, उत्पाद्य कृत्वा, सद्यस्तत्क्षणादेव शङ्का-स्पृष्टा इव तदापराधेन भयाविष्टा इव, धूमोद्‌गारस्य धूमनिर्गमनस्य अनुकृतौ अनुकरणे निपुणा दक्षाः, जर्जरा जीर्णरूपाश्च सन्तः, जाल-मार्गैः गवाक्षरन्ध्रैः, निष्पतन्ति निर्गच्छन्ति।

अत्र उत्पाद्य सद्य इति व्यञ्जनसङ्घस्य अनेकधा सकृत्साम्यात् छेकानुप्रासः, शङ्कास्पृष्टा इवेति भावाभिमानिनी उक्तनिमित्ता वाच्या क्रियोत्प्रेक्षा, धूमोद्‌गारेत्यादौ च आर्थी समासगता उपमा इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः। ध्वनिस्तु सञ्जीवन्यामेवाभिहितः। तादृश-ध्वनिसम्पादनायैव "नेत्रा" इति विशेषणमिति न अपुष्टार्थत्वदोषः ॥८॥

(८) नवजलकणैः, निजजलकणैः। सजलकणिकादोषम्। त्वादृशो यत्र जालैः निपुणं। इति पाठान्तराणि।

सञ्जीवनी—नेत्रेति। हे मेघ! नेत्रा प्रेरकेण सततगतिना सदागतिना वायुना। "मातरिश्वा सदागतिः" इत्यमरः। यद्विमानाग्रभूमीः यस्या अलकाया विमानानां सप्तभूमिकभवनानाम् अग्रभूमीः उपरिभूमिकाः नीताः प्रापिताः, त्वामिव दृश्यन्त इति त्वादृशाः त्वत्सदृशा इत्यर्थः। "त्यदादिषु दृशोऽनालोचने कञ् च" इति कञ् प्रत्ययः। जलमुचो मेघाः आलेख्यानां सच्चित्राणाम्। "चित्रं लिखितरूपाद्यं स्यादालेख्यन्तु यत्नतः" इति शब्दार्णवः। स्वस्य जलकणिकाभिर्जलकणैः दोषं स्फोटनम् उत्पाद्य सद्यः शङ्कास्पृष्टा इव सापराधत्वात् भयाविष्टा इव। "शङ्का वितर्कभययोः" इति शब्दार्णवः। धूमोद्गारस्य धूमनिर्गमस्य अनुकृतौ अनुकरणे निपुणाः कुशलाः जर्जरा विशीर्णाः सन्तः जालमार्गैः गवाक्षरन्ध्रैः निष्पतन्ति निष्क्रामन्ति। यथा केनचित् अन्तःपुरसञ्चारवता दूतेन गूढवृत्त्या रहस्यभूमिं प्रापिताः तत्र स्त्रीणां व्यभिचारदोषमुत्पाद्य सद्यः साशङ्काः कृप्रवेशान्तरा जाराः क्षुद्रमार्गैः निष्क्रामन्ति तद्वदिति ध्वनिः। प्रकृतार्थे शङ्कास्पृष्टा इवेत्युत्प्रेक्षा॥८॥

हिन्दी—प्रेरक वायुसे जिसकी सप्ततलवाले मकानोंके ऊपर प्राप्त हुये तुम्हारे माफिक मेघ अपने नया पानीसे तमाम तसवीर भिगाकर उसी डरसे वहांमें सम्मिलित धूवा उगारनेकी नकलमें उस्ताद और विशीर्ण होकर जालमार्गसे निकलते है॥८॥

বাঙ্গালা—হে মেঘ! পরিচালক বায়ু, যে অলকার সাততালা বাড়ীর উপরের ঘরের ভিতরে তোমার মত কতকগুলি মেঘকে লইয়া যায়; তাহার পর সেগুলি নিজের জলকণায় চিত্রপটের দোষ জন্মাইয়া, তখনই ভয়াবিষ্ট হইয়াই যেন ধূমনির্গমনের অনুকরণে নিপুণ এবং হীন হইয়া জানালা দিয়া পুনরায় বাহির হইয়া যায়॥৮॥

यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गनाना-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥९॥

अन्वयः—यत्र निशीथे त्वत्संरोधापगमविशदैः चन्द्रपादैः स्फुटजललवस्यन्दिनः तन्तुजालावलम्बाः चन्द्रकान्ताः प्रियतमभुजोच्छ्वासितालिङ्गनानां स्त्रीणां सुरतजनितां अङ्गग्लानिं व्यालुम्पन्ति ॥९॥

चञ्चला—यत्रेति। यत्र अलकायाम्, निशीथे अर्द्धरात्रसमये, तत्रैव प्रायेण सुरतावसानादङ्गग्लानेः पूर्णत्वादिति भावः, त्वत् मेघस्य यः संरोध आवरणं तस्य अपगमेन वायुवशादपसरणेन विशदैर्निर्मलीभूतैः, तथाभूतैरेव चन्द्रकिरणैश्चन्द्रकान्तानां जलस्रावसम्भवादित्याशयः, चन्द्रस्य पादैः किरणैः गवाक्षादिना तिर्य्यग्भावेन गृहाभ्यन्तरगतैरित्यर्थः, स्फुटजललवस्यन्दिनः स्पष्टदृश्यजलविन्दुवर्षिणः, तन्तुजालम् उपरिस्थित-चन्द्रातपचतुष्पार्श्वस्थसूत्रसमूहम् अवलम्बन्ते ग्रथनादाश्रयन्तीति ते तथोक्ताः, चन्द्रकान्तास्तदाख्या मणयः, प्रियतमानां भुजैः उच्छ्वासितानि सुरतश्रमेण निद्रावशात् शिथिलीकृतानि आलिङ्गनानि यासां तासां स्त्रीणाम्, सुरतेन जनिताम् अङ्गानां स्तनोरुप्रभृतीनां ग्लानिं श्रान्तिं व्यालुम्पन्ति विनाशयन्ति, अतीवशीतलत्वादित्यभिप्रायः।

अत्र तन्तुजाले चन्द्रकान्तावलम्बनवर्णनेन लोकातिशयसम्पत्ति-वर्णनादुदात्तालङ्कारः ॥९॥

(९) प्रियतमभुजालिङ्गनोच्छ्वासितानाम्, प्रियतमभुजोच्छ्वासितालिङ्गितानाम्। इति पाठान्तरद्वयम्।

अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै-
रुद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्द्धम्।
वैभ्राजाख्यं विबुधवनितावारमुख्यासहाया
बद्धालापा वहिरुपवनं कामिनो निर्विशन्ति ॥१०॥

सञ्जीवनी—यत्रेति। यत्र अलकायाम्, निशीथे अर्द्धरात्रे। "अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः। त्वत्संरोधस्य मेघावरणस्य अपगमेन विशदैर्निर्म्मलैः चन्द्रपादैश्चन्द्रमरीचिभिः। "पादा रश्म्यङ्घ्रितुर्य्यांशाः" इत्यमरः। स्फुटजललवस्यन्दिन उल्वणाम्बुकणस्राविणः, तन्तुजालाव-लम्बा वितानलम्बिसूत्रपुञ्जाधाराः तद्गुणगुम्फिता इत्यर्थः, चन्द्रकान्ता-श्चन्द्रकान्तमणयः, प्रियतमानां भुजैः उच्छ्वासितानि श्रान्त्या जलसेकाय वा शिथिलितानि आलिङ्गनानि यासां तासां स्त्रीणां सुरतजनिताम् अङ्गग्लानिम् अवयवानां ग्लानतां व्यालुम्पन्ति अपनुदन्ति ॥९॥

हिन्दी—जहां आधी रातमें तुम्हारी अवरोध (मेघावरण) छुट जानेसे निर्म्मल चांदकी किरणोंसे अतीव वारिविन्दु वरसाते हुये सूतियों करके अवलम्बित चन्द्रकान्तमणि, प्रियतमोंकी भुजाओंके आलिङ्गनसे शिथिल हुई औरतोंकी सुरतसे पैदा हुई अङ्गग्लानि दूर करते है ॥९॥

বাঙ্গালা—হে মেঘ! যে অলকানগরীতে রাত্রি দ্বিতীয়প্রহরের সময় তোমার আবরণ দূর হওয়ায় নির্ম্মলীভূত চন্দ্রের কিরণস্পর্শে স্পষ্টজলবিন্দুবর্ষী চন্দ্রাতপের চতুষ্পার্শ্বস্থ সূত্রসমূহে লম্বিত চন্দ্রকান্তমণি-সমূহ, প্রিয়তমদিগের গাঢ় আলিঙ্গন হইতে নির্ম্মুক্ত রমণীগণের রমণজনিত অঙ্গের গ্লানি দূর করিয়া থাকে ॥৯॥

अन्वयः—यत्र अक्षय्यान्तर्भवननिधयः विबुधवनितावारमुख्यासहायाः बद्धालापाः

कामिनः रक्तकण्ठैः धनपतियशः उद्गायद्भिः किन्नरैः सार्द्धं प्रत्यहं वैभ्राजाख्यं बहिः उपवनं निर्विशन्ति ॥१०॥

चञ्चला—अक्षय्येति। यत्र अलकायाम्, अक्षय्या भोगाय प्रचुरतरव्ययेनापि चेतुमशक्याः अन्तर्भवने भवनाभ्यन्तरे निधयो धनभाण्डानि येषां ते। एतेन धनाज्जनदुश्चिन्तापि तेषां नास्तीति सूचितम्। विबुधवनिता देवभोग्याः स्त्रियः अप्सरस एव वारमुख्याः परमसुन्दरत्वात् सर्वादृता वेश्यास्ता एव सहायाः सहचारिण्यो येषां ते। अनेन तेषां भोगस्य पराकाष्ठा द्योतिता। तथा बद्धालापास्ताभिरेव वेश्याभिः सह आरब्धसंलापाः, कामिनः कामुका यक्षाः, रक्ता मधुरतया सर्वेषामनुरागविषयीभूताः कण्ठाः स्वराः तैः, धनपतेः कुवेरस्य यशः, उद्गायद्भिः उच्चैर्गायद्भिः, किन्नरैर्देवयोनिविशेषैः सार्द्धं सह। एतेन सर्वविधामोदसम्पत्तिर्ध्वनिता। प्रत्यहं विभ्राजस्य तदाख्यस्य प्रमथप्रधानस्य इदमिति वैभ्राजं तदेव आख्या यस्य तत्, वहिरुपवनं भवनाद्बहिर्वर्त्ति उद्यानम्, निर्विशन्ति विचरणादिना उपभुञ्जते।

अत्र "रक्तकण्ठैः" इत्यत्र किं मधुरस्वरैः किंवा लोहितवर्णगलदेशैरिति सन्देहात् सन्दिग्धतादोषः; स च 'मुखराढ्यैः' इति पाठेन समाधेयः। तथा बहूनामेव पदानां श्रुतिदुःखावहतया वाक्यगतदुःश्रवत्वदोषश्च। किन्तु लोमनिष्काशनात् कम्बलमिव तत्तत्पदानां निष्काशने श्लोक एव प्रायेण विलुप्येतेति ततो विरतम् ॥१०॥

सञ्जीवनी—अक्षय्येति। यत्र अलकायाम्, क्षेतुं शक्याः क्षय्याः। "क्षय्यजय्यौ शक्यार्थे" इति निपातः, ततो नञ्समासः। भवनानामन्तः अन्तर्भवनम्। "अव्ययं विभक्ति—" इत्यादिना अव्ययीभावः। अक्षय्या अन्तर्भवने निधयो येषां ते तथोक्ताः। यथेष्टभोगसम्भावनार्थमिदं विशेषणम्। विबुधवनिता अप्सरसः ता एव वारमुख्याः वेश्याः ता

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥११॥

एव सहाया येषां ते तथोक्ताः। "वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः। सत्कृता वारमुख्या स्यात्" इत्यमरः। बद्धालापाः सम्भावितसंलापाः, कामिनः कामुकाः प्रत्यहम् अहनि अहनि। "अव्ययं विभक्ति—" इत्यादिना समासः। रक्तो मधुरः कण्ठः कण्ठ-ध्वनिर्येषां ते तैः सुन्दरकण्ठध्वनिभिः, धनपतियशः कुवेरकीर्त्तिम्, उद्गायद्भिः उच्चैर्गायद्भिः, देवगानस्य गान्धारग्रामत्वात् तारतरं गायद्भि-रित्यर्थः, किन्नरैः सार्द्धं सह, विभ्राजस्य इदं वैभ्राजम्, वैभ्राजमिति आख्या यस्य तत् वैभ्राज्याख्यम्। "विभ्राजेन गणेन्द्रेण लातं वैभ्राज-माख्यया" इति शम्भुरहस्ये। चैत्ररथस्य नामान्तरमेतत्। वहिरुपवनं वाह्योद्यानं निर्विशन्ति अनुभवन्ति ॥१०॥

हिन्दी—जहां घरके भितर अघव्ययधनवाले अप्सरारूप वेश्याके सहायता लेनेवाले आलाप करनेवाले कामिओंने हररोज मधुरकण्ठसे कुवेरकीर्त्ति गाते हुये किन्नरोंके साथ वैभ्राज नामक वाह्योद्यान उपभोग करता है ॥१०॥

বাঙ্গালা—যে অলকানগরীতে গৃহমধ্যেই অবস্থিত অক্ষয় ধন-ভাণ্ডারের অধিকারী কামুকগণ বেশ্যাশ্রেষ্ঠ অপ্সরাদিগের সহিত আলাপে প্রবৃত্ত থাকিয়া উচ্চ ও মধুরস্বরে কুবেরের যশোগানকারী কিন্নরগণের সহিত, প্রত্যহ বাহিরের উপবনে উপভোগ করিয়া থাকে ॥১০॥

(११) गत्योत्कम्पात्। क्लृप्तच्छेदैः। कनकनलिनैः। कर्णविस्रंसिभिश्च। मुक्तावग्नैः। स्तनपरिसलैः। इति पाठान्तराणि।

अन्वयः—यत्र गत्युत्कम्पात् अलकपतितैः मन्दारपुष्पैः पत्रच्छेदैः कर्णविभ्रंशिभिः कनककमलैः च मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैः हारैः च कामिनीनां नैशः मार्गः सवितुः उदये सूच्यते ॥११॥

चञ्चला—गत्युत्कम्पादिति । यत्र अलकायाम्, गत्या लोककर्तृक-दर्शनभयेन स्वगृहं प्रति अतिशीघ्रगत्या य उत्कम्पः शरीरस्य तीव्र-कम्पनं तस्मात् हेतोः । अयन्तु सर्वत्राप्यन्वेति । अलकेभ्यः स्खलित-केशप्रान्तेभ्यः पतितैः मन्दारपुष्पैः तदाख्यदेवतरुकुसुमैः, पत्राणां केशोपरि दत्तानां पल्लवदलानां छेदैः खण्डैः पतितैरित्यर्थः, कर्णविभ्रंशिभिः कर्णाभ्यो निपतितैः, कनककमलैः स्वर्णपद्मैश्च, मुक्ताजालैः पतितैरेव मुक्तामयसीमन्तभूषणैः, तथा स्तनयोः परिसरे प्रान्तभागे छिन्नानि कान्तस्य वक्षःसंघर्षेण करमर्द्दनेन वा खण्डितानि सूत्राणि येषां तैस्तादृशैः हारैश्च, कामिनीनाम् अभिसारिकाणां नायिकानाम्, निशाया अयमिति नैशः, मार्गः कान्तभवनगमनपथः, सवितुः सूर्य्यस्य उदये सति, सूच्यते लोकेभ्यो ज्ञाप्यते ।

अत्र नैशमार्गसूचनकार्य्यं प्रति अलकादिभ्यः पतितानां मन्दार-पुष्पादीनां बहूनां कारणानामुक्तत्वात् समुच्चयः; तत्कृतविच्छित्त्या च पतितमन्दारपुष्पादिभिः साधनैः अभिसारिकानैशमार्गस्वरूपसाध्यस्य ज्ञानादनुमानालङ्कारः । तथा अभिसारिकाणामिति कामिनीविशेषे वक्तव्ये कामिनीनामिति कामिनीसामान्याभिधानात् विशेषेऽविशेषाख्य-दोषः, "यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः" इति दर्पणोदा-हृतवत् । स तु "कामिनीनाम्" इत्यत्र "कान्तगानाम्" इति पाठेन समाधेयः ॥११॥

सञ्जीवनी—गत्युत्कम्पादिति । यत्र अलकायाम्, कामिनीना-मभिसारिकाणां निशि भवो नैशः मार्गः सवितुरुदये सति गत्या

मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम्।
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः॥१२॥

गमनेन उत्कम्पश्चलनं तस्मात् हेतोः अलकेभ्यः पतितैः मन्दारपुष्पैः सुरतरुकुसुमैः तथा पत्राणां पत्रलतानां छेदैः खण्डैः पतितैरिति शेषः, तथा कर्णेभ्यो विभ्रश्यन्तीति कर्णविभ्रंशीनि तैः कनकस्य कमलैः। षष्ठ्या विवक्षितार्थलाभे सति मयटा विग्रहे अध्याहारदोषः। एवमन्यत्रा-प्यनुसन्धेयम्। तथा मुक्ताजालैः मौक्तिकसरैः शिरोनिहितैरित्यर्थः, तथा स्तनयोः परिसरः प्रदेशस्तत्र छिन्नानि सूत्राणि येषां तैर्हारैश्च सूच्यते ज्ञाप्यते। मार्गपतितमन्दारकुसुमादिलिङ्गैरयमभिसारिकाणां पन्था इत्यनुमीयत इत्यर्थः॥११॥

हिन्दी—जहां अभिसारिकाओंकी नैश रास्ता सूर्य्योदयमें चलनेसे हुआ जो कम्प तिसमें पतित मन्दारफूलोंकरके, पल्लवदलकी ठुकड़ाओंसे, कर्णसे भ्रष्ट सुवर्णमय कमलोंसे, शिरमें स्थापित मुक्तासमूहसे एवं स्तनोंका प्रदेशविशेषमें छिन्नसूत्र हुआ है जिनके ऐसे हारोंसे सूचित होता है॥११॥

বাঙ্গালা—যে অলকানগরীতে অভিসারিকা নায়িকাগণ নিজগৃহে অতিদ্রুত গমন করিতে থাকায় শরীরের অত্যন্ত কম্পনবশতঃ স্খলিত কেশপ্রান্ত হইতে নিপতিত মন্দার পুষ্প, উপরের কেশ হইতে নিপতিত পল্লবদলখণ্ড, কর্ণ হইতে নিপতিত স্বর্ণপদ্ম, সীমন্ত হইতে পতিত মুক্তাময় অলঙ্কার এবং স্তনপ্রান্তে ছিন্নসূত্র হার—এই সকল পদার্থ, সেই রমণী-

(१२) कामलक्ष्येषु। चटुलवनिताविभ्रमैरेव। इति पाठभेदौ।

গণের রাত্রিতে গমনাগমনের পথ সূর্য্যোদয় হইলে সাধারণকে জানাইয়া থাকে ॥১১॥

**अन्वयः**—यत्र मन्मथः धनपतिसखं देवं साक्षात् वसन्तं मत्वा षट्पदज्यं चापं प्रायः न वहति, सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येषु अमोघैः चतुरवनिताविभ्रमैः एव तस्य आरम्भः सिद्धः (भवति) ॥१२॥

**चञ्चला**—मत्वेति। यत्र अलकायाम्, मन्मथो मदनः, धनपतेः कुवेरस्य सखा इति धनपतिसखस्तम्, देवं महादेवम्, साक्षात् मूर्त्तत्वात् प्रत्यक्षगोचरतया वसन्तं तिष्ठन्तम्, मत्वा ज्ञात्वा, षट्पदा भ्रमरा एव ज्या गुणो यस्य तं तादृशम्, चापं कौसुमं धनुः भयात् पुनरपि दाहभयात् प्रायो बाहुल्येन, न वहति न धारयति; गुप्तभावेन क्वचित्तु वहत्येवेति भावः। अथ तदा कथं तस्य कामिजनविजयव्यापारः सिध्यतीत्याह सभ्रूभङ्गेति। सभ्रूभङ्गं यथा स्यात्तथा प्रहितानि प्रेरितानि नयनानि येषु तैः, कामिनो जना एव लक्ष्याणि तेषु अमोघैरव्यर्थैः चतुरवनितानां कामकलानिपुणरमणीनां विभ्रमैर्विलासैरेव, तस्य मन्मथस्य आरम्भः कामिजनविजयव्यापारः सिद्धो निष्पन्नो भवति।

अत्र साक्षाद्वासं प्रति धनपतिसखपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तथा मन्मथस्य षट्पदस्य चापवहनसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिः, अनयोरङ्गाङ्गिभावेन सङ्करः। "मौर्वीरोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतोः" इति कविसमयप्रसिद्धिवशात् "षट्-पदज्यम्" इत्यभिहितम्; तदेव च कामिजनविजयसाधकमिति नापुष्टार्थत्वदोषः ॥१२॥

**सञ्जीवनी**—मत्वेति। यत्र अलकायाम्, मन्मथः कामः, धनपतेः कुवेरस्य सखा इति धनपतिसखः। "राजाहःसखिभ्यष्टच्।" तम्,

वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान्।
लाक्षारागं चरणकमलन्यासयोग्यञ्च यस्या-
मेकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥१२॥

देवं महादेवं साक्षात् वसन्तं सखित्वहेतोः निजरूपेण वर्त्तमानं मत्वा ज्ञात्वा भयात् भालेक्षणभयात् षट्पदा एव ज्या मौर्वी यस्य तं चापं प्रायः प्राचुर्य्येण न वहति न बिभर्त्ति। कथं तर्हि तस्य कार्य्यसिद्धिरत आह—सभ्रूभङ्गेति। तस्य मन्मथस्य आरम्भः कामिजनविजयव्यापारः सभ्रूभङ्गं प्रहितानि प्रयुक्तानि नयनानि दृष्टयो येषु तैस्तथोक्तैः, कामिन एव लक्ष्याणि तेषु अमोघैः सफलप्रयोगैरित्यर्थः, मन्मथचापोऽपि क्वचिदपि मोघः स्यादिति भावः। चतुराश्च ता वनिताश्च तासां विभ्रमैर्विलासै-रेव सिद्धो निष्पन्नः। यदनर्थकरं पाक्षिकफलञ्च तत्प्रयोगाद्वरं निश्चित-साधनप्रयोग इति भावः ॥१२॥

हिन्दी—जहां काल कुबेरके मन्धु, महादेवोंकी साक्षात् वास करते हुये मान कर डरसे भ्रमररूप मौर्वीवाले धनु चक सर नहीं पकड़ता। (तब किस तौरसे उनका काम चलता है, कहते है) उनका व्यापार भ्रूभङ्गके साथ प्रयुक्त किया नयन जिनने ऐसे औरतों का विलाससे सिद्ध है ; जो कि कामिरूप लक्ष्यमें अव्यर्थ है ॥१२॥

বাঙ্গালা—এস্থানে কুবেরের সখা মহাদেব নিজমূর্ত্তি ধারণ করিয়া বাস করিতেছেন, এইরূপ মনে করিয়া কামদেব ভয়বশতঃ, ভ্রমরগণযুক্ত ধনু প্রায়ই ধারণ করেন না। কিন্তু কামিজনরূপ লক্ষ্যের প্রতি অব্যর্থ

(१२) भूषणानां विशेषान् इति पाठान्तरम्।

এবং ভ্রূভঙ্গীর সহিত প্রযুক্ত দৃষ্টিপাতসমন্বিত কামকলানিপুণ রমণীগণের বিলাসদ্বারাই সেই কামদেবের কার্য্য সিদ্ধ হইয়া থাকে ॥১২॥

अन्वयः—यस्यां एकः कल्पवृक्षः चित्रं वासः नयनयोः विभ्रमादेशदक्षं मधु किसलयैः सह पुष्पोद्भेदं भूषणानां विकल्पान् चरणकमलन्यासयोग्यं लाक्षारागं च सकलं अबलामण्डनं सूते ॥१३॥

चञ्चला—वास इति। यस्यामलकायाम्, एक एव कल्पवृक्षः, चित्रं विचित्रम्, वासो वस्त्रम्, नयनयोर्विभ्रमादेशे कटाक्षादिविलासशिक्षायां दक्षं निपुणम्, मधु मद्यम्। मण्डनं नाम सौन्दर्य्यजनकं वस्तु; तेन मद्यस्यापि नयनविभ्रमजनकत्वेन सौन्दर्य्यजनकत्वात् मण्डनत्वमित्युन्नेयम्। किसलयैः पल्लवैः सह पुष्पाणामुद्भेदं प्रकाशं केशधारणीयं पुष्पं पल्लवश्चेत्यर्थः, भूषणानां हारकेयूरादीनामलङ्कारा-णाम्, विकल्पान् नानाविधत्वानि नानाविधानलङ्कारानित्यर्थः, तथा चरणकमलयोः न्यासयोग्यं समर्पणोचितं लाक्षारागमलक्तकञ्च, इत्येतत् सकलं सर्वप्रकारम्, अबलानां स्त्रीणां मण्डनमलङ्कारम्, सूते उत्-पादयति।

अत्र अलकावर्णनाङ्गत्वेन प्रस्तुतानां वासःप्रभृतीनां बहूनाम् एकया सूत इति क्रियया कर्म्मतया अभिसम्बन्धात् तुल्ययोगितालङ्कारः, "अनु-लेपनानि कुसुमान्यबलाः" इत्यादिदर्पणोदाहृतवत्, निष्फलतया कमले लाक्षारागन्यासस्यासम्भवेन लाक्षारागमित्यस्यैव उपमायाः साधकत्वात् रूपकस्य च बाधकत्वात् चरणकमलेति समासगता लुप्तोपमा च अनयो-रङ्गाङ्गिभावेन सङ्करः। तथा वास इत्यादिकमेकवचनान्ततया प्रक्रम्य "विकल्पान्" इति बहुवचनान्ताभिधानात् भग्नप्रक्रमतादोषः; स तु 'विकल्पम्' इत्येकवचनान्तपाठेनैव समाधेयः ॥१३॥

सञ्जीवनी—"कचधार्य्यं देहधार्य्यं परिधेयं विलेपनम्। चतुर्धा

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन।
यस्योपान्ते कृतकतनयः कान्तया वर्द्धितो मे
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः ॥१४॥

भूषणं प्राहुः स्त्रीणामन्यच्च दैशिकम् ॥" इति रत्नाकरे। तदेतदाह— वास इति। यस्यामलकायाम्, चित्रं नानावर्णं वासो वसनम्। परिधेय-मण्डनमेतत्। नयनयोर्विभ्रमाणामादेशे उपदेशे दक्षम्। अनेन विभ्रमद्वारा मधुनो मण्डनत्वमनुसन्धेयम्, तच्च मण्डनादिवत् देहधार्य्येऽन्त-र्भाव्यम्। मधु मद्यम्। किसलयैः पल्लवैः सह पुष्पोद्भेदम् उभयञ्चेत्यर्थः। इदन्तु कचधार्य्यम्। भूषणानां विकल्पान् विशेषान्। देहधार्य्यमेतत्। तथा चरणकमलयोः न्यासस्य समर्पणस्य योग्यम्, रज्यतेऽनेनेति रागो रञ्जकद्रव्यम्, लाक्षैव रागस्तं लाक्षारागञ्च। इदञ्च अङ्गरागादिविलेपन-मण्डनोपलक्षणार्थम्। सकलं सर्वं चतुर्विधमपीत्यर्थः, अबलामण्डनं योषित्प्रसाधनजातम्, एकः कल्पवृक्ष एव सूते जनयति, न तु नाना-साधनसम्पादनप्रयास इत्यर्थः ॥१३॥

हिन्दी—जहां नानावर्णवाली कपड़ाकी, नयनयुगलमें विलास के उपदेशमें दक्ष मद्यकी पल्लवके साथ पुष्पोद्भेदकी नानाविध गहनाओं की और चरणकमलों में देने योग्य लाक्षारागकी—ईदृश स्त्रियोंका सकल भूषण एकही कल्पवृक्ष सृष्टि करता है ॥१३॥

বাঙ্গালা—যে অলকাতে বিচিত্র বস্ত্র, নয়নযুগলের বিলাসশিক্ষাদানে নিপুণ মদ্য পল্লবের সহিত পুষ্পোদ্গম, নানাবিধ অলঙ্কার এবং চরণকমলে

(১৪) धनपतिगृहात्। यस्योद्याने। इति पाठान्तरद्वयम्।

লেপন করিবার যোগ্য অলক্তক ইত্যাদি রমণীগণের সকল অলঙ্কারই এক কল্পবৃক্ষই উৎপাদন করিয়া থাকে ॥১৩॥

**अन्वयः**—तत्र धनपतिगृहात् उत्तरेण अस्मदीयं आगारं सुरपतिधनुश्चारुणा तोरणेन दूरात् लक्ष्यं, यस्य उपान्ते मे कान्तया वर्द्धितः कृतकतनयः हस्तप्राप्यस्तवकनमितः बालमन्दारवृक्षः ( वर्त्तते ) ॥१४॥

**चञ्चला**—तत्रेति। तत्र अलकायाम्, धनपतिगृहात् उत्तरेण कुवेरगृहेभ्यः अदूरे उत्तरस्मिन् देशे, अस्मदीयम् आगारं गृहम्, सुरपतेरिन्द्रस्य धनुस्तद्वत् चारु सुन्दरं तेन तोरणेन वहिर्द्वारेण, दूरादेव लक्ष्यं परिचेयम्। विशेषतश्चाह—यस्येति। यस्य अस्मदीयगृहस्य, उपान्ते द्वारसमीपदेशे, मे मम, कान्तया प्रियतमया, वर्द्धितो जलसेकादिना पोषितः, कृतकतनयः कृत्रिमपुत्रः पुत्रत्वेन मन्यमान इत्यर्थः, तथा हस्तप्राप्यैः भूतलस्थस्यैव जनस्य हस्तेन धर्त्तुं शक्यैः स्तवकैः पुष्पगुच्छैः नमितः अवनतीकृतः अनुच्च इति तात्पर्य्यम्, बालमन्दारवृक्षः अल्पदिनसञ्जातः कल्पवृक्षो वर्त्तत इति शेषः।

अत्र सुरपतिधनुश्चारुणेति समासगता लुप्तोपमालङ्कारः, चारुणा तोरणेनेति रणयोरनेकधा सकृत्साम्यात् छेकानुप्रासश्च, अनयोरेकपादरूपैकाश्रयानुप्रवेशरूपः सङ्करः, स्थानान्तरीयानुप्रासेन तु तस्यापि पुनः संसृष्टिः। न च उत्तरार्द्धे वर्त्तत इत्ट्क्रियाया अनुक्ततया न्यूनपदत्वदोष इति वाच्यम्, अनुक्तानामपि अस्ति भवति वर्त्तत इत्यादि क्रियाणामनायासेनैव प्रतीत्या रसापकर्षकत्वाभावात् वामनेन तथैव सिद्धान्तितत्वाच्च ॥१४॥

**सञ्जीवनी**—इत्थमलकां वर्णयित्वा तत्र स्वभवनस्य अभिज्ञानमाह—तत्रेति। तत्र अलकायाम्, धनपतिगृहात् कुवेरगृहात् उत्तरेण उत्तरस्मिन्नदूरदेशे। "एनवन्यतरस्यामदूरेऽपञ्चम्याः" इत्येनप् प्रत्ययः।

वापी चास्मिन् मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्य्यनालैः।
यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥१५॥

"एनपा द्वितीया" इति द्वितीया। "गृहाः पुंसि च भूम्न्येव" इत्यमरः। अथवा "उत्तरेण" इति नैनप्प्रत्ययान्तम्, किन्तु "तोरणेन" इत्यस्य विशेषणं तृतीयान्तम्। "धनपतिगृहात्" इति च पञ्चम्यन्तं पाठ्यम्। धनपतिगृहादुत्तरस्यां दिशि यत् तोरणं बहिर्द्वारं तेन लक्षितमित्यर्थः। अस्माकमिदमस्मदीयम्। "वृद्धाच्छः" इति छप्रत्ययः। आगारं गृहं सुरपतिधनुश्चारुणा मणिमयत्वादभङ्गुरत्वाच्च इन्द्रचाप-सुन्दरेण तोरणेन बहिर्द्वारेण दूरात् लक्ष्यं दृश्यम्, आननाभिज्ञानेन दूरत एव ज्ञातुं शक्यमित्यर्थः। अभिज्ञानानन्तरमाह—यस्य आगारस्य उपान्ते प्राकारान्तःपार्श्वदेशे मे मम कान्तया वर्द्धितः पोषितः कृतकतनयः कृत्रिमसुतः पुत्रत्वेनाभिमन्यमान इत्यर्थः, हस्तप्राप्यैः हस्तावचेयैः स्तवकैर्गुच्छैः नमितः। "स्याद्गुच्छकस्तु स्तवकः" इत्यमरः। बालो मन्दारवृक्षः कल्पवृक्षः अस्तीति शेषः ॥१४॥

**हिन्दी**—जहां कुवेरके मकानसे उत्तरदिशामें मेरा घर है जिसको इन्द्रधनुके माफिक मनोहर तोरणसे दूरसेभी मालूम होता है। जिसका पार्श्वदेशमें मेरी औरतसे पुष्ट पुत्रसदृश हाथसे प्राप्य पुष्पगुच्छोंसे नीचा हुआवाले मन्दार पेड़है ॥१४॥

**বাঙ্গালা**—সেই অলকায় কুবেরের বাড়ীর উত্তরদিকে আমাদের বাড়ী, তাহা ইন্দ্রধনুর ন্যায় সুন্দর তোরণদ্বারা দূর হইতেই চিনিতে

(१५) कमलमुकुलैः। न ध्यास्यन्ति। इति पाठान्तरद्वयम्।

পারা যায়। যাহার দুয়ারে একটী ছোট মন্দারবৃক্ষ আছে, আমার প্রিয়তমা সেটীকে পুত্র মনে করিয়া বর্দ্ধিত করিয়াছেন, উহার পুষ্পগুচ্ছ হাতেই পাওয়া যায় এবং তাহার ভারই এই গাছটীকে অবনত করিয়াছে ॥১৪॥

অন্বয়:—অস্মিন্ মরকতশিলাবদ্ধসোপানমার্গা স্নিগ্ধবৈদূর্য্যনালৈ: হৈমৈ: বিকাচকমলৈ: ছন্না বাপী চ (বর্ত্ততে,) যস্যা: তোয়ে কৃতবসতয়: হংসা: ত্বাং প্রেক্ষ্য অপি ব্যপগতশুচ: সন্নিকৃষ্টং মানসং ন আধ্যাস্যন্তি ॥১৫॥

বল্লভা—অন্যান্যপি স্বভবনচিহ্নান্যাহ—বাপীতি। কিঞ্চেতি চার্থ:। অস্মিন্ অস্মদীয়ে আগারে, মরকতশিলাভির্নীলবর্ণমণিবিশেষৈ: বদ্ধো নির্ম্মিত: সোপানমার্গ: সোপানময: অবতরণপথো যস্যা: সা তথোক্তা, তথা স্নিগ্ধানি চিক্কণানি বৈদূর্য্যাণি বৈদূর্য্যমণিময়ানি নালানি যেষাং তৈস্তাদৃশৈ:, হৈমৈ: সুবর্ণময়ৈ:, বিকচকমলৈ: প্রস্ফুটিতপদ্মৈ:, ছন্না প্রায়েণাবৃতা, বাপী সরোবর:, বর্ত্তত ইতি শেষ:। যস্যা বাপ্যাস্তোয়ে জলে কৃতবসতয়: কৃতাবস্থানা:, হংসা:, ত্বাং মেঘং প্রেক্ষ্য দৃষ্ট্বাপি বর্ষাকালেঽপীত্যর্থ:, ব্যপগতশুচো নির্ম্মলজলত্বাৎ বিগতদু:খা: সন্ত:, সন্নিকৃষ্টং সন্নিহিতমপি মানসং তদাখ্যং সরোবরম্, ন আধ্যাস্যন্তি উৎকণ্ঠয়া ন স্মরিষ্যন্তি।

অত্র স্মরণাভাবং প্রতি ব্যপগতশুচ ইতি পদস্যার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গম্, তথা উত্তরার্দ্ধেন উপমানভূতমানসসরোবরাপেক্ষয়া উপমেয়ভূতবর্ণনীয়সরোবরস্য প্রাধান্যপ্রতিপাদনাৎ ব্যতিরেক:, লোকাতিশয়সম্পত্তিবর্ণনাদুদাত্তশ্চ, ইত্যেতেষামঙ্গাঙ্গিভাবেন সঙ্কর:। তত্র "প্রেক্ষ্য" ইত্যত: পরং স্থিতিযোগ্যস্য অপিশব্দস্য অন্যত্রাবস্থানাৎ অক্রমতাদোষ:, স তু 'ত্বাং বিলোক্যাপি হংসা:' ইতি পাঠেন সমাধেয়: ॥১৫॥

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीड़ाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्याः प्रिय इति सखे ! चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततड़ितं त्वां तमेव स्मरामि ॥१६॥

सञ्जीवनी—इतश्चतुर्भिः श्लोकैरभिज्ञानानन्तरमाह—वापीति । अस्मिन् मदीयागारे, मरकतशिलाभिर्बद्धः सोपानमार्गो यस्याः सा तथोक्ता, विदूरे भवा वैदूर्य्याः । "विदूराञ् ञ्यः" इति ञ्यप्रत्ययः । वैदूर्य्याणां विकारा वैदूर्य्याणि विकारार्थे अण्प्रत्ययः । स्निग्धानि वैदूर्य्याणि नालानि येषां तैः, हैमैः सौवर्णैः विकचकमलैः छन्ना वापी च अस्तीति शेषः । यस्या वाप्यास्तोये कृतवसतयः कृतनिवासा हंसाः, त्वां मेघं प्रेक्ष्यापि व्यपगतशुचः वर्षाकालेऽपि व्यपगत-कलुषजलत्वात् वीतदुःखाः सन्तः, सन्निकृष्टं सन्निहितं सुगममपीत्यर्थः, मानसं मानससरः नाध्यास्यन्ति नोत्कण्ठया स्मरिष्यन्ति । "आध्यान-मुत्कण्ठापूर्वकं स्मरणम्" इति काशिकायाम् ॥१५॥

हिन्दी—मेरे घरमें मरकतशिलाओंसे बांधी हुजी सीढ़ी और स्निग्ध वैदूर्य्य-मणिके नालवाले सुवर्णमय और प्रस्फुटित कमलोंसे व्याप्त एक पुष्करिणी है ; जिसके पानीमें रहनेवाले दुःखशून्य हंस तुमको देखकरभी थोड़ीसा दूरमें वर्त्तमान मानस-सरोवरको नहीं स्मरण करेंगे ॥१५॥

বাঙ্গালা—হে মেঘ! আমাদের সেই বাড়ীতে একটী দীঘী আছে, তাহাতে নামিবার সিঁড়িগুলি মরকতমণি দিয়া তৈয়ারী করা এবং তাহার জল স্বর্ণময় পদ্মে আচ্ছন্ন, সেই পদ্মসমূহের নালগুলি আবার

(१६) यस्यास्तीरे । निचितशिखरः । कनककदलीवेष्टनः । इति पाठान्तराणि ।

চকমকে বৈদূর্য্যমণি দিয়া তৈয়ারী করা। হংসগণ সে দীর্ঘীর জলে বাস করিয়া, তোমাকে দেখিয়াও শোকবিহীন হইয়া, নিকটবর্ত্তী মানস-সরোবরকেও স্মরণ করিবে না ॥১৫॥

अन्वयः—तस्याः तीरे पेशलैः इन्द्रनीलैः रचितशिखरः कनककदलीवेष्टन-प्रेक्षणीयः क्रीड़ाशैलः (अस्ति), (हे) सखे! उपान्तस्फुरिततड़ितं त्वां प्रेक्ष्य मद्गेहिन्याः प्रियः इति कातरेण चेतसा तं एव स्मरामि ॥१६॥

चञ्चला—तस्या इति। तस्या वाप्यास्तीरे, पेशलैर्मनोहरैः, इन्द्रनीलैस्तदाख्यैर्नीलमणिविशेषैः, रचितशिखरो निर्म्मितशृङ्गः, कनक-कदलीनां स्वर्णनिर्म्मितकदलीतरूणां वेष्टनेन प्रेक्षणीयो दर्शनीयः परमसुन्दर इत्यर्थः, क्रीड़ाशैलः कश्चित् विहारपर्वतोऽस्तीति शेषः। हे सखे! मेघ! उपान्तेषु स्वप्रान्तभागेषु स्फुरिताः प्रकाशितास्तड़ितो विद्युतो यस्य तं तथोक्तं त्वां प्रेक्ष्य दृष्ट्वा, मम गेहिन्या गृहिण्याः प्रियतमायाः, प्रियः स क्रीड़ाशैलः प्रीतिकर इति हेतोः, कातरेण विरहविकलेन चेतसा, तं क्रीड़ाशैलमेव, स्मरामि उभयोरेव समान-रूपत्वादिति भावः।

अत्र त्वं सजलतया नीलवर्णः, क्रीड़ाशैलोऽपि इन्द्रनीलरचित-शिखरतया नीलवर्णः, तव प्रान्ते तड़ितः स्फुरिताः क्रीड़ाशैलस्यापि प्रान्ते स्वर्णकदलीवेष्टनानि, त्वं स चापि गेहिन्याः प्रिय इति भावः। अतएवात्र स्मरणमलङ्कारः, पूर्ववदुदात्तस्मानयोरङ्गाङ्गिभावेन सङ्करः ॥१६॥

सञ्जीवनी—तस्या इति। तस्या वाप्यास्तीरे पेशलैश्चारुभिः। "चारौ दक्षे च पेशलः" इत्यमरः। इन्द्रनीलैः रचितशिखर इन्द्रनीलमणि-मयशिखर इत्यर्थः, कनककदलीनां वेष्टनेन परिधिना प्रेक्षणीयो दर्शनीयः क्रीड़ाशैलोऽस्तीति शेषः। हे सखे! उपान्तेषु प्रान्तेषु

स्फुरितास्तड़ितो यस्य तं तथोक्तम्। इदं विशेषणं कदलीसाम्यार्थमुक्तम्। इन्द्रनीलसाम्यन्तु मेघस्य स्वाभाविकमित्यनेन सूच्यते। त्वां प्रेक्ष्य मद्गेहिन्याः प्रिय इति हेतोः तस्य शैलस्य मद्गृहिणीप्रियत्वाद्धेतोरित्यर्थः, कातरेण भीतेन चेतसा। भयस्थाने सानन्दमेव, "वस्तूनामनुभूतानां तुल्यश्रवणदर्शनात्। श्रवणात् कीर्त्तनाद्वापि सानन्दाभीर्यथा भवेत्॥" इति रसाकरे दर्शनात्। तमेव क्रीड़ाशैलमेव स्मरामि। एवकारो विषयान्तरव्यवच्छेदार्थः। सदृशवस्त्वनुभवात् दृष्टार्थस्मृतिर्जायत इत्यर्थः। अतएवात्र स्मरणाख्योऽलङ्कारः। तदुक्तम्—"सदृशानुभवादन्यस्मृतिः स्मरणमुच्यते" इति। निरुक्तकारस्तु "त्वां तमेव स्मरामि" इति योजयित्वा मेघे शैलत्वारोपमाचष्टे, तदसङ्गतम्, अद्राकारारोपस्य पुरोवर्त्तिन्यनुभवात्मकत्वेन स्मरतिशब्दःप्रयोगायोगात्। शैलत्वभावना स्मृतिरित्यपि नोपपद्यते, भावनायाः स्मृतित्वे प्रमाणाभावात् अनुभवायोगात् सादृश्योपन्यासस्य वैयर्थ्याच्च विसदृशेऽपि शालग्रामे हरिभावनादर्शनादिति ॥१६॥

**हिन्दी**—वह वापीकि किनारपर मनोहर इन्द्रनीलोंसे बना हुआ शिखर जिनका, ऐसा स्वर्णकदलियोंका परिधिसे मनोहर एक क्रीड़ाशैल है। हे सखे! प्रान्तदेशमें विद्युत् स्फुरित होती है जिनका, ऐसे तुमको देखकर, मेरी भौरतका प्रिय इसवास्ते आनन्दितचित्तसे वह क्रीड़ाशैलको स्मरण करता हूं ॥१६॥

**বাঙ্গালা**—সেই দীঘীর পারে একটী খেলার পাহাড় আছে, তাহার শৃঙ্গগুলি সুন্দর ইন্দ্রনীলমণি দিয়া তৈয়ারী করা এবং চারিধারে সোণার কলাগাছের বেড়া থাকায় তাহা বড়ই সুন্দর দেখায়। আর তুমি এবং সেই পাহাড়টী—উভয়ই আমার গিন্নীর বড়ই প্রীতিকর; এদিকে আবার তোমার চারিদিকে বিদ্যুৎ চমকিতেছে, তাই তোমাকে দেখিয়া বিরহকাতরচিত্তে সেই পাহাড়টীকেও স্মরণ করিতেছি ॥১৬॥

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥१७॥

---

अन्वयः—अत्र कुरवकवृतेः माधवीमण्डपस्य प्रत्यासन्नौ चलकिसलयः रक्ताशोकः कान्तः केसरश्च (वर्त्तेते), एकः दोहदच्छद्मना मया सह तव सख्याः वामपादाभिलाषी अन्यः अस्याः वदनमदिरां काङ्क्षति ॥१७॥

चञ्चला—रक्तेति। अत्र प्रागुक्ते क्रीड़ाशैले, कुरवका एव वृतिर्वेष्टनं यस्य तस्य, माधवीमण्डपस्य माधवीलतागृहस्य, प्रत्यासन्नौ निकटवर्त्तिनौ, चलकिसलयश्चञ्चलपल्लवः, रक्ताशोको वृक्षः, कान्तो मनोहरः, केसरो वकुलो वृक्षश्च, वर्त्तेते इति शेषः। एकस्तयोर्मध्ये प्राथमिको रक्ताशोकः, दोहदं पुष्पादिजनकं संस्कारद्रव्यं तस्य छद्मना व्याजेन, मया सह विद्यमानायास्तव सख्या मत्प्रियाया इत्यर्थः, वामपादाभिलाषी वामपादप्रहाराकाङ्क्षी; अन्यः केसरस्तु, दोहदच्छद्मना, अस्या मया सहैव तव सख्याः, वदनमदिरां मुखमद्यम्, काङ्क्षति इच्छति। "पादाघाताद‌शोकं विकसति वकुलं योषितामास्यमद्यैः" इति कविसमयप्रसिद्धिवशादियमुक्तिः।

अत्र स्वभवनवर्णनाङ्गत्वेन प्रस्तुतयोरेव रक्ताशोककेसरयोरेकया प्रत्यासन्नाविति क्रियया अभिसम्बन्धात्तुल्ययोगितालङ्कारः। "पदार्थानां प्रस्तुतानाम्" इत्यादि साहित्यदर्पणीयतुल्ययोगितालक्षणे बहुवचनस्य अविवक्षितत्वमिति तदीयटीकायामस्माभिः प्रदर्शितम्। तथा "वाम-

---

(१७) केसरश्चात्र। प्रत्यासन्नः। इति पाठभेदौ।

पादाभिलाषी" "काङ्क्षति" इति प्रकृतिप्रत्यययोभयविषय एव भग्न-प्रक्रमतादोषः, स च "वामपादप्रहारम्" इति पाठेन समाधेयः ॥१७॥

सञ्जीवनी—रक्तेति। अत्र क्रीड़ाशैले, कुरवका एव वृति-रावरणं यस्य तस्य, मधौ वसन्ते भवा माधव्यः तासां मण्डपस्तस्य अतिमुक्तलतागृहस्य। "अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलता" इत्यमरः। प्रत्यासन्नौ सन्निकृष्टौ, चलकिसलयश्चञ्चलपल्लवः। अनेन वृक्षस्य पादताड़नेषु प्राञ्जलित्वं व्यज्यते। रक्ताशोकः रक्तविशेषणं तस्य स्मरोद्दीपकत्वादुक्तम्—"प्रसूनकैरशोकस्तु श्वेतो रक्त इति द्विधा। बहुसिद्धिकरः श्वेतो रक्तोऽत्र स्मरवर्द्धनः॥" इत्यशोककल्पे दर्शनात्। कान्तः कमनीयः केसरो वकुलश्च। "अथ केसरे वकुलो वञ्जुलः" इत्यमरः। स्त इति शेषः। एकस्तयोरन्यतरः प्राथमिकत्वादशोक इत्यर्थः, मया सह तव सख्याः स्वप्रियाया इत्यर्थः, वामपादाभिलाषी दोहदच्छद्मनेति अत्रापि सम्बन्धनीयम्। स च अहञ्च अभिलाषिणा-वित्यर्थः। अन्यः केसरः, दोहदं वृक्षादीनां प्रसवकारणं संस्कार-द्रव्यम्। "तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया॥" इति शब्दार्णवः। तस्य छद्मना व्याजेन। "कपटोऽस्त्री व्याजदम्भोपधयश्छद्म कैतवे" इत्यमरः। अस्यास्तव सख्या वदनमदिरां गण्डूषमद्यं काङ्क्षति। मया सहेति अत्रापि सम्बन्धनीयम्। अशोकवकुलयोः स्त्रीपादताड़न-गण्डूषमदिरे दोहदमिति प्रसिद्धिः। "स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति वकुलः सीधुगण्डूषसेकात्, पादाघातादशोकस्तिलककुरवकौ वीक्षणा-लिङ्गनाभ्याम्। मन्दारो नर्म्मवाक्यात् पटुमृदुहसनाच्चम्पको वक्त्रवाता-च्चूतोगीतान्नमेरुर्विकसति च पुरो नर्त्तनात् कर्णिकारः॥" ॥१७॥

हिन्दी—इसमें कुरवकरूप हैं जिनका, ऐसे माधवीमण्डपके नजदीक चञ्चल-

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टिः
मूले बद्धा मणिभिरनतिप्रौढ़वंशप्रकाशैः ।
तालैः शिञ्जावलयसुभगैर्नर्त्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥१८॥

पल्लव रक्ताशोक और बकुल है। पहिला मेरे साथ तुम्हारे सखीका वाम पाद चाहता है; दूसरा पुष्पोत्पादक द्रव्यके छलसे मेरी औरतकी वदनमदिरा चाहता है ॥१७॥

বাঙ্গালা—সেই ক্রীড়াপর্ব্বতে কুরবকবেষ্টিত মাধবীলতাগৃহের নিকটে চঞ্চলপল্লব একটী রক্তাশোক এবং সুন্দর একটী বকুল—এই দুইটী বৃক্ষ রহিয়াছে। তাহাদের মধ্যে একটী ( রক্তাশোক ) আমার সহিত তোমার সখীর বামচরণের প্রহার প্রার্থনা করে, আর অন্যটী ( বকুল ) পুষ্পোৎপাদকদ্রব্যচ্ছলে মুখের মদ্য ইচ্ছা করে ॥১৭॥

अन्वयः—तन्मध्ये च स्फटिकफलका अनतिप्रौढ़वंशप्रकाशैः मणिभिः मूले बद्धा काञ्चनी वासयष्टिः ( वर्त्तते ), दिवसविगमे मे कान्तया शिञ्जावलयसुभगैः तालैः नर्त्तितः वः सुहृत् नीलकण्ठः यां अध्यास्ते ॥१८॥

चञ्चला—तदिति। किञ्च, तयोरक्ताशोककेसरयोर्मध्ये, स्फटिकं स्फटिकनिर्म्मितं फलकम् उपरिभागे मयूरवासोपयोगि पीठं यस्याः सा, तथा अनतिप्रौढ़ानां पाकेन अनधिककठिनीभूतानां वंशानां प्रकाश इव प्रकाशो दीप्तिर्येषां तैस्तथोक्तैः, मणिभिर्मरकतैरित्यर्थः, मूले बद्धा बद्धमूलदेशेत्यर्थः, काञ्चनी सुवर्णमयी, काचित् वासयष्टिर्वर्त्तत इति शेषः। दिवसविगमे दिवावसाने, मे मम, कान्तया प्रियतमया,

(१८) तत्तन्मध्ये। मूले नद्धा। शिञ्जवलयसुभगैः। सिञ्जवलयसुभगैः कान्तया कर्त्तितो मे। इति पाठान्तराणि।

शिञ्जा भूषणशब्दः तत्प्रधानानि वलयानि करभूषणविशेषास्तैः सुभगैः सुन्दरैः, तालैः करतालीभिः, नर्त्तितो नृत्यं कारितः, वो युष्माकं मेघानां सुहृद्बन्धुः, नीलकण्ठो मयूरः, यां वासयष्टिम्, अध्यास्ते अधितिष्ठति।

अत्रापि पूर्ववदुदात्तालङ्कारः, अनतीत्यादौ समासगता लुप्तोपमा च, अनयोरङ्गाङ्गिभावेन सङ्करः। अस्यानुरूपः श्लोको यथा उत्तररामचरिते— "भ्रमिषु कृतपुटान्तर्मण्डलावृत्ति चक्षुः" इत्यादिः ॥१८॥

सञ्जीवनी—तन्मध्य इति। किञ्चेति चार्थः, तन्मध्ये तयोर्वृक्षयोर्मध्ये, अनतिप्रौढानामनतिकठोराणां वंशानां प्रकाश इव प्रकाशो येषां तैः तरुणवेणुसच्छायैः मणिभिर्मरकतशिलाभिः मूले बद्धा कृतवेदिकेत्यर्थः। स्फटिकं स्फटिकमयं फलकं पीठं यस्याः सा काञ्चनस्य विकारः काञ्चनी सौवर्णी वासयष्टिर्निवासदण्डोऽस्तीति शेषः। शिञ्जा भूषणध्वनिः। "भूषणानान्तु शिञ्जितम्" इत्यमरः। भिदादित्वादङ्। शिञ्जिधातुरयं तालव्यादिर्न तु दन्त्यादिः। शिञ्जाप्रधानानि वलयानि तैः सुभगा रम्यास्तैः तालैः करतलवादनैः, मे मम कान्तया नर्त्तितः वो युष्माकं सुहृत् सखा नीलकण्ठो मयूरः। "मयूरो बर्हिणो बर्हौ नीलकण्ठो भुजङ्गभुक्" इत्यमरः। दिवसविगमे सायंकाले यां यष्टिकामध्यास्ते यष्ट्यामास्ते इत्यर्थः। "अधिशीङ्स्थासां कर्म्म" इति कर्म्मत्वात् द्वितीया। तत्रागारमित्यारभ्य पञ्चसु श्लोकेषु समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः। तदुक्तम्—"तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते" इति। न चैषा स्वभावोक्तिर्भाविकं वा, तत्र यथास्थितवस्तुवर्णनात्, अत्र तु कविप्रतिभोत्थापितसम्भाव्यमानैश्वर्य्यशालिवस्तुवर्णनादारोपितविषयत्वमिति ताभ्यामस्य भेद इत्यलङ्कारसर्वस्वकारः ॥१८॥

हिन्दी—वह दोनों वृक्षोंके मध्यदेशमें उपरिभागमें जिसका स्फटिकका पठौ

एभिः साधो ! हृदयनिहितैर्लक्षणैर्लक्षयेथा
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्य्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥१९॥

है और ईषत्कठोर वंशके सदृश प्रकाशशील मणियों करके बनी हुयी वेदिकावाली सुवर्णमयी वासयष्टि है। हाथकी चूड़ियोंकी आवाज करनेवाली करतालीसे मेरी औरत नचातीथी जिनका, सो तुम्हारा मित्र मयूर शामकेरारे उनकी उपर बैठता है ॥१८॥

বাঙ্গালা—সেই অশোক ও বকুলবৃক্ষের মধ্যস্থানে স্বর্ণনির্ম্মিত একটী বাসযষ্টি আছে, তাহার উপরের পীড়িখানি স্ফটিকময় এবং মূলের বেদিটী মরকতমণিদ্বারা নির্ম্মিত। তোমাদের বন্ধু ময়ূর, সন্ধ্যাকালে যে বাসযষ্টিতে অবস্থান করে; তখন আমার প্রিয়তমা করকঙ্কণের মনোহর শব্দের সহিত করতালি দিয়া তাহাকে নাচাইতে থাকেন ॥১৮॥

अन्वयः—(हे) साधो ! हृदयनिहितैः एभिः लक्षणैः द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ दृष्ट्वा च, मद्वियोगेन अधुना नूनं क्षामच्छायं भवनं लक्षयेथाः, कमलं सूर्य्यापाये स्वां अभिख्यां न खलु पुष्यति ॥१९॥

चञ्चला—एभिरिति। हे साधो ! सदन्तःकरण ! निःस्वार्थभावेन परोपकारकरणोद्यमादिति भावः। हृदयनिहितैः चित्तस्थापितैः अविस्मृतैरित्यर्थः, एभिः "तत्रागारम्" इत्याद्युक्तैः, लक्षणैश्चिह्नैः, तथा द्वारस्य उपान्ते उभयपार्श्वे, लिखितवपुषौ चित्रिताकृती, शङ्खपद्मौ तदाख्यौ निधिविशेषौ दृष्ट्वा च, मम वियोगेन, अधुना, नूनं निश्चितम्, क्षामच्छायं क्षीणसौन्दर्य्यम्, भवनं मदीयां वाटीम्, लक्षयेथाः परि-

(१९) लक्षणैर्लक्षणीयं। मन्दच्छायं। इति पाठभेदौ।

चिनुयाः। चामच्छायत्वे दृष्टान्तमाह सूर्य्येति। कमलं पद्मं कर्तृ, सूर्य्यस्य अपाये अस्तगमनादभावे सति, स्वां स्वकीयाम्, अभिख्यां शोभाम्, न खलु पुष्यति नैव दधाति।

अत्र उपमानोपमेययोः कमलभवनयोः प्रणिधानगम्यसाम्यतया प्रतिविम्बनात् दृष्टान्तोऽलङ्कारः ॥१९॥

**सञ्जीवनी**—एभिरिति। हे साधो! निपुण! "साधुः समर्थो निपुणो वा" इति काशिकायाम्। हृदयनिहितैरविस्मृतैरित्यर्थः, एभिः पूर्वोक्तैर्लक्षणैः तोरणादिभिरभिज्ञानैः, द्वारोपान्ते एकवचनमविवक्षितम्, द्वारपार्श्वयोरित्यर्थः। लिखिते वपुषी आकृती ययोस्तौ तथोक्तौ शङ्खपद्मौ नाम निधिविशेषौ। "निधिर्ना शेवधिर्भेदाः शङ्खपद्मादयो निधेः" इत्यमरः। दृष्ट्वा च नूनं सत्यम् अधुना इदानीम्। अधुनेति निपातः। मद्वियोगेन मम प्रवासेन चामच्छायं मन्दच्छायम् उत्सवोपरमात् चीणकान्ति भवनं मद्गृहं लक्षयेथा निश्चिनुयाः। तथाहि सूर्य्यापाये सति कमलं पद्मं स्वामात्मीयाम् अभिख्यां शोभाम्। "अभिख्या नामशोभयोः" इत्यमरः। न पुष्यति न उपचिनोति खलु, सूर्य्यविरहितं पद्ममिव पतिविरहितं गृहं न शोभत इत्यर्थः ॥१९॥

**हिन्दी**—हे साधो! मनमें रक्खे हुये पूर्वोक्त लक्षणोंसे द्वारपार्श्वमें लिखित आकृतिवाले शङ्ख और पद्म देखकर अब मेरे वियोगसे मन्दकान्ति निश्चित घर पंहुचानोगे। (क्योंकि) सूर्य्य अस्त जानेसे कमल कभी नहीं खिलता ॥१९॥

**বাঙ্গালা**—হে সাধু মেঘ! এই সমস্ত চিহ্ন মনে রাখিয়া এবং দ্বারের উভয়পার্শ্বে শঙ্খ ও পদ্মের আকৃতি চিত্রিত দেখিয়া, আমার বাড়ীখানি চিনিতে পারিবে। সম্প্রতি আমার বিচ্ছেদে সে বাড়ীর সৌন্দর্য্য নিশ্চয়ই ক্ষয় পাইয়াছে। কারণ, পদ্ম, সূর্য্যের অভাবে স্বকীয় শোভা ধারণ করে না ॥১৯॥

गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः।
अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥२०॥

अन्वयः—शीघ्रसम्पातहेतोः सद्यः कलभतनुतां गत्वा प्रथमकथिते रम्यसानौ क्रीडाशैले निषण्णः (सन्) अल्पाल्पभासं खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिं अन्तर्भवनपतितां कर्तुं अर्हसि ॥२०॥

चञ्चला—गत्वेति। शीघ्रसम्पातहेतोः द्रुतगमनार्थम्, सद्यस्तत्-क्षणात् अलकायामुपस्थित्यनन्तरमेवेत्यर्थः, कलभः करिशावक इव तनुः क्षुद्रदेहस्तस्य भावस्ताम्। "कामरूपं मघोनः" इत्यनुस्मृत्येदमभिहित-मिति बोध्यम्। गत्वा प्राप्य, प्रथमकथिते "तस्यास्तीरे" इत्यादिना प्रागुक्ते, रम्याः सानवस्तटदेशा यस्य तस्मिन्। एतेनोपवेशनसौकर्य्यं सूचितम्। क्रीडाशैले निषण्ण उपविष्टः सन्, अल्पाल्पा भा दीप्तिर्यस्या-स्ताम्, भासां बाहुल्ये तु प्रिया मे भयेनापसरेदिति भावः, खद्योताली ज्योतिरिङ्गणश्रेणी तस्या विलसितनिभां स्फुरणतुल्याम्, विद्युदुन्मेषः स्वकीयतड़ित्प्रकाश एव दृष्टिः उभयोरपि तेजःप्रसारादित्याशयः, ताम्, अन्तर्भवने मदीयगृहाभ्यन्तरे पतितां कर्त्तुमर्हसि, मत्प्रियतमामव-लोकयितुमित्यभिप्रायः।

अत्र मेघे दृष्टिपातरूपकार्य्येण तच्छिखरादिकमाकम्य गृहाभ्यन्तरे अल्पाल्पदृष्ट्या संधायिनो जनस्य व्यवहारसमारोपात् समासोक्तिः, कलभतनुतामिति श्रौती समासगता लुप्तोपमा, खद्योतेत्यादौ आर्थी

(२०) तत्परिपाटिहेतोः इति भरतादिसम्मतः पाठः।

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः ॥२१॥

समासगतोपमा, विद्युदुन्मेषदृष्टिमिति निरङ्गं केवलरूपकञ्च इत्येतेषा-मङ्गाङ्गिभावेन सङ्करः ॥२०॥

सञ्जीवनी—निजगृहनिश्चयानन्तरं कृत्यमाह गत्वेति। हे मेघ! शीघ्रसम्पात एव हेतुस्तस्य शीघ्रप्रवेशार्थमित्यर्थः। "षष्ठी हेतुप्रयोगे" इति षष्ठी। "सम्पातः पतने वेगे प्रवेशे वेदसंविदे" इति शब्दार्णवः। सद्यः सपदि कलभस्य करिपोतस्य तनुरिव तनुर्यस्य तस्य भावस्ताम् अल्प-शरीरतां गत्वा प्राप्य, प्रथमकथिते "तस्यास्तीरे" इत्यादिना पूर्वोद्दिष्टे रम्यसानौ निषदनयोग्ये इत्यर्थः, क्रीडाशैले निषण्ण उपविष्टः सन्, अल्पाल्पा अल्पप्रकारा भाः प्रकाशा यस्यास्ताम्। "प्रकारे गुणवचनस्य" इति द्विरुक्तिः। खद्योतानामाली तस्या विलसितेन स्फुरितेन निभां समानां विद्युदुन्मेषो विद्युत्प्रकाशः स एव दृष्टिस्तां भवनस्यान्तः अन्त-र्भवनं तत्र पतितां प्रविष्टां कर्त्तुमर्हसि। यथा कश्चित् किञ्चिदन्विष्यन् क्वचिदुन्नते स्थित्वा शनैः शनैरतितरां द्राघीयसीं दृष्टिमिष्टदेशे पातयति तद्वदित्यर्थः ॥२०॥

हिन्दी—हे मेघ! जल्दी जानेके कारण हठात् छोटाशरीर होनेसे पूर्वोक्त रम्य सानुवाले क्रीडाशैलमें बैठकर थोड़ीसा थोड़ीसा दीप्ति देनेवाली खद्योतसमूहके स्फुरणसदृश बिजलीप्रकाशरूप दृष्टि घरके भितर पहुचानेवाली कर सकोगे ॥२०॥

(२१) शिखरदशना इति क्वचित् पाठः।

বাঙ্গালা—হে মেঘ! দ্রুত গমন করিবার নিমিত্ত, হস্তিশাবকের ন্যায় ক্ষুদ্র দেহ ধারণ করিয়া, মনোহরসানুসমন্বিত পূর্ব্বোক্ত ক্রীড়াপর্ব্বতে উপবিষ্ট হইয়া, জোনাকীসমূহের দীপ্তির ন্যায় অল্প অল্প দীপ্তিশালী বিদ্যুৎপ্রকাশরূপ দৃষ্টি গৃহের ভিতরে পাতিত করিবে ॥২০॥

অন্বয়:—তন্বী শ্যামা শিখরিদশনা পক্কবিম্বাধরোষ্ঠী মধ্যে ক্ষামা চকিত-হরিণীপ্রেক্ষণা নিম্ননাভিঃ শ্রোণীভারাদলসগমনা স্তনাভ্যাং স্তোকনম্রা যুবতিবিষয়ে ধাতুঃ আদ্যা সৃষ্টিঃ ইব যা তত্র স্যাৎ ( তাং জানীথাঃ ) ॥২১॥

চঞ্চলা—ননু তাদৃশদৃষ্টিপাতস্য কিং ফলমিত্যাহ তন্বীতি। তন্বী কৃশাঙ্গী, শ্যামা যুবতিঃ "শীতে সুখোষ্ণসর্বাঙ্গী গ্রীষ্মে চ সুখশীতলা। তপ্তকাঞ্চনবর্ণাভা সা স্ত্রী শ্যামেতি কথ্যতে॥" ইত্যুক্তলক্ষণা বা, শিখরিণ্যঃ সূক্ষ্মাগ্রা দশনা দন্তা যস্যাঃ সা, পক্কং বিম্বং ফলমিব অধরো নিম্ন ওষ্ঠো যস্যাঃ সা, মধ্যে কটিদেশে ক্ষামা ক্ষীণা কৃশকটিদেশেত্যর্থঃ, চকিতায়াঃ কুতোঽপি ত্রস্তায়া হরিণ্যা ইব প্রেক্ষণং দৃষ্টির্যস্যাঃ সা, নিম্না গভীরা নাভির্যস্যাঃ সা, শ্রোণ্যোর্নিতম্বয়োর্ভারাদেব ন তু ব্যাধিবিশেষাৎ অলসং মন্থরং গমনং যস্যাঃ সা, তথা স্তনাভ্যাং পীবর-কুচযুগলভারেণেত্যর্থঃ, ন পুনঃ স্বাভাবিককুব্জতাদোষাদিত্যাশয়ঃ, স্তোক-নম্রা অল্পাবনতপূর্ব্বকায়া, যুবতিবিষয়ে ধাতুর্ব্রহ্মণঃ, আদ্যা প্রাথমিকী সৃষ্টিরিব প্রথমসৃষ্টেবেত্যর্থঃ, যা কাচিৎ স্ত্রী, তত্র অন্তর্ভবনে স্যাদব-তিষ্ঠেত, তাং জানীথা ইতি পরেণান্বয়ঃ।

অত্র প্রথমে চরণে অধরোষ্ঠশব্দয়োঃ পর্য্যায়তয়া আপাততঃ পৌনরুক্ত্যাব-ভাসনাৎ পরন্তু নিম্নোষ্ঠপ্রতীতেস্তদপগমাৎ ভিন্নাকারশব্দগতত্বাচ্চ পুনরুক্তবদাভাসোঽলঙ্কারঃ, সমাসগতা লুপ্তোপমা চানয়োরেকাশ্রয়ানুপ্রবেশ-রূপঃ সঙ্করঃ। দ্বিতীয়ে চরণে সমাসগতা লুপ্তোপমা। তৃতীয়ে ব্যাখ্যাত-রূপেণান্যব্যপোহনাৎ অপ্রশ্নপূর্ব্বকমার্থপরিসংখ্যাদ্বয়ম্। চতুর্থে চ

भावाभिमानिनी वाच्या जात्युत्प्रेक्षा। अमीषामलङ्काराणां परस्पर-निरपेक्षतया संसृष्टिः। विषयान्तराणि तु सञ्जीवन्यामेवोक्तानि ॥२१॥

सञ्जीवनी—सम्प्रति दृष्टिपातफलमभिज्ञानञ्च श्लोकद्वयेनाह तन्वीति। तन्वी कृशाङ्गी, न तु पीवरी। "स्तुच्छं दभ्रं कृशं तनु" इत्यमरः। "वोतो गुणवचनात्" इति ङीष्। श्यामा युवतिः। "श्यामा यौवनमध्यस्था" इत्युत्पलमालायाम्। शिखराण्येषां सन्तीति शिखरिणः कोटिमन्तः। "शिखरं शैलवृक्षाग्रकक्षापुलककोटिषु" इति विश्वः। शिखरिणो दशना दन्ता यस्याः सा। एतेनास्या भाग्यवत्त्वं पत्यायुष्कर-त्वञ्च सूच्यते। तदुक्तं सामुद्रिके—"स्निग्धाः समानरूपाः सुपङ्क्तयः शिखरिणः श्लिष्टाः। दन्ता भवन्ति यासां तासां पादे जगत् सर्वम् ॥" "ताम्बूलरसरक्तोऽपि स्फुटभासः समोदयाः। यस्याः शिखरिणो दन्ता दीर्घं जीवति तत्पतिः ॥" इति। पक्वं परिणतं विम्बं विम्बिका-फलमिव अधरोष्ठो यस्याः सा पक्वविम्बाधरोष्ठी। शाकपार्थिवादित्वा-न्मध्यपदलोपी समास इति वामनः। "नासिकोदरोष्ठ—" इत्यादिना ङीष्। मध्ये क्षामा कृशोदरीत्यर्थः, चकितहरिण्याः प्रेक्षणानीव प्रेक्षणानि दृष्टयो यस्याः सा तथोक्ता। एतेनास्याः पद्मिनीत्वं व्यज्यते। तदुक्तं रतिरहस्ये पद्मिनीलक्षणप्रस्तावे—"चकितमृगदृगाभे प्रान्तरक्ते च नेत्रे" इति। निम्ननाभिर्गम्भीरनाभिः। अनेन नारीणां नाभिगाम्भीर्य्या-न्मदनातिरेक इति कामसूत्रार्थः सूच्यते। श्रोणीभारादलसगमना मन्दगामिनी न तु जघनदोषात्, स्तनाभ्यां स्तोकनम्रा ईषदवनता न तु वपुर्दोषात्, युवतय एव विषयस्तस्मिन् युवतिविषये युवतीरधिकृत्येत्यर्थः, धातुर्ब्रह्मणः आद्या सृष्टिः प्रथमशिल्पमिव स्थिता इत्युत्प्रेक्षा, प्रथम-निर्म्मिता युवतिरियमेवेत्यर्थः। प्रायेण शिल्पिनां प्रथमनिर्म्माणे प्रयत्नातिशयवशात् शिल्पनिर्म्माणसौष्ठवं दृश्यते इत्याद्यविशेषणम्। तथा

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढ़ोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥२२॥

यस्मिन् प्रपञ्चे न कुत्राप्येवंविधरामणीयकं रमणीरत्नमस्तीति भावः । तदेवम्भूता या स्त्री तत्र अन्तर्भवने स्यात्, तत्र निवसेदित्यर्थः । ताम् इत्युत्तरश्लोकेन सम्बन्धः ॥२१॥

**हिन्दी**—कृशाङ्गी, युवति, सूक्ष्मदांतवाली, पकी बिम्बके सदृश अधरोष्ठवाली, मध्यदेशमें कृश, वस्त हरिणीके सदृश दृष्टिशालिनी, निम्ननाभि, नितम्बके भारसे मन्द-गतिवाली, स्तनके वदे ईषत् नम्र, वहां पर युवतियोंके भितर मानों विधाताके प्रथम सृष्टि जो है। (उनको तुम जानोगे) ॥२१॥

**বাঙ্গালা**—যাঁহার শরীর কৃশ, যৌবনের মধ্যম অবস্থা, দন্তসমূহ পরস্পর সম্মিলিত এবং সূক্ষ্মাগ্র, নীচের ওষ্ঠ পক্ক বিম্বফলের ন্যায় রক্তবর্ণ, কটিদেশ ক্ষীণ, চকিত হরিণীর ন্যায় চঞ্চল দৃষ্টি, নাভিটী গভীর, নিতম্ব-যুগলের ভারে গমন মন্থর এবং স্তনযুগলের ভারে কিঞ্চিৎ অবনত—এইরূপ যে রমণী যুবতিগণের মধ্যে বিধাতার প্রথম সৃষ্টির ন্যায় সেই গৃহের ভিতরে অবস্থান করিতেছেন ( তিনিই আমার দ্বিতীয় জীবনস্বরূপ জানিবে। ) ॥২১॥

**अन्वयः**—सहचरे मयि दूरीभूते चक्रवाकीं इव एकां परिमितकथां तां मे द्वितीयं जीवितं जानीथाः, गाढ़ोत्कण्ठां बालां गुरुषु एषु दिवसेषु गच्छत्सु शिशिरमथितां पद्मिनीं वा अन्यरूपां जातां मन्ये ॥२२॥

(२२) जानीया इति साहित्यदर्पणधृतः पाठः ।

चञ्चला—तामिति । सहचरे मयि चक्रवाके च, दूरीभूते प्रभुशापात् निशोपगमाच्च दूरदेशस्थिते च सति, चक्रवाकीमिव एकाम् एकाकिनीं स्थिताम्, परिमिता उपयुक्तमाला कथा वाक्यं यस्यास्ताम्, तां "तन्वी श्यामा" इत्याद्युक्तरूपां स्त्रियम्, मे मम, द्वितीयं जीवितं द्वितीयजीवनभूताम्, जानीथा अवगच्छेः । एतेनासीमं प्रेम सूचितम् । गाढ़ा तीव्रा उत्कण्ठा विरहवेदना यस्यास्ताम्, बालां तां तरुणीम्, गुरुषु विरहेण विशालीभूतेषु, एषु दिवसेषु गच्छत्सु सत्सु, शिशिरेण शीतकालेन मथिता निपीड़िता ताम्, पद्मिनीं वा कमलिनीमिव, अन्यरूपां पूर्वं तो विकृताकृतिम्, जातां भूतां मन्ये अवगच्छामि ।

अत्र प्रथमपादे तादृशजाया-जीवितयोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्तिरेव, न तु रूपकम् ; साहित्यदर्पणे—"धर्मान्तरतादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात् । यथा—अयं राजा अपरः पाकशासनः" इत्युत्प्रेक्षाप्रकरणे "इहापि मुखं द्वितीयश्चन्द्र इत्यादौ" इत्यतिशयोक्तिप्रकरणे चाभिधानात् अत्रापि सर्वथा तयोः समानत्वात् । द्वितीयपादे पूर्णोपमा, इत्यनयोर्मिथो निरपेक्षतया पूर्वार्द्धे संसृष्टिः । द्वितीयार्द्धे च "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वप्रामाण्येन वाशब्दस्य उपमावाचकत्वात् श्रौती उपमा ; तथा गाढ़ोत्कण्ठारूपसाधनेन अन्यरूपप्राप्तिरूपसाध्यज्ञानात् उक्तोपमाकृतविच्छित्तिविशेषाच्च अनुमानालङ्कारस्य, अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः । न चोत्तरार्द्धे मन्ये-शब्दप्रयोगादुत्प्रेक्षैवेति वाच्यम्, उपमेये उपमानरूपेण सम्भावनाया एवोत्प्रेक्षारूपत्वात् अत्र तु तदभावात् । मन्ये-शब्दप्रयोगमात्रेणैवोत्प्रेक्षाङ्गीकारे तु "यत्र पतत्यबलानां दृष्टिः" इत्यादावनुमानालङ्कारस्थलीयदर्पणोदाहरणेऽपि उत्प्रेक्षालङ्कारापत्तिरिति सुधीभिर्विभावनीयम् ।

चतुर्थपादानुरूपः पादो यथा रघुवंशे—"मृणालिनी हैममिवोपरागम्" ॥२२॥

**सञ्जीवनी**—तामिति। सहचरे सहचारिणि। अनेन वियोगासहिष्णुत्वं व्यज्यते। मयि दूरीभूते दूरस्थिते सति सहचरे चक्रवाके दूरीभूते सति, चक्रवाकीं चक्रवाकवधूमिव। "जातेरस्त्रीविषयादयोपधात्" इति ङीष्। परिमितकथां मितभाषिणीम् एकाम् एकाकिनीं स्थितां ताम् अन्तर्भवनगतां मे द्वितीयं जीवितं जानीथाः, जीविततुल्यां मत्प्रेयसीमवगच्छेरित्यर्थः। तन्वीत्यादिपूर्वलक्षणैरिति शेषः। लक्षणानामन्यथाभावभ्रममाशङ्क्याह गाढोत्कण्ठामिति। गाढोत्कण्ठां प्रबलविरहवेदनाम्। "रागे त्वलब्धविषये वेदना महती तु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः॥" इत्यभिधानात्। बालां गुरुषु विरहमहत्सु एषु वर्त्तमानेषु दिवसेषु गच्छत्सु सत्सु शिशिरेण शिशिरकालेन मथितां पद्मिनीं वा पद्मिनीमिव। "इव वत् वा यथाशब्दाः" इति दण्डी। अन्यरूपां पूर्वविपरीताकारां जातां मन्ये, हिमहतपद्मिनीव विरहेण अन्यादृशी जातेति तर्कयामीत्यर्थः। एतावता नेयमन्येति भ्रमितव्यमिति भावः ॥२२॥

**हिन्दी**—सहचर दूर जानेसे चक्रवाकीके सदृश दूरमें मेरे रहनेसे एकाकिनी परिमितकथनशीला उनको मेरे द्वितीय जीवन मानो। ये सब दिवस जानेमें उनको हिमसे मथित पद्मिनीकी तरह विभिन्नरूपवाली मानता हूं (क्योंकि वह सर्वदा विरहवाली है) ॥२२॥

**বাঙ্গালা**—সেই মিতভাষিণী রমণীকে আমার দ্বিতীয় জীবন বলিয়া জানিবে। আমি তাঁহার সহচর; সুতরাং আমি দূরে থাকায় চক্রবাক-বিরহিণী চক্রবাকীর ন্যায় তিনি একাকিনী অবস্থান করিতেছেন। বিশেষতঃ বিরহবশতঃ সুদীর্ঘ এই দিনগুলি যাইতেছে, এসময়ে সেই

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियायाः
निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम्।
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वात्
इन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्त्ति ॥२३॥

বালিকা অত্যন্ত উৎকণ্ঠাবশতঃ শীতনিপীড়িত পদ্মিনীর ন্যায় অন্যরূপ হইয়া পড়িয়াছে বলিয়া আমি মনে করি ॥২২॥

अन्वयः—प्रबलरुदितोच्छूननेत्रं निश्वासानां अशिशिरतया भिन्नवर्णाधरोष्ठं लम्बालकत्वात् असकलव्यक्ति हस्तन्यस्तं तस्याः प्रियायाः मुखं त्वदनुसरणक्लिष्टकान्तेः इन्दोः दैन्यं बिभर्त्ति नूनं ॥२३॥

चञ्चला—नूनमिति। प्रबलरुदितेन विरहवेदनावशादत्यन्तरोदनेन उच्छूने स्फीतीभूते नेत्रे चक्षुषी यस्य तत्, निश्वासानाम् अशिशिरतया अन्तःसन्तापवशादुष्णतया, भिन्नवर्णौ विकृतकान्तिः अधरोष्ठो निम्नोष्ठौ यस्य तत्। एतेनाधरस्य नितान्तकोमलत्वं व्यज्यते। लम्बालकत्वात् संस्काराभावेन लम्बितमवलितकुन्तलत्वात् तादृशकुन्तलैः कियदावरणा-दित्यर्थः, असकला असम्पूर्णा व्यक्तिः प्रकाशो यस्य तत्, तथा हस्ते न्यस्तं स्थापितम्। एतेन चिन्ता द्योत्यते। तस्याः प्रियाया मुखं कर्त्तृ, तव मेघस्य अनुसरणेन आगमनेन कियदावरणेनेत्यर्थः, क्लिष्टा क्षीणा कान्तिर्यस्य तस्य तथोक्तस्य, इन्दोश्चन्द्रस्य, दैन्यं मालिन्यम्, बिभर्त्ति धारयतीति नूनं तर्कयामीत्यर्थः।

अत्र उपमेये उपमानरूपेण सम्भावनाया अभावान्नोत्प्रेक्षा, साधना-भावाच्च नानुमानम्। किन्तु "भिन्नवर्णाधरोष्ठम्" इत्यत्र पूर्ववदेव

(२३) हस्ते न्यस्तम्। त्वदुपसरणक्लिष्टकान्तेः। इति पाठभेदौ।

पुनरुक्तवदाभासः, तथा अन्यस्य दैन्यं कथमन्यो वहत्विति वस्तुसम्बन्धोऽसम्भवन् दैन्यमिव दैन्यमिति सादृश्यं बोधयतीति असम्भवद्वस्तुसम्बन्धा निदर्शना, "हस्तन्यस्तम्" इत्यत्र छेकानुप्रासश्च इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ॥२३॥

सञ्जीवनी—नूनमिति। प्रबलरुदितेन उच्छूने स्फुटितपुटे नेत्रे यस्य तत्। उच्छूनेति श्वयतेः कर्त्तरि क्तः, "आदितश्च" इति निष्ठानत्वम्, "वचिस्वपि—" इत्यादिना सम्प्रसारणम्, "सम्प्रसारणाच्च" इति पूर्वरूपत्वम्, "हलः" इति दीर्घः, "च्छ्वोः शूड़नुनासिके च" इति ऊड़ादेशे क्रते रूपसिद्धिरिति वर्त्तमानसामीप्यप्रक्रिया प्रामादिकीत्युत्प्रेक्षा, तथा सति धातोरिकारस्य गत्यभावात् ऊड़ादेशे च्छ्वोरन्त्यत्वेन विशेषणाच्चेति। एतेन विषादो व्यज्यते। निश्वासानाम् अशिशिरतया अन्तस्तापोष्णत्वेन भिन्नवर्णो विच्छायः अधरोष्ठो यस्य तत्, हस्ते न्यस्तं हस्तन्यस्तम्। एतेन चिन्ता व्यज्यते। लम्बालकत्वात् संस्काराभावात् लम्बमानकुन्तलत्वात् असकलव्यक्ति असम्पूर्णाभिव्यक्ति तस्याः प्रियाया मुखम्, त्वदनुसरणेन त्वदुपरोधेन मेघानुसरणेनेति यावत्, क्लिष्टकान्तेः क्षीणकान्तेः इन्दोः दैन्यं शोच्यतां बिभर्त्ति; नूनमिति वितर्के। "नूनं तर्केऽर्थनिश्चये" इत्यमरः। पूर्ववत् तथापि न भ्रमितव्यमिति भावः ॥२३॥

हिन्दी—प्रबल रोदनसे स्फीतनयन, गरम निश्वासके वरद निष्प्रभ, अधरोष्ठशाली, हाथके ऊपर स्थापित और केशलम्बके कारण ठिकतौरसे अप्रकाशित उस प्रियाका वदन, तुम्हारे (मेघके) आगमनकारण क्षीणशोभ चन्द्रके सदृश अवस्था धारण करेगा यह विचार कर रहा हूं ॥२३॥

বাঙ্গালা—অত্যন্ত রোদন করায় চোখ দু'টী ফুলিয়াছে, নিশ্বাসের উষ্ণতাবশতঃ নীচের ওষ্ঠখানি বিবর্ণ হইয়া গিয়াছে, খোলা চুলগুলি আসিয়া আবরণ করায় সম্পূর্ণ প্রকাশ পাইতেছে না—এইরূপ হস্তের

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती।
पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां
कच्चिद्भर्त्तुः स्मरसि रसिके! त्वं हि तस्य प्रियेति ॥२४॥

উপরে সংস্থাপিত প্রিয়তমার মুখখানি, তোমার (মেঘের) আবরণে ক্ষীণকান্তি চন্দ্রের দৈন্যদশা ধারণ করিতেছে ইহা আমি মনে করি ॥২৩॥

**अन्वयः**—(हे मेघ!) बलिव्याकुला वा भावगम्यं विरहतनु मत्सादृश्यं लिखन्ती वा मधुरवचनां पञ्जरस्थां सारिकां (हे) रसिके! भर्त्तुः स्मरसि कच्चित्, हि त्वं तस्य प्रिया इति पृच्छन्ती वा सा ते आलोके पुरा निपतति ॥२४॥

**चञ्चला**—अथ प्रियतमायाः सम्भाव्यमाना अवस्थास्त्रिभिः श्लोकैराह आलोक इति। हे मेघ! बलौ गृहदेवताभ्यः पूजोपहारदाने व्याकुला व्यासक्ता वा। एतेन धर्म्मपरायणत्वं व्यज्यते। वा अथवा, भावेन गम्यं सम्भावनामात्रेण बोध्यम्, मम दूरवर्त्तितया दर्शनायोग्यत्वादिति भावः, विरहेण तनु कृशम्, मत्सादृश्यं मम प्रतिमूर्त्तिम्, लिखन्ती पटादौ चित्रयन्ती। अनेन पातिव्रात्यं ध्वन्यते। वा किंवा, मधुरवचनां मिष्टभाषिणीम्, अतएव पञ्जरस्थां यत्नेन पञ्जरे रक्षिताम्, सारिकां पक्षिणीविशेषाम्, "हे रसिके! कौतुकरसवदालापकारिणि! सारिके! भर्त्तुः स्मरसि कच्चित् भर्त्तारं तं स्मरसि किमु? हि यस्मात्, त्वं तस्य भर्त्तुः प्रिया आलापादिना प्रीतिकरी" इति इत्थम्, पृच्छन्ती जिज्ञासमाना। अनेनापि पतिपरायणता द्योतिता। सा मम प्रियतमा,

(२४) निपतति पुरे। विरहतनुना। स्मरसि निभृते ?। इति पाठान्तराणि।

ते तव मेघस्य आलोके दर्शने दृष्टिपथे, पुरा निकटभविष्यत्काले अचिर-मेवेत्यर्थः, निपतति पतिष्यतीति सम्भावयामीत्यर्थः ।

अत्र उक्तविधध्वनिसत्त्वेन चातुरीमत्त्वात् सम्भवपरत्वेन तुल्यबलानां सर्वासामेव उक्तावस्थानां यौगपद्यासम्भवेन विरोधाच्च विकल्पो नामा-लङ्कारः, "स्मरसि रसिके !" इत्यत्र 'रसि-रसि' इत्यनयोः समानावृत्ते-र्यमकञ्च ; अनयोः परस्परनिरपेक्षतया संसृष्टिः । केचित्तु दीपकमिति प्रलपन्ति ॥२४॥

सञ्जीवनी—सर्वविरहिणीसाधारणानि लक्षणानि सम्भावनया उत्प्रेक्षमाणीत्याह "आलोके" इत्यादिभिस्त्रिभिः । आलोक इति । हे मेघ ! सा मत्प्रिया बलिषु नित्येषु प्रोषितागमनार्थेषु च देवताराधनेषु व्याकुला व्यापृता वा, विरहेण तनु कृशं भावगम्यं तत्कार्श्यस्य अदृष्ट-चरत्वात् सम्प्रति सम्भावनयोत्प्रेक्ष्यमित्यर्थः, मत्सादृश्यं मदाकारसाम्यं मत्प्रतिकृतिमित्यर्थः । यद्यपि सादृश्यं नाम प्रसिद्धवस्त्वन्तरगतमाकार-साम्यम्, तथापि प्रतिकृतित्वेन विवक्षितम्, इतरथा आलेख्यत्वासम्भवात् "अचक्ष्यकोशे आलेख्येऽपि च सादृश्यम्" इत्यभिधानाच्च । लिखन्ती क्वचित् फलकादौ विन्यस्यन्तीति वा । चित्रदर्शनस्य विरहिणीविनोदो-पायत्वादिति भावः । एतच्च कामशास्त्रसंवादेन सम्यग् विवेचित-मस्माभिः रघुवंशसञ्जीवन्याम्—"सादृश्यप्रतिकृतिदर्शनैः प्रियायाः" इत्यत्र । मधुरवचनां मञ्जुभाषिणीम्, अतएव पञ्जरस्थां हिंस्रेभ्यः कृतरक्षणामित्यर्थः, सारिकां स्त्रीपक्षिविशेषाम्, हे रसिके ! भर्त्तुः स्वामिनः स्मरसि कच्चित् स्मरसि किम् ? "कच्चित् कामप्रवेदने" इत्यमरः । भर्त्तारं स्मरसि किमित्यर्थः । "अधीगर्थदयेशां कर्म्मणि" इति कर्म्मणि षष्ठी । स्मरणे कारणमाह—हि यस्मात् कारणात्

उत्सङ्गे वा मलिनवसने सौम्य ! निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चित्
भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥२५॥

त्वं तस्य भर्त्तुः प्रीणातीति प्रियः, "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः। अतः प्रेमास्पदत्वात् स्मर्त्तुमर्हसीति भावः। इत्येवं पृच्छन्ती वा। वाशब्दो विकल्पे, "उपमायां विकल्पे वा" इत्यमरः। ते तव आलोके दृष्टिपथे पुरा निपतति सद्यो निपतिष्यतीत्यर्थः। "स्यात् प्रबन्धे चिरातीते निकटागामिके पुरा" इत्यमरः। "यावत् पुरा-निपातयोर्लट्" इति लट् ॥२४॥

हिन्दी—वह मेरी औरत गृहदेवताको उपहार देनेमें व्याप्टत, अथवा विरहसे क्षश आन्दाजसे माध्य मेरे सादृश्य लिखती हुई, अथवा पिञ्जरमें रहनेवाली मधुरबोली बोलनेवाली सारिकाको पुछती हुई "हे रसिके ! क्या स्वामीकी याद करती हो ! तू उनकी बड़ी प्रियसखी" ऐसी अवस्थामें तुम्हारे दृष्टिगोचर होवेगी ॥२४॥

বাঙ্গালা—হে মেঘ ! গৃহদেবতাদিগের পূজার উপহারদানে ব্যাপৃত রহিয়াছেন, অথবা বিচ্ছেদবশতঃ কৃশই হইয়া গিয়াছেন এইরূপ অনুমানে বুঝিয়া আমার সেই রূপ প্রতিমূর্ত্তি চিত্রিত করিতেছেন, কিংবা "হে রসিকে ! তোমার প্রভুকে কি স্মরণ করিতেছ, যে হেতু তুমি তাঁহার প্রিয় ছিলে" এইরূপে পিঞ্জরস্থিত মধুরভাষিণী সারিকাকে জিজ্ঞাসা করিতেছেন—ইহার যে কোন অবস্থায় আমার সেই প্রিয়তমা তোমার দৃষ্টিপথে শীঘ্রই পতিত হইবেন ॥২৪॥

(२५) तन्त्रीमार्द्राः। इति पाठान्तरम्।

अन्वयः—वा (हे) सौम्य ! मलिनवसने उत्सङ्गे वीणां निक्षिप्य मद्गोत्राङ्कं विरचितपदं गेयं उद्गातुकामा (सती) नयनसलिलैः आर्द्रां तन्त्रीं कथञ्चित् सारयित्वा स्वयं कृतां अपि मूर्च्छनां भूयः भूयः विस्मरन्ती ॥२५॥

चञ्चला—उत्सङ्ग इति। वा अथवा, हे सौम्य ! शान्तमूर्त्ते ! मेघ ! मलिनं रजकसंस्काराद्यभावात् मलपूर्णं वसनं यस्मिन् तादृशे, उत्सङ्गे क्रोड़े, वीणां निक्षिप्य संस्थाप्य, मम गोत्रं नाम अङ्कश्चिह्नं यस्मिन् तत् तादृशम्, तथा विरचितानि स्वयं संगृहीतानि पदानि यस्य तत्तथोक्तम्, गेयं गानयोग्यं सन्दर्भम्, उद्गातुकामा उच्चैःस्वरेण गातुमिच्छन्ती सती, नयनसलिलैर्मम स्मरणजनितैरश्रुजलैः, आर्द्रां सिक्ताम्, तन्त्रीं वीणागुणम्, कथञ्चित् कष्टेन, सारयित्वा शुष्कता-सम्पादनाय हस्तेन मार्जयित्वा, अन्यथा वादनं न सम्भवतीति भावः, स्वयमात्मना कृतामपि, मूर्च्छनां स्वरभङ्गीविशेषम्, भूयो भूयो वारं वारं विस्मरन्ती सा प्रिया "आलोके ते निपतति पुरा" इति पूर्वेण सम्बन्धः। एतेनापि पतिपरायणत्वं व्यज्यते।

अतएवात्रापि पूर्वापेक्षया पूर्ववदेव विकल्पालङ्कारः ॥२५॥

सञ्जीवनी—उत्सङ्ग इति। हे सौम्य ! साधो ! मलिन-वसने "प्रोषिते मलिना कृशा" इति शास्त्रादित्यर्थः। उत्सङ्गे क्रोड़े वीणां निक्षिप्य मम गोत्रं नाम अङ्कश्चिह्नं यस्मिन् तत् मद्गोत्राङ्कं मन्नामाङ्कं यथा तथा। "गोत्रं नाम्नि कुलेऽपि च" इत्यमरः। विर-चितानि पदानि यस्य तत्तथोक्तं गेयं गानार्हं प्रबन्धादि। गीतमिति पाठे स एवार्थः। उद्गातुम् उच्चैर्गातुं कामो यस्याः सा। "तुम् काममनसोः" इति मकारलोपः। देवयोनित्वात् गान्धारग्रामं गातु-कामेत्यर्थः। तदुक्तम्—"षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः। न तु गान्धारनामानं स लभ्यो देवयोनिभिः॥" इति। तथा

शेषान् मासान् विरहदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः ।
मत्सङ्गं वा हृदयनिहितारम्भमास्वादयन्ती
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥२६॥

नयनसलिलैः प्रियतमस्मृतिजनितैरश्रुभिः, आर्द्रां तन्त्रीं कथञ्चित् अञ्चलेन सारयित्वा आर्द्रत्वापहरणाय करेण प्रमृज्य अन्यथा क्वणना-सम्भवादिति भावः। भूयो भूयः पुनः पुनः स्वयमात्मना कृतामपि विस्मरणानर्हामपीत्यर्थः, मूर्च्छनां स्वरारोहावरोहक्रमम्। "स्वराणां स्थापनाः सान्ताः मूर्च्छनाः सप्त सप्त हि" इति सङ्गीतरत्नाकरे। विस्मरन्ती वा "आलोके ते निपतीति" इति पूर्वेणान्वयः। विस्मरणञ्चात्र दयितगुणस्मृतिजनितमूर्च्छावशादेव। तथा च रसरत्नाकरे—"वियोग-योगयोरिष्टगुणानां कीर्त्तनात् स्मृतेः। साक्षात्कारोऽथवा मूर्च्छा दशधा जायते तथा॥" मत्सादृश्यमित्यादिना मनःसङ्गानुवृत्तिः सूचिता ॥२५॥

हिन्दी—हे सौम्य ! मयला कपड़ावाले क्रोड़में वीणा फेक कर मेरे नामाङ्कसे

(२६) गमनदिवसस्थापितस्य । देहलीमुक्तपुष्पैः । संयोगं वा आसादयन्ती । रमणविरहे ह्यङ्गनानां । इति पाठभेदाः ।

स्निग्धाः सख्यः क्षणमपि दिवा तां न मोक्ष्यन्ति तन्वी-
मेकप्रख्या भवति हि जगत्यङ्गनानां प्रवृत्तिः ।
स त्वं रात्रौ जलद ! शयनासन्नवातायनस्थः
कान्तां सुप्ते सति परिजने वीतनिद्रामुपेयाः ॥

अयमधिकः श्लोकः क्वचित् ।

जिनके पद रचित हुआ है ऐसे गीत गानेमें अभिलाषवती, आंसुओंसे भिगी हुई वीणाकी किसी तौरसे संस्कार कर आपही किया हुई मूर्च्छना भूलती वह तुम्हारे दृष्टिगोचर होगी ॥२५॥

বাঙ্গালা—অথবা হে সৌম্যমূর্ত্তি মেঘ! মলিনবসনাবৃত ক্রোড়-দেশে একটী বীণা স্থাপিত করিয়া, আমার নামচিহ্নিত একটী গান রচনা করিয়া, তাহাই উচ্চৈঃস্বরে গাহিতে ইচ্ছুক হইয়া, নয়নের জলে আর্দ্র বীণাতন্ত্রীটীকে কোন প্রকারে সজ্জীকৃত করিয়া, নিজকৃত মূর্চ্ছনাকেও বারংবার বিস্মৃত হইতেছেন এই অবস্থায় প্রিয়তমা তোমার দৃষ্টিপথে পতিত হইবেন ॥২৫॥

अन्वयः—विरहदिवसस्थापितस्य अवधेः शेषान् मासान् देहलीदत्तपुष्पैः गणनया भुवि विन्यस्यन्ती वा हृदयनिहितारम्भं मत्सङ्गं आस्वादयन्ती वा ( सती ) प्रायेण रमण-विरहेषु एते अङ्गनानां विनोदाः ( भवन्ति ) ॥२६॥

चञ्चला—शेषानिति। विरहदिवसात् मया सार्द्धं विच्छेदोत्पत्ति-दिनात् स्थापितस्य निर्द्धारितस्य, अवधेः तद्विरहस्य अन्त्यसीम्नः सम्बन्धे, शेषान् अतीतावशिष्टान् मासान्, देहल्यां द्वाराधारकाष्ठे दत्तानि स्थापितानि यानि पुष्पाणि तैः, गणनया 'अयमेको गतः, इमौ द्वौ गतौ' इत्यादिरूपेण संख्याकरणेन, भुवि भूतले, विन्यस्यन्ती स्थापयन्ती वा तादृशपुष्पविन्यासैरवशिष्टमासान् गणयन्ती वा इत्यर्थः, "आलोके ते निपतति पुरा" इति पूर्वेण सम्बन्धः। अथवा हृदये निहिताः स्थापिता मनसा कल्पिता इत्यर्थः, आरम्भाः रमणादिव्यापारा यत्र तम्, मत्सङ्गं मम सङ्गमसुखम्, आस्वादयन्ती अनुभवन्ती सती "आलोके ते निपतति पुरा" इति पूर्वेणान्वयः। नन्वेवं सम्भावनायां को हेतुरित्याह प्रायेणेति। प्रायेण बाहुल्येन, रमणविरहेषु पतिविच्छेदकालेषु, एते

वलिव्याकुलत्वादयः, अङ्गनानां स्त्रीणाम्, विनोदा वेदनापनयनोपाया भवन्ति।

अत्रापि पूर्ववदेव विकल्पालङ्कारः, सामान्येन विशेषसमर्थनरूपो-ऽर्थान्तरन्यासश्च, अनयोरङ्गाङ्गिभावेन सङ्करः॥२६॥

सञ्जीवनी—शेषानिति। अथवा विरहस्य दिवसस्तस्मात् स्थापितस्य तत आरभ्य निश्चितस्य अवधेरन्तस्य शेषान् गतावशिष्टान् मासान् देहलीदत्तपुष्पैः देहली द्वारस्य आधारदारु। "गृहावग्रहणी देहली" इत्यमरः। तत्र दत्तानि राशिकृतत्वेन निहितानि यानि पुष्पाणि तैः, गणनया एको द्वावित्यादिसंख्यानेन भुवि भूतले विन्यस्यन्ती वा, पुष्प-विन्यासैर्मासान् गणयन्ती वेत्यर्थः। यद्वा हृदये निहितः मनसि सङ्कल्पितः आरम्भ उपक्रमो यस्य तत्। अथवा हृदयनिहिता आरम्भा-श्चुम्बनादयो व्यापारा यस्मिन् तम्, मत्सङ्गं मत्सम्भोगरतिम् आस्वा-दयन्ती वा "आलोके ते निपतति" इति पूर्वेण सम्बन्धः। ननु कथमयं निश्चय इत्याशङ्कामर्थान्तरन्यासेन परिहरति प्रायेणेति। प्रायेण बाहुल्येन अङ्गनानां रमणविरहेषु, एते पूर्वोक्ताः विनोदाः काल-यापनोपायाः। एतेन सङ्कल्पावस्था उक्ता। तदुक्तम्—"सङ्कल्पो नाथ-विषये मनोरथ उदाहृतः" इति॥२६॥

हिन्दी—अथवा विरहदिवससे चलको शेष महीनोंको देहलीपर दिये हुये पुष्पोंसे गणनामें भूमिकापर विन्यास करती हुई, (पुष्पविन्याससे मास गिनती हुई) अथवा केवल हृदयमें निहित मेरे सङ्गसे रति आस्वादन करती हुई वह तुम्हारे दृष्टिगोचर होवेगी। (क्योंकि) स्वामीके विरहवती बालाओंका प्राय इसी प्रकार विनोद होते है॥२६॥

बाङ्गला—अथवा विरहेर उৎपत्ति-दिन हइते ताहार शेष दिन पर्य्यन्तेर अवशिष्ट मासगुलिके देहलीरक्षित पुष्पसमूह भूतले स्थापन-

सव्यापारामहनि न तथा पीड़येन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते।
मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनिशयनां सौधवातायनस्थः ॥२७॥

পূর্ব্বক গণনা করিতেছেন; কিংবা মনে মনে চুম্বনাদি ব্যবহার অনুভব করতঃ আমার সঙ্গমসুখ আস্বাদন করিতেছেন (ইহার যে কোন অবস্থায় প্রিয়তমা তোমার দৃষ্টিপথে পতিত হইবেন)। কারণ, রমণীগণের পতিবিচ্ছেদের সময় প্রায়ই এইরূপ সে দুঃখ নিবারণের উপায় হইয়া থাকে ॥২৬॥

**अन्वयः**—मद्वियोगः अहनि सव्यापारां तथा न पीड़येत् रात्रौ निर्विनोदां ते सखीं गुरुतरशुचं शङ्के, उन्निद्रां अवनिशयनां साध्वीं तां मत्सन्देशैः अलं सुखयितुं निशीथे सौधवातायनस्थः (सन्) पश्य ॥२७॥

**चञ्चला**—सव्यापारामिति। मद्वियोगो मया सार्द्धमात्मनो विच्छेदः अहनि दिवसे, व्यापारैः पूर्व्वोक्तवलिकर्म्मादिभिः सहेति ताम्, तथा रात्रिवत् न पीड़येत् पूर्व्वोक्तवलिकर्म्मादिषु व्यापृततया अन्यमनस्कत्वेन पीड़ानुभवावसराभावादिति भावः। किन्तु रात्रौ निर्न्न विद्यते विनोदस्तादृशदुःखनिवारणोपायो यस्यास्ताम्, ते तव सखीं मत्प्रियाम्, गुरुतरा शुक् शोको यस्यास्ताम्, शङ्के मन्ये, कस्मिन्नपि कर्म्मणि अव्यापृततया अन्यमनस्कत्वाभावेन दुःखानुभवावसरादित्याशयः। उत्सृष्टा केवलमच्चिन्तयैव परित्यक्ता निद्रा यया ताम्, तथा अवनिभूतलमेव शयनं

(२७) खेदयेद्विप्रयोगः। सन्नवातायनस्थः। अवनिशयनासन्नवातायनस्थः। इत्येते पाठभेदाः।

शय्या यस्यास्ताम्, पातिव्रात्यनियमरक्षार्थमिति भावः, साध्वीं पतिव्रताम् अतएवाभिसाराय अन्यत्र गमनाशङ्का न कार्य्येति भावः। तां मत्प्रियाम्, मत्सन्देशैर्मम वृत्तान्ताभिधानैः, अलमत्यर्थम्, सुखयितुं प्रमोदयितुम्, निशीथे अर्द्धरात्रसमये, सौधवातायनस्थः अट्टालिकागवाक्ष-द्वारस्थितः सन् त्वं पश्य।

अत्र पीड़नाभावं प्रति "सव्यापाराम्" इति पदस्यार्थो हेतुरित्येकं पदार्थहेतुकं काव्यलिङ्गम्, गुरुतरशोकवत्त्वं प्रति च "निर्विनोदाम्" इति पदस्यार्थो हेतुरिति तथैवापरं काव्यलिङ्गम्, इत्युभयोः परस्पर-निरपेक्षतया संसृष्टिः ॥२७॥

**सञ्जीवनी**—सव्यापारामिति। हे सखे! अहनि दिवसे सव्यापारां पूर्वोक्तबलिचित्रलेखनादिव्यापारवतीम्, ते सखीं स्वप्रियां मद्वियोगो मद्विरहः तथा तेन प्रकारेण। "प्रकारवचने थाल्" इति थाल्प्रत्ययः। न पीड़येत् यथा रात्राविति शेषः। किन्तु रात्रौ निर्विनोदां निर्व्यापारां ते सखीं गुरुतरा शुक् यस्यास्तां गुरुतरशुचम् अतिदुर्भरदुःखां शङ्के तर्कयामि। "शङ्का वितर्कभययोः" इति शब्दार्णवः। अतो निशीथे अर्द्धरात्रे उन्निद्रामुत्सृष्टनिद्राम् अवनिरेव शयनं शय्या यस्यास्तां नियमार्थं स्थण्डिलशायिनीं साध्वीं पतिव्रताम्। "साध्वी पतिव्रता" इत्यमरः। अतो नान्यथा शङ्कितव्यमिति भावः। तां त्वत्सखीं मत्-सन्देशैः मद्वार्त्ताभिः अलं पर्य्याप्तं सुखयितुमानन्दयितुं सौधवातायनस्थः सन् पश्य। "सखी धात्री च पितरौ मित्रदूतशुकादयः। सुखयन्तीष्ट-कथनसुखोपायैर्वियोगिनीम् ॥" इति रत्नाकरे। दूतश्चायं मेघ इति भावः। अनेन जागरावस्था उक्ता ॥२७॥

**हिन्दी**—हे सखे! तुम्हारी सखी मेरे वियोगसे दिनमें तथा तापित न होती

आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः ।
नीता रात्रिः क्षण इव मया सार्द्धमिच्छारतैर्या
तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥२८॥

है, यथा उनको मैं गुरुतर शोकातुरा और कार्य्यहीन रात्रिमैं समझता हूं। अतः तुम घरके खिड़कीके ऊपर ठहर कर विशेषप्रकार आनन्दित करनेकेवास्ते मेरी वार्त्तासे बद्ध निद्रा छोड़नेवाली क्षितिकामैं लोटनेवाली सतीको रातमैं दर्शन देवो ॥२७॥

**বাঙ্গালা**—হে সখে! তোমার সখী দিনে নানা কার্য্যে ব্যাপৃত থাকেন বলিয়া আমার বিরহ তাঁহাকে সেরূপ ব্যথিত করিতে পারে না; কিন্তু রাত্রিতে সেরূপ কোন কার্য্য থাকে না বলিয়া, আমার নিমিত্ত তাঁহার অত্যন্ত শোক উপস্থিত হয় ইহা আমি মনে করি। অতএব তুমি অট্টালিকার গবাক্ষদ্বারে থাকিয়া, আমার বৃত্তান্তদ্বারা অত্যন্ত আনন্দিত করিবার জন্য রাত্রি দ্বিতীয় প্রহরের সময় নিদ্রারহিতা ভূতল-শয়িতা সেই পত্নীকে দর্শন করিবে ॥২৭॥

**अन्वयः**—आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां प्राचीमूले कलामात्रशेषां हिमांशोः तनुं इव (स्थितां) मया सार्द्धं इच्छारतैः या रात्रिः क्षण इव नीता उष्णैः अश्रुभिः विरहमहतीं तां एव यापयन्तीं (तां पश्य) ॥२८॥

**चञ्चला**—आधीति। आधिना विरहजनितया मनोव्यथया, क्षामां क्षीणदेहाम्, विरहशयने विरहकालोपयुक्तायां पत्रपलादिनिर्म्मित-शय्यायाम्, सन्निषण्णम् अवस्थितम् एकं पार्श्वं यस्यास्ताम्, अतएव प्राचीमूले पूर्वस्या दिशो निम्नभागे, कलामात्रम् एकैका कला शेषः

(२८) सन्निकीर्णैकपार्श्वां। क्षणमिव। विरहजनितैः। इति पाठान्तराणि।

अवशिष्टं यस्यास्ताम्, हिमांशोश्चन्द्रस्य, तनुं मूर्त्तिमिव स्थिताम्। कृष्णचतुर्द्दश्याश्चन्द्रतनुत्वज्ञापनार्थं प्राचीमूल इत्युक्तम्; तदैव तस्याः प्रभातकाले प्राचीमूले दर्शनात्। मया सार्द्धम्, इच्छारतैः इच्छानुसारेण रमणैः, या रात्रिः चण इव अत्यल्पसमय इव, नीता अतिवाहिता, उष्णैरश्रुभिः, विरहमहतीं विच्छेदवशात् महत्तया प्रतीयमानाम्, तामेव तज्जातीयामेव रात्रिम्, यापयन्तीम् अतिवाहयन्तीम्, तां पश्येति पूर्वेणान्वयः।

अत्र पूर्वार्द्धे श्रौतोपमालङ्कारः॥२८॥

सञ्जीवनी—पुनस्तामेव विशिनष्टि—आधिक्षामामित्यादिभिश्चतुर्भिः। आधिना मनोव्यथया क्षामां कृशाम्। "पुंस्याधिर्मानसी व्यथा" इत्यमरः। क्षायतेः कर्त्तरि क्तः। "क्षायो मः" इति निष्ठातकारस्य मकारः। विरहे शयनं तस्मिन् विरहशयने पल्लवादिरचित इत्यर्थः, सन्निषण्णमेकं पार्श्वं यस्यास्ताम्। अतएव प्राच्याः पूर्वस्या दिशो मूले उदयगिरिप्रान्त इत्यर्थः। प्राचीग्रहणं क्षीणावस्थाद्योतनार्थम्। मूलग्रहणं दृश्यतार्थम्। कलामात्रं कलैव शेषो यस्यास्तां हिमांशोस्तनुं मूर्त्तिमिव स्थिताम्। तथा या रात्रिर्मया सार्द्धम्, इच्छया कृतानि रतानि तैः। शाकपार्थिवादित्वान्मध्यपदलोपी समासः। चण इव नीता यापिता, तां तज्जातीयामेव रात्रिं विरहेण महतीं महत्त्वेन प्रतीयमानाम्, उष्णैरश्रुभिः यापयन्तीम्। यातेर्ण्यन्तात् शतृप्रत्ययः। "अर्त्तिह्री" इत्यादिना पुगागमः। स एव कालः सुखिनामल्पः प्रतीयते दुःखिनान्तु विपरीत इति भावः। एतेन कार्श्यावस्थोक्ता॥२८॥

हिन्दी—मनोवेदनासे कृश, विरहशयनमें एकपार्श्व करके सोभी हुई, अतः पूर्वदिशामें कलामात्रही अवशिष्ट है जिनका ऐसी चन्द्रकी देह माफिक हुई है। जो

पादानिन्दोरमृतशिशिरान् जालमार्गप्रविष्टान्
पूर्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव ।
चक्षुःखेदात् सलिलगुरुभिः पक्ष्मभिश्छादयन्तीं
साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥२৯॥

मेरे साथ इच्छामरणसे क्षणतुल्य रात्रि व्यतीत किया है; सो आज विरहसे समर्थ्या हुआ रात्रिको गरम आंसुवोंसे यापन करती है। इस अवस्थानमें तुम उनको देखोगे ॥२८॥

**বাঙ্গালা**—মনের দুঃখে প্রিয়তমার দেহ ক্ষীণ হইয়া গিয়াছে; তিনি বিয়োগশয্যায় এক পার্শ্বে শয়িত রহিয়াছেন; সুতরাং পূর্ব্বদিকের নীচভাগে এক কলামাত্র অবশিষ্ট চন্দ্রের মূর্ত্তির ন্যায় তিনি তথায় অবস্থান করিতেছেন এবং আমার সহিত ইচ্ছানুসারে বিহারদ্বারা যে রাত্রি ক্ষণকালের ন্যায় অতিবাহিত করিতেন, বিরহ-বিশালা সেই জাতীয় রাত্রিকেই এখন উষ্ণ অশ্রুজলে অতিবাহিত করিতেছেন ( এই অবস্থায় তাঁহাকে দেখিতে পাইবে।) ॥২৮॥

**अन्वयः**—जालमार्गप्रविष्टान् अमृतशिशिरान् इन्दोः पादान् पूर्वप्रीत्या अभिमुखं गतं तथैव सन्निवृत्तं चक्षुःखेदात् सलिलगुरुभिः पक्ष्मभिः छादयन्तीं साभ्रे अह्नि न प्रबुद्धां न सुप्तां स्थलकमलिनीं इव ( स्थितां तां पश्य ) ॥२९॥

---

२९ श्लोकात् परं क्वचिदयमधिकः श्लोकः—

अन्विष्टव्यामवनिशयने सन्निकीर्णैकपार्श्वां
तत्पर्य्यस्तप्रगलितलवैश्छिन्नहारैरिवास्रैः ।
भूयो भूयः कठिनविषमां सारयन्तीं कपोलात्
आमोक्तव्यामयमितनखेन कवेणीं करेण ॥

चञ्चला—पादानिति। जालमार्गेण गवाक्षरन्ध्रेण प्रविष्टान्, अमृतवत् शिशिराः शीतलास्तान्, इन्दोश्चन्द्रस्य, पादान् किरणान्, पूर्वप्रीत्या सम्मेलनकालीनप्रीतिप्रदत्वस्मरणेनेत्यर्थः, अभिमुखं गतम्, तथैव सन्निवृत्तं पुनः प्रतिनिवृत्तम्, प्रीतिवैपरीत्येन उद्दीपकतया शतधा दुःखजनकत्वादिति भावः। चक्षुर्नयनम्, खेदात् मनोदुःखात् सलिलगुरुभिः अश्रुयुक्ततया भारवद्भिः पक्ष्मभिर्लोमभिः, छादयन्तीम् आवृण्वतीम्, अतएव साभ्रे समेघे, अह्नि दिवसे, न प्रबुद्धां सूर्यकिरणालाभात् अनधिकं प्रस्फुटिताम्, न सुप्तां दिवसवर्त्तित्वात् असम्यङ्मुद्रिताम्, स्थलकमलिनीमिव स्थितां तां पश्येति पूर्वेणान्वयः, अस्याश्चक्षुषः स्थलकमलस्य च समानावस्थावत्त्वादिति भावः।

अत्र "अमृतशिशिरान्" इति, समासगता लुप्तोपमा, चतुर्थपादे च श्रौती उपमा, इत्युभयोः परस्परनिरपेक्षतया संसृष्टिः। द्वितीयपादे च पूर्ववत् प्रीतिलाभाशया अभिमुखं गतम्, सा प्रीतिस्तु दूर एवासीत्, प्रत्युत दुःखमेवेति "यद्वारब्धस्य वैफल्यम्" इत्याद्युक्तलक्षणो विषमालङ्कारो व्यज्यत इति वस्तुना अलङ्कारध्वनिः ॥२९॥

सञ्जीवनी—पादानिति। जालमार्गप्रविष्टान् गवाक्षविवरगतान् अमृतशिशिरान् इन्दोः पादान् रश्मीन्, पूर्वप्रीत्या पूर्वस्नेहेन पूर्ववदानन्दकरा भविष्यन्तीति बुद्ध्येति भावः। अभिमुखं यथा तथा गतम्, तथैव सन्निवृत्तं यथा गतं तथैव प्रतिनिवृत्तम्, तदा तेषामतीव दुःसहत्वादिति भावः। चक्षुर्दृष्टिम्, खेदात् सलिलगुरुभिः अश्रुदुर्भरैः पक्ष्मभिश्छादयन्तीम्, अतएव साभ्रे दुर्दिने अह्नि दिवसे न प्रबुद्धां मेघावरणादविकसितां न सुप्ताम् अहरित्यमुकुलिताम्। उभयत्रापि नञर्थस्य नशब्दस्य सुप्सुपेति समासः। स्थलकमलिनीमिव स्थिताम्। एतेन विषयद्वेषाख्या षष्ठी दशा सूचिता ॥२९॥

निश्वासेनाधरकिशलयक्लेशिना विक्षिपन्तीं
शुद्धस्नानात् परुषमलकं नूनमागण्डलम्बम् ।
मत्सम्भोगः कथमुपनयेत् स्वप्नजोऽपीति निद्राम्
आकाङ्क्षन्तीं नयनसलिलोत्पीड़रुद्धावकाशाम् ॥३०॥

हिन्दी—गवाक्षमार्गसे प्रविष्ट अमृतकी तरह ठण्ढा चन्द्रकिरणके उपर पूर्व्व-प्रीतिसे (जब मैं था) आकर फिर भत्वसे लौट आया। अतः दुःखसे आंसुवोंसे भरे हुए नेत्रलोमों करके चक्षुको आच्छादन करती हुयी, उनको तुम देखोगे; जिस प्रकार जैसे बादलके दिनमें मानों खिलीभी नहीं संकुचित भी नहीं स्थल-कमलिनी है ॥२९॥

বাঙ্গালা—গবাক্ষরন্ধ্র দিয়া গৃহমধ্যে প্রবিষ্ট অমৃতের ন্যায় শীতল চন্দ্রের কিরণগুলির প্রতি পূর্ব্বের প্রীতিবশতঃ যেমন অতি সুখে গমন করিল, তেমনই আবার ফিরিল; এইরূপ নয়নকে দুঃখবশতঃ অশ্রু-ভারাক্রান্ত লোমদ্বারা আবৃত করিতেছেন; সুতরাং মেঘাচ্ছন্ন দিবসে অবিকসিত অথ চ অমুদ্রিত স্থলপদ্মিনীর ন্যায় (সেই প্রিয়তমাকে দেখিবে।) ॥২৯॥

अन्वयः—अधरकिशलयक्लेशिना निश्वासेन शुद्धस्नानात् परुषं नूनं आगण्डलम्बं अलकं विक्षिपन्तीं (तां पश्य), स्वप्नजः अपि कथं उपनयेत् इति नयनसलिलोत्पीड़-रुद्धावकाशां निद्रां आकाङ्क्षन्तीं ॥३०॥

चञ्चला—निश्वासेनेति। अधरकिशलयम् ओष्ठपल्लवं क्लिश्नातीति तेन अन्तःसन्तापादुष्णेनेत्यर्थः, निश्वासेन, शुद्धस्नानात् तैलाभ्यञ्जनं विनैव स्नानकरणात्, परुषं रूक्षम्, अतएव नूनं निश्चितम्, आगण्ड-

(३०) मत्संयोगः। कथमपि भवेत्। क्षणमपि भवेत्। इति पाठभेदाः।

लम्बं कपोलपर्य्यन्तपातिनम्, अलकं चूर्णकुन्तलं स्खलितकेशपाशम्, विक्षिपन्तीं सञ्चालयन्तीं तां पश्येति पूर्वेणान्वयः। तथा स्वप्नजोऽपि मत्सम्भोगः, कथम् उपनयेत् उपस्थितो भवेत्, इति आशया, नयनसलिलोत्पीड़ेन अश्रुराशिना रुद्धो निवारितः अवकाशः स्थानं यस्यास्तां तथोक्ताम्, निद्राम्, आकाङ्क्षन्तीम्, निद्रायाः स्वप्नजनकत्वादिति भावः।

अत्र निश्वासवायुना असम्बद्धस्य किशलयस्य क्लेशजननासम्भवेन अधरः किशलयमिवेत्युपमितसमासाश्रयणात् समासगता लुप्तोपमालङ्कारः। तेन च अधरस्य निरतिशयकोमलता व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

अस्य द्वितीयार्द्धानुरूपः श्लोको यथा शाकुन्तले—"प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः। वाष्पस्तु न ददात्येनां द्रष्टुं स्वप्नगतामपि॥" ॥३०॥

सञ्जीवनी—निश्वासेनेति। शुद्धस्नानात् तैलादिरहितस्नानात् परुषं कठिनस्पर्शं नूनम् आगण्डलम्बम्। सुप् सुपेति समासः। अलकं चूर्णकुन्तलान्। जातावेकवचनम्। अधरकिशलयं क्लेशयति क्लिश्नातीति वा तेन तथोक्तेन उष्णेनेत्यर्थः। क्लिश्यतेर्ण्यन्तात् क्लिश्नातेरण्यन्ताद्वा ताच्छील्ये णिनिः। निश्वासेन विक्षिपन्तीं चालयन्तीम्, तथा स्वप्नजोऽपि स्वप्नावस्थाजन्योऽपि, साक्षात्सम्भोगासम्भवादिति भावः। मत्सम्भोगः कथं केनापि प्रकारेण उपनयेदागच्छेत् इति आशयेनेति शेषः, इति नैवोक्तार्थत्वादप्रयोगः। प्रयोगे चापौनरुक्त्यमित्यालङ्कारिकाः। प्रार्थनायां लिङ्। नयनसलिलोत्पीड़ेन अश्रुप्रवृत्त्या रुद्धावकाशाम् आक्रान्तस्थानां दुर्लभामित्यर्थः, निद्रामाकाङ्क्षन्तीं स्वप्नहेतुत्वादिति भावः। अत्राश्रुविसर्जनेन लज्जात्यागो व्यज्यते ॥३०॥

हिन्दी—हद स्नानसे कर्कश, निश्चित कपोलदेश तक लम्बित केशको अधर

आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा
शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम्।
स्पर्शक्लिष्टामयमितनखेनासकृत् सारयन्तीं
गण्डाभोगात् कठिनविषमामेकवेणीं करेण ॥३१॥

पल्लवके क्लेशदायी निश्वाससे फेंकती हुईको, स्वप्नसे भी मेरे सम्भोग किस प्रकार होगा— इसी चिन्तासे आंसुवोंसे दुर्लभ निद्राको चाहती हुईको, तुम देखोगे ॥३०॥

**বাঙ্গালা**—তৈল না দিয়া স্নান করায় রুক্ষ, অতএব নিশ্চয়ই গালের উপরে পতিত খোলা চুলগুলিকে ওষ্ঠপল্লবের ক্লেশজনক নিশ্বাস-বায়ুদ্বারা সঞ্চালিত করিতেছেন এবং স্বপ্নেও আমার সম্ভোগ কিভাবে উপস্থিত হইবে—এই আশায় নিদ্রা কামনা করিতেছেন কিন্তু অশ্রুজল-সমূহ সে নিদ্রার স্থান অবরুদ্ধ করিতেছে—(এই অবস্থায় আমার সেই প্রিয়তমাকে দেখিবে।) ॥৩০॥

**अन्वय:**—आद्ये विरहदिवसे दाम हित्वा या शिखा बद्धा शापस्य अन्ते (सति) विगलितशुचा मया उद्वेष्टनीयां स्पर्शक्लिष्टां कठिनविषमां तां एकवेणीं अयमित-नखेन करेण गण्डाभोगात् असकृत् सारयन्तीं (तां पश्य) ॥३१॥

**चञ्चला**—आद्य इति। आद्ये प्रथमे, विरहदिवसे, दाम पुष्प-मालाम्, हित्वा परित्यज्य, या शिखा वेणी बद्धा, शापस्य शापकालस्य अन्ते अवसाने सति, विगलितशुचा विगतविरहशोकेन मया, उद्वेष्टनीयां मोचनीयाम्, स्पर्शेनैव क्लिष्टां मूलदेशावच्छेदे क्लेशविशिष्टाम्, तैलाभ्यञ्जना-भावेन रूक्षचर्म्मवर्त्तित्वादिति भाव:, कठिनां तैलसम्बन्धाभावात्

(३१) या मयोद्वेष्टनीया। या मयोन्मोचनीया। अपमितनखेन। कठिन-विषमाम्। इति पाठान्तराणि।

अकोमला चासौ विषमा उच्चावचा चेति ताम्, ताम्, एकवेणीम् एक-मालीभूतां वेणीम्, अयमिता अच्छिन्नाग्रा नखा यस्य तेन तादृशेन, करेण हस्तेन, गण्डाभोगात् विस्तृतकपोलदेशात्, असकृत् वारं वारम्, सारयन्तीम् अपसारयन्तीम्, तां पश्येति पूर्वेणान्वयः। "वियोगे मलिना कृशा" "एकवेणीधरं शिरः" इत्यादि विरहिणीनियमोऽत्रानुसन्धेयः।

अत्र उद्वेष्टनीयशब्दस्य वेष्टनयोग्यार्थस्यैव वाचकतया मोचनयोग्यार्थस्य अवाचकत्वादवाचकत्वदोषः, स च "तां मया मोचनीयाम्" इति पाठेनैव समाधेयः ॥२१॥

**सञ्जीवनी**—आद्य इति। आद्ये विरहदिवसे दाम मालां हित्वा त्यक्त्वा या शिखा बद्धा ग्रथिता शापस्यान्ते विगलितशुचा वीतशोकेन मया उद्वेष्टनीयां मोचनीयां स्पर्शक्लिष्टां स्पर्शे सति मूलकेशेषु सव्यथा-मित्यर्थः, कठिना च सा विषमा निम्नोन्नता च ताम्। खञ्जकुब्जादिव-दन्यतरस्य प्राधान्यविवक्षया "विशेषणं विशेष्येण बहुलम्" इति समासः। एकवेणीम् एकीभूतवेणीम्, "पूर्वकाल—" इत्यादिना तत्-पुरुषः। तां शिखाम्, अयमिता अकर्त्तितोपान्ता नखा यस्य तेन करेण गण्डाभोगात् कपोलविस्तारात् असकृत् मुहुर्मुहुः सारयन्तीम् अप-सारयन्तीं तां पश्येति पूर्वेण सम्बन्धः। असकृत्सारणात् चित्तविभ्रम-दशा सूचिता ॥२१॥

**हिन्दी**—पहले मेरे जानेके दिनमें माला त्याग कर जो शिखा बांधी है अभिशापके अन्तमें जिनको शोकहीन मैं मोचन करूंगा, स्पर्शमें दुःखदायी, कठिन और निम्नोन्नत वह एकवेणीको नख नहीं कटा हुआ जिनका ऐसे हाथसे हटाती हुई उनको तुम देखोगे ॥२१॥

**বাঙ্গালা**—প্রিয়তমা, বিরহের প্রথম দিন ফুলের মালা ত্যাগ করিয়া

সা সন্ন্যস্তাভরণমবলা পেশলং ধারয়ন্তী
শয্যোৎসঙ্গে নিহিতমসকৃদ্দুঃখদুঃখেন গাত্রম্।
ত্বামপ্যস্রং নবজলময়ং মোচয়িষ্যত্যবশ্যং
প্রায়ঃ সর্ব্বো ভবতি করুণাবৃত্তিরার্দ্রান্তরাত্মা ॥৩২॥

যে বেণী বন্ধন করিয়াছেন, শাপের অবসান হইলে পর আমি শোক-বিহীন হইয়া যে বেণীর বন্ধন মুক্ত করিব; স্পর্শ করামাত্র মূলে বেদনাকারিণী এবং রূক্ষ ও অসমান একমাত্র সেই বেণীকে অচ্ছিন্ননখ হস্তদ্বারা গণ্ডদেশ হইতে অপসারিত করিতেছেন (এই অবস্থায় তাঁহাকে দেখিবে।) ॥৩১॥

অন্বয়ঃ—অবলা সা সন্ন্যস্তাভরণং দুঃখদুঃখেন অসকৃৎ শয্যোৎসঙ্গে নিহিতং পেশলং গাত্রং ধারয়ন্তী (সতী) অবশ্যং ত্বাং অপি নবজলময়ং অস্রং মোচয়িষ্যতি, প্রায়ঃ আর্দ্রান্তরাত্মা সর্ব্বঃ করুণাবৃত্তিঃ ভবতি ॥৩২॥

চঞ্চলা—সেতি। অবলা নিরতিশয়বিরহযাতনয়া দুর্ব্বলীভূতা, কৃশেতি চ গম্যতে, সা মম প্রিয়তমা, সন্ন্যস্তানি বিলাসানাবশ্যকত্বাৎ অত্যন্তকৃশাঙ্গত্বাচ্চ পরিত্যক্তানি আভরণানি যস্য তৎ, দুঃখদুঃখেন দারুণবিরহকষ্টেন, অসকৃৎ বারং বারম্, শয্যায়া উৎসঙ্গে ক্রোড়ে উপরীত্যর্থঃ, নিহিতং স্থাপিতম্, পেশলং মনোহরং কোমলং বা, গাত্রং দেহম্, ধারয়ন্তী অবস্থাপয়ন্তী সতী, অবশ্যং নিশ্চিতমেব, ত্বাং মেঘমপি, নবজলময়ং নূতনবৃষ্টিজলাত্মকম্, অস্রম্ অশ্রু, মোচয়িষ্যতি পরিত্যাজয়িষ্যতি। তথা চ প্রায়ো বাহুল্যেন, আর্দ্রঃ স্নেহবত্ত্বাৎ মেঘপক্ষে তু সজলত্বাৎ স্তিমিতঃ অন্তরাত্মা অন্তঃকরণম্ অভ্যন্তরদেশশ্চ যস্য সঃ

(৩২) পেলবং ধারয়ন্তী। কোমলং ধারয়ন্তী। জললবময়ং। ইতি পাঠভেদাঃ।

तादृशः, सर्व्वो जनः, करुणा दयैव वृत्तिर्व्यापारो यस्य स तथोक्तो भवति। अतस्त्वदीयदुःखदर्शनेन करुणोदयात् तव नवजलमयाश्रुमोचनं सम्भवपरमेवेति भावः।

अत्र शय्योत्सङ्गे असकृद्गात्रधारणं प्रति अबलापदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, नवजलमयमिति मयट्प्रत्ययेन प्रकृतं नवजलरूपमुपमेयं प्रतिषिध्य अस्ररूपोपमानस्थापनादपह्नुतिः, "विराजति व्योमवपुः पयोधिस्तारामयास्तत्र च फेनभङ्गाः" इति साहित्यदर्पणोदाहृतवत्, तथा सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ॥३२॥

सञ्जीवनी—सेति। अबला दुर्बला सन्नस्ताभरणं कृशत्वात् परित्यक्ताभरणम् असकृदनेकशः दुःखदुःखेन दुःखप्रकारेण। "प्रकारे गुणवचनस्य" इति द्विर्भावः। शय्योत्सङ्गे निहितं पेशलं मृदुलं गात्रं शरीरं धारयन्ती वहन्ती। अनेनात्यन्ताशक्त्या मूर्च्छावस्था सूच्यते। सा त्वत्सखी त्वामपि नवजलमयं नवाम्बुरूपम् अस्रं वाष्पम् अवश्यं सर्व्वथा मोचयिष्यति। "द्विकर्म्मसु पचादीनां चोपसंख्यानमिष्यते" इति मुचेः पचादित्वात् द्विकर्म्मकत्वम्। तथाहि प्रायः प्रायेण आर्द्रान्तरात्मा मृदुहृदयः, मेघस्तु द्रवान्तःशरीरः, सर्वः करुणा करुणामयी वृत्तिरन्तःकरणवृत्तिर्यस्य स करुणावृत्तिर्भवति। अस्मिन्नवसरे सर्वथा शीघ्रं त्वया गन्तव्यम् अनन्तरदशापरिहारायेति सन्दर्भाभिप्रायः।

ननु किमिदमादिमां चक्षुःप्रीतिमुपेक्ष्य अवस्थान्तराण्येव तत्रभवान् कविराहृतवान्? उच्यते—"सम्भोगो विप्रलम्भश्च द्विधा शृङ्गार उच्यते। संयुक्तयोस्तु सम्भोगो विप्रलम्भो वियुक्तयोः॥ पूर्वानुरागमानाख्यप्रवासकरुणात्मना। विप्रलम्भश्चतुर्द्धात्र प्रवासस्तत्र च त्रिधा॥ कार्य्यतः

जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मात्
इत्थम्भूतां प्रथमविरहे तामहं तर्कयामि ।
वाचालं मां न खलु सुभगम्मन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद्भ्रातरुक्तं मया यत् ॥३३।

सम्भ्रमात्क्षापादस्मिन् काव्ये तु शापजः। प्रागसङ्गतयोर्यूनोः सति पूर्वानुरञ्जने ॥ चक्षुःप्रीत्यादयोऽवस्था दश स्युस्तत्क्रमो यथा। दृङ्मनः-सङ्गसङ्कल्पा जागरः कृशता रतिः ॥ ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्ग-दशा दश। पूर्वसङ्गतयोरेव प्रवास इति कारणात् ॥ न तत्रापूर्ववत् चक्षुःप्रीतिरुत्पत्तिमर्हति। हृत्सङ्गस्य तु सिद्धस्याप्यविच्छेदोऽत्र वर्ण्यते ॥ अन्यथा पूर्ववद्वाच्या इति तावद्व्यवस्थितिः। वैयर्थ्यादादिमां हित्वा वैरस्यादन्तिमां तथा ॥ हृत्सङ्गादीनिहाचष्ट कविरष्टाविति स्थितिः। मत्सादृश्यं लिखन्तीति पद्येऽस्मिन् प्रतिपादिता ॥ चक्षुःप्रीतिरिति प्रोक्तं निरन्तरक्षतावननम्। चक्षुःप्रीतिर्भवेच्चित्रे ब्यदृष्टचरदर्शनात् ॥ यथा मालविकारूपमग्निमित्रस्य पश्यतः। प्रोषितानान्तु भर्तॄणां क्व दृष्टा-दृष्टपूर्वता ॥ अथ तत्रापि सन्देहे स्वकलत्राणि पृच्छतु। किं भर्तृप्रत्यभिज्ञा स्यात् किं वैदेशिकभावना। प्रवासादागते स्वस्मिन्नित्यलं कलहैर्वृथा ॥" ॥३२॥

**हिन्दी**—वह बाला दुर्बलताके कारण त्यक्ताभरण, अतीव दुःखसे शय्याकी क्रोड़में निहित और मृदुल गात्रकी धारण करती हुई तुमको नवजलमय आंसू अवश्य छोड़ावेगी। (क्योंकि) प्रायशः आर्द्र हृदय जन करुणापरायण होते हैं ॥३२॥

**বাঙ্গালা**—দুর্ব্বলদেহা আমার সেই প্রিয়তমা, আভরণবিহীন

(३३) सकलमचिरात् इति पाठभेदः।

কোমল দেহখানিকে, দারুণদুঃখবশতঃ বারংবার শয্যার উপরে স্থাপন-পূর্ব্বক ধারণকরতঃ অবশ্যই তোমাকেও নূতন বৃষ্টিরূপ অশ্রু মোচন করাইবেন। কারণ, আর্দ্রহৃদয় প্রায় সকলেই দয়াপরায়ণ হইয়া থাকেন ॥৩২॥

**अन्वयः**—( हे ) भ्रातः! तव सख्याः मनः मयि सम्भृतस्नेहं जाने, अस्मात् प्रथमविरहे तां इत्थम्भूतां अहं तर्कयामि, सुभगम्मन्यभावः मां वाचालं न करोति खलु, मया यत् उक्तं तत् निखिलं अचिरात् ते प्रत्यक्षं ( भवेत् ) ॥३३॥

**चञ्चला**—अथ भवतः प्रियतमाया ईदृशावस्थाप्राप्तिनिश्चये को हेतुरित्याह जाने इति। हे भ्रातः! तव सख्या मत्प्रियतमाया इत्यर्थः, मनः, मयि, सम्भृतः सम्यग्धृतः स्नेहोऽनुरागो येन तत् तादृशम्, जाने अवगच्छामि; अस्मात् कारणात् प्रथमविरहे आदिम-विच्छेदे, द्वितीयादिविरहे तु तद्दुःखस्य सोढ़पूर्वत्वादनीदृगवस्थैव सम्भाव्येति प्रथमपदप्रयोगस्याभिप्रायः, तां मम प्रियतमाम्, इत्थम्भूतां "शिशिरमथितां पद्मिनीं वान्यरूपाम्" इत्याद्युक्तावस्थाम्, अहं तर्कयामि सम्भावयामि। नन्वात्मनः सुभगाभिमानित्वादेवं तर्कयसि, न पुनर्वस्तुत एव सा इत्थम्भूता इत्याह वाचालमिति। सुभगं पत्नीप्रियमात्मानं मन्यत इति सुभगम्मन्यस्तस्य भावः सौन्दर्य्यादिगुणवशादात्मनः पत्नीप्रिय-त्वाभिमानितेत्यर्थः, मां वाचालं मिथ्यात्वनिबन्धननिन्दितबहुभाषिणम्, न करोति खलु वाचालतया नैव प्रकाशयतीत्यर्थः, अपि तु सत्यवादिन-मेव करोतीति भावः। तथा च मया यदुक्तं तत् निखिलं सर्वमेव, अचिरात् शीघ्रमेव, ते तव प्रत्यक्षं भवेदिति शेषः।

अत्र तृतीयचरणार्थं प्रति चतुर्थचरणगतवाक्यार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥३३॥

**सञ्जीवनी**—नन्वीदृशीं दशामापन्नेति कथं त्वया निश्चितमत आह

रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्।
त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥३४॥

जाने इति। हे मेघ! तव सख्या मनः मयि सम्भृतस्नेहं सञ्चितानुरागं जाने, अस्मात् स्नेहज्ञानकारणात् प्रथमविरहे, प्रथमग्रहणं दुःखातिशयद्योतनार्थम्। तां त्वत्सखीम्, इत्थम्भूतां पूर्वोक्तावस्थामापन्नां तर्कयामि। ननु सुभगमानिनामेष स्वभावो यदात्मनि स्त्रीणामनुरागप्रकटनं तत्राह वाचालमिति। सुभगमात्मानं मन्यत इति सुभगम्मन्यः। "आत्ममाने खश् च" इति खश् प्रत्ययः, "अरुर्द्विषत्—" इत्यादिना मुमागमः। तस्य भावः सुभगम्मन्यभावः सुभगमानित्वं मां वाचालं न करोति खलु सौन्दर्य्याभिमानान्न प्रलपामीत्यर्थः। "स्याज्जल्पकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्" इत्यमरः। "आलजाचटौ बहुभाषिणि" इत्यालच् प्रत्ययः। किन्तु हे भ्रातः! मयोक्तं यत् "आधिक्षामाम्—" इत्यादि तत् निखिलं सर्वम् अचिरात् शीघ्रमेव ते तव प्रत्यक्षं भविष्यतीति शेषः ॥३३॥

हिन्दी—हे मेघ! तुम्हारी सखीके मन मुझमें अत्यन्त आसक्त है, यह मैं जानता हुं; अतः पहेला वियोगमें उनकी इस अवस्थापन्न मैं समझता हुं, सुन्दरत्वाभिमान मुझको अधिक वाक्य कहने में नहीं जं.चाता है। (क्योंकि) मेरे सब कथन तुम्हारे शीघ्रही प्रत्यक्ष ही जावेगा ॥३३॥

বাঙ্গালা—হে মেঘ! আমি জানি—তোমার সখীর মনে আমার

(३४) मीनक्षोभाकुल···। इति पाठान्तरम्।

প্রতি অনুরাগ সঞ্চিতই রহিয়াছে; এই কারণেই আমি প্রথম বিচ্ছেদে তাঁহাকে এইরূপ বলিয়া মনে করিতেছি। এই সৌভাগ্যের অভিমান আমাকে বাচাল করিয়া তুলিতেছে না; কারণ, ভাই! আমি যাহা বলিলাম, অচিরকালমধ্যেই সে সকল তোমার প্রত্যক্ষ হইবে ॥৩৩॥

**অন্বয়ঃ**—অলকৈঃ রুদ্ধাপাঙ্গপ্রসরং অঞ্জনস্নেহশূন্যং অপি চ, মধুনঃ প্রত্যাদেশাৎ বিস্মৃতভ্রূবিলাসং ত্বয়ি আসন্নে (সতি) উপরিস্পন্দি মৃগাক্ষ্যাঃ নয়নং মীনক্ষোভাৎ চলকুবলয়শ্রীতুলাং এষ্যতি ইতি শঙ্কে ॥৩৪॥

**চঞ্চলা**—রুদ্ধেতি। অলকৈশ্চূর্ণকুন্তলৈঃ, রুদ্ধ আবৃতঃ অপাঙ্গপ্রসরঃ প্রান্তক্রিয়া যস্য তৎ, অঞ্জনস্নেহেন কজ্জললেপনজনিতসরসতয়া শূন্যম্, অপি চ অন্যচ্চ, মধুনো মদ্যস্য প্রত্যাদেশাৎ প্রত্যাখ্যানাৎ পরিত্যাগাৎ, বিস্মৃতঃ অননুষ্ঠিত ইত্যর্থঃ ভ্রূবিলাসো যেন তৎ, তথা ত্বয়ি মেঘে আসন্নে নিকটবর্ত্তিনি সতি, উপরি ঊর্দ্ধভাগে স্পন্দত ইতি উপরিস্পন্দি, মৃগাক্ষ্যা হরিণনয়নায়াঃ প্রিয়ায়া নয়নং বামং নেত্রম্, মীনক্ষোভাৎ মৎস্য-সঞ্চলনাৎ চলং কম্পিতং যৎ কুবলয়ং নীলোৎপলং তস্য শ্রিয়া শোভয়া তুলাং তুল্যতাম্, এষ্যতি প্রাপ্স্যতি, ইতি শঙ্কে মন্যে।

অত্র চতুর্থচরণে অর্থানুসন্ধানেনৌপম্যজ্ঞানাদার্থী উপমালঙ্কারঃ। তথা বামং নয়নমিতি নয়নবিশেষে বক্তব্যে নয়নমিতি সামান্যাভিধানাৎ বিশেষে অবিশেষাখ্যদোষঃ। প্রথমপাদে "অঞ্জনস্নেহশূন্যম্" ইত্যত্র 'অঞ্জনত্যাগি শঙ্কে' ইতি পঠিত্বা 'উপরিস্পন্দি বামং মৃগাক্ষ্যাঃ' ইতি পাঠেন তৎসমাধানং বিধেয়ম্ ॥৩৪॥

**সঞ্জীবনী**—রুদ্ধেতি। অলকৈ রুদ্ধা অপাঙ্গয়োঃ প্রসরা যস্য তৎ তথোক্তম্ অঞ্জনস্নেহশূন্যং স্নিগ্ধাঞ্জনরহিতম্, অপি চ কিঞ্চ, মধুনো মদ্যস্য প্রত্যাদেশান্নিরাকরণাৎ পরিত্যাগাদিত্যর্থঃ। "প্রত্যাদেশো নিরাকৃতিঃ" ইত্যমরঃ। বিস্মৃতো ভ্রূবিলাসো ভ্রূভঙ্গো যেন তৎ তথোক্তম্। নয়নস্য

वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयैः
मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या।
सम्भोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ॥३५॥

---

कटाक्षापाङ्गप्रसरत्वादिकं विरहसमुत्पन्नमिति भावः। त्वयि आसन्ने सति स्वकुशलवार्त्ताश्रवणे इति शेषः, उपरि ऊर्द्ध्वभागे स्पन्दते स्फुरतीति उपरिस्पन्दि। तथा च निमित्तनिदाने—"स्पन्दान्मूर्द्ध्नि छत्रलाभं भाले पट्टं शुभं भ्रुवि। इष्टप्राप्तिं दृशोरूर्द्ध्वमपाङ्गे हानिमादिशेत्॥" इति। मृगाक्ष्यास्त्वत्सख्याः नयनं वाममिति शेषः। "वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिणः। दाने देवादिपूजायां स्पन्देऽलङ्करणेऽपि च॥" इति स्त्रीणां वामभागप्राशस्त्यात्। मीनक्षोभात् मीनचलनात् चलस्य कुवलयस्य श्रिया शोभया तुलां सादृश्यम् एष्यति इति शङ्के तर्कयामि॥३४॥

हिन्दी—स्खलितकेशोंसे रुक गया है कटाक्षकी चलाना जिनका, कज्जलरूप स्नेहपदार्थशून्य और मद्यपान न करनेसे विस्मरण हो गया भ्रूके विलास जिनका तुम्हारे आगमनमें मेरी औरतके उपरदिशामें कम्पनेवाला वह नयन (वाम) मछलीके क्षोभसे चञ्चल कुवलयके माफिक कान्त पावेगा। ऐसा मानता हूं॥३४॥

বাঙ্গালা—খোলা চুলগুলি আসিয়া যে নয়নের অপাঙ্গদেশের কার্য্যকে (কটাক্ষপাতকে) নিরুদ্ধ করিয়াছে, যে নয়ন স্নিগ্ধকজ্জলশূন্য হইয়া রহিয়াছে এবং মদ্যপান পরিত্যাগ করায় যে নয়ন ভ্রূবিলাসবিহীন হইয়া গিয়াছে আর তুমি নিকটবর্ত্তী হইলে যে নয়নের উপরিভাগ

---

(३५) कनककदलीस्तम्भगौरः। इति स्वाप्ततरं पाठान्तरम्।

স্পন্দিত হইবে, হরিণনয়না প্রিয়তমার সেই স্পন্দিত বাম নয়ন, শোভা-দ্বারা মৎস্যের সঞ্চলনবশতঃ চঞ্চল নীলোৎপলের তুলনা প্রাপ্ত হইবে—ইহা আমি মনে করি ॥৩৪॥

**अन्वय:**—मदीयैः कररुहपदैः मुच्यमानः दैवगत्या चिरपरिचितं मुक्ताजालं त्याजितः सम्भोगान्ते च मम हस्तसंवाहनानां समुचितः सरसकदलीस्तम्भगौरः अस्याः वामः ऊरुः चलत्वं यास्यति ॥३५॥

**चञ्चला**—मेघप्रत्यासत्तौ निमित्तान्तरमाह वाम इति। किञ्चेति चार्थः। मदीयैः करुरुहपदैर्नखक्षतचिह्नैः, मुच्यमानो दूरवर्त्तित्वात् परित्यज्यमानः मदीयनखक्षतचिह्नरहित इति तात्पर्य्यम्, दैवगत्या अदृष्टवशेन, चिरपरिचितं परिधाने चिराभ्यस्तम्, मुक्ताजालम् अतीव-शीतलं मौक्तिकमयं काञ्चीदाम, त्याजितो विश्लापितः, नखक्षत-क्षतोष्णताभावेन शीतलोपचारानावश्यकत्वादिति भावः, सम्भोगान्ते सुरतावसाने, मम हस्तसंवाहनानां करमर्द्दनानां समुचितो योग्यः, तथा सरसः अशुष्कत्वादार्द्रः यः कदलीस्तम्भस्तद्वत् गौरः, अस्याः प्रियतमायाः, वाम ऊरुः, चलत्वं स्पन्दनम्, यास्यति प्राप्स्यति, इति च शङ्के इति पूर्व्वेण सम्बन्धः।

अत्र चतुर्थचरणे समासगता लुप्तोपमालङ्कारः ॥३५॥

**सञ्जीवनी**—वाम इति। मदीयैः करुरुहपदैर्नखपदैः। "पुनर्भवः करुरुहो नखोऽस्त्री नखरोऽस्त्रियाम्" इत्यमरः। मुच्यमानः परि-हीयमाणः नखाङ्करहित इत्यर्थः। ऊर्वोर्नखपदास्पदत्वन्तु रतिरहस्ये—"कण्ठ-कक्ष-कुचपार्श्व-भुजोरः-श्रोणिसक्थिषु। नखास्पदमाहुः" इति। चिरपरिचितं चिराभ्यस्तं मुक्ताजालं मौक्तिकसरमयं कटिभूषणं दैवगत्या दैववशेन त्याजितः, सम्प्रति नखपदोष्माभावेन शीतोपचारस्य तस्य वैयर्थ्यादिति भावः। त्यजतेर्ण्यन्तात् कर्म्मणि क्तः। "द्विकर्म्मसु

**तस्मिन् काले जलद! यदि सा लब्धनिद्रासुखा स्या-**
**दन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ।**
**मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्**
**सद्यः कण्ठच्युतभुजलताग्रन्थि गाढ़ोपगूढ़म् ॥३६॥**

---

पचादीनां चोपसंख्यानमिष्यते" इति पचादित्वात् द्विकर्म्मकत्वम्। सम्भोगान्ते मम हस्तसंवाहनानां हस्तेन मर्द्दनानाम्। "संवाहनं मर्द्दनं स्यात्" इत्यमरः। समुचितो योग्यः, सरसो रसार्द्रः परिपक्वो न शुष्कश्च स एव विवक्षितः, तत्रैव पाण्डिमसम्भवात्, स चासौ कदलीस्तम्भश्च स इव गौरः पाण्डुरः। "गौरः शरीरे सिद्धार्थे शुक्ले पीतेऽरुणेऽपि च" इति मालतीमालायाम्। अस्याः प्रियाया वाम ऊरुः चलत्वं स्पन्दनं यास्यति प्राप्स्यति। "ऊरोः स्पन्दाद्रतिं विद्याद्दूर्वोः प्राप्तिं सुवाससः" इति निमित्तनिदाने ॥३५॥

**हिन्दी**—मेरे नखाङ्कसे परित्यक्त, चिराभ्यस्त कटिभूषण दैवप्रभावसे त्याग किया, सम्भोगान्ते मेरे हस्तसे सम्मर्द्दनयोग्य और सरसकदलीस्तम्भवत् सफेद इसकी वाम ऊरु, स्पन्दन प्राप्त होवेगा ॥३५॥

**বাঙ্গালা**—আমার নখচিহ্ন যাহাকে পরিত্যাগ করিয়াছে, অদৃষ্ট যাহাকে চিরকালের অভ্যস্ত মুক্তাময় কটিভূষণ পরিত্যাগ করাইয়াছে, সম্ভোগের পর যে আমার হস্তসংবাহনের যোগ্য এবং যে, পক্ক আর্দ্র কদলীস্তম্ভের ন্যায় গৌরবর্ণ, প্রিয়তমার সেই বাম ঊরুদেশ ( তুমি নিকটবর্ত্তী হইলে ) চঞ্চলতা প্রাপ্ত হইবে ॥৩৫॥

**अन्वयः**—(हे) जलद! तस्मिन् काले सा यदि लब्धनिद्रासुखा स्यात्, एनां

---

(३६) अन्वासीनः। तत्रासीनः। सद्यैवाः। इति पाठान्तराणि।

अन्वास्य स्तनितविमुखः ( सन् ) याममात्रं सहस्व, अस्याः प्रणयिनि मयि कथञ्चित् स्वप्नलब्धे ( सति ) गाढ़ोपगूढ़ं सद्यः कण्ठच्युतभुजलताग्रन्थि मा भूत् ॥३६॥

चञ्चला—तस्मिन्निति। हे जलद! मेघ! तस्मिन् काले तवोपस्थितिसमये, सा मम प्रियतमा, यदि लब्धं निद्रासुखं यया सा तादृशी स्यात् कथमपि निद्रिता स्यादित्यर्थः, तदा एनां प्रियतमाम्, अन्वास्य पश्चादासित्वा अवस्थाय, स्तनितविमुखो गर्जनपराङ्मुखो निःशब्दः सन्, याममात्रं प्रहरमात्रं सहस्व अपेक्षस्व, गर्जने तु तस्या निद्राभङ्गो भवेदिति भावः। कथमेतदित्याह मेति। अस्याः प्रियायाः, प्रणयिनि मयि, कथञ्चित् दैववशेन स्वप्ने लब्धे प्राप्ते सति, गाढ़ोपगूढ़ं दृढ़ालिङ्गनम्, सद्यस्तत्क्षणात् गर्जनक्षण एवेत्यर्थः, कण्ठात् च्युतो भ्रष्टः भुजलतयोर्ग्रन्थिर्बन्धनं यस्य तत्तादृशं मा भूत् न भवतु।

अत्र स्तनितवैमुख्येन याममात्रसहनं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्; तथा कण्ठच्युतेति पदस्य उपमासाधकत्वात् भुजौ लते इवेति समासगता लुप्तोपमा, अनयोरङ्गाङ्गिभावेन सङ्करः ॥३६॥

सञ्जीवनी—तस्मिन्निति। हे जलद! तस्मिन् काले त्वदुपसर्पणकाले सा मत्प्रिया लब्धं निद्रासुखं यया तादृशी स्याद्यदि स्याच्चेत्, एनां निद्राणाम् अन्वास्य पश्चादासित्वेत्यर्थः। उपसर्गवशात् सकर्म्मकत्वम्। स्तनितविमुखो गर्जितपराङ्मुखो निःशब्दः सन्, अन्यथा निद्राभङ्गः स्यादिति भावः। याममात्रं प्रहरमात्रम्। "द्वौ यामप्रहरौ समौ" इत्यमरः। सहस्व प्रतीक्षस्व। प्रार्थनायां लोट्। शशकयोरेकवारसुरतस्य यामावधिकत्वात् स्वप्नेऽपि तथा भवितव्यमित्यभिप्रायः। तथा च रतिसर्वस्वे—"एकवारावधिर्यामो रतस्य परमो मतः। पण्डशशिमतोर्यूनोरष्टक्रमवर्त्तिनोः॥" इति। यामसहनस्य प्रयोजनमाह

**तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन**
**प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।**
**विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे**
**वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥३७॥**

---

मा भूदिति। अस्याः प्रियायाः प्रणयिनि प्रेयसि मयि कथञ्चित् कृच्छ्रेण स्वप्नलब्धे सति गाढोपगूढं गाढालिङ्गनम्। नपुंसके भावे क्तः। सद्यस्तत्क्षणं कण्ठात् च्युतः स्रस्तः भुजलतयोर्ग्रन्थिर्बन्धो यस्य तत्, मा भूत् मास्तु, कथञ्चित् लब्धस्य आलिङ्गनस्य विघातो मा भूदित्यर्थः। न चात्र निद्रोक्तिः "तामुन्निद्राम्" इति पूर्वोक्तेन निद्राच्छेदेन विरुध्यते, पुनः सम्भ्रम्याद्यवस्थासु पाक्षिकनिद्रासम्भवात्। तथा च रसरत्नाकरे— "आसक्तौ रोदनं निद्रा निर्लज्जानर्थवाग्भ्रमः। सम्भ्रमादिषु जायन्ते दशाभेदेषु वासुके ॥" इति ॥३६॥

**हिन्दी**—तुम्हारे उपस्थित होनेके समयमें अगर वह बाला निद्रित हो, तो गर्जनविमुख तुम उनकी पीछे ठहर कर एक प्रहर तक प्रतीक्षा करना। (क्योंकि) किसी तौरसे स्वप्नमें लब्ध प्रणयी मेरे ऊपर वह सुन्दरीकी गाढ़ आलिङ्गन तत्क्षणात् कण्ठसे भुजलताकी ग्रन्थि छुटा हुआ ऐसे न होना चाहिये ॥३६॥

**বাঙ্গালা**—হে মেঘ! সেই সময়ে প্রিয়তমা যদি নিদ্রাসুখ ভোগ করিতে থাকেন, তবে তুমি নিঃশব্দ হইয়া তাঁহার পিছনে বসিয়া, এক প্রহরকাল অপেক্ষা করিবে। কারণ, আমি উঁহার প্রিয়তম; সুতরাং স্বপ্নে অতিকষ্টে আমাকে পাইলে পর গাঢ় আলিঙ্গনের বেলায় হঠাৎ

---

(৩৭) विद्युद्गर्भं !। विद्युत्कम्पस्तिमितनयनां। धीरध्वनितवचनैः। धीर-स्तनितवचनैः। इति पाठभेदाः।

( তুমি গর্জ্জন করিলেই নিদ্রাভঙ্গ হওয়ায় ) কণ্ঠ হইতে বাহুলতার বন্ধন স্খলিত হইয়া না যায় ॥৩৬॥

**अन्वयः**—विद्युद्गर्भः धीरः ( सन् ) स्वजलकणिकाशीतलेन अनिलेन तां उत्थाप्य अभिनवैः मालतीनां जालकैः समं प्रत्याश्वस्तां त्वत्सनाथे गवाक्षे स्तिमितनयनां मानिनीं स्तनितवचनैः वक्तुं प्रक्रमेथाः ॥३७॥

**चञ्चला**—तामिति। हे मेघ! त्वम्, विद्युत् गर्भे अभ्यन्तरे यस्य स तादृशः स्वकीयां विद्युतं वहिरप्रकाशयन्नित्यर्थः, अन्यथा चक्षुः-प्रतिघातेन प्रिया मे भीता भवेदिति भावः, तथा धीरो धैर्य्यावलम्बी सन्, अन्यथा प्रिया मे नितान्तमुद्वेगमापद्येतेत्याशयः, स्वजलकणिकाभिः स्वकीयवृष्टिविन्दुभिः शीतलेन अनिलेन वायुना, तां मत्प्रियाम्, उत्थाप्य निद्रातो जागरयित्वा, अभिनवैर्मालतीनां कुसुमानां जालकैः कलिकाभिः समं सह, प्रत्याश्वस्तां निद्राविह्वलतापगमेन सुस्थीभूतचित्ताम् अन्यत्र तु निदाघतापापगमेन पुनरुच्छ्वसिताम्, तथा त्वत्सनाथे त्वद्युक्ते, गवाक्षे सम्मुखस्थवातायनदेशे, स्तिमितनयनां 'कः खल्वसौ?' इति विस्मयेन निश्चलनेत्राम्, मानिनीं मानवतीम्, एतेन तथा वक्तुं प्रक्रमेथाः यथा सा मानं न कुर्य्यादिति व्यज्यते स्तनितानि कोमल-गर्जितान्येव वचनानि वाक्यानि तैः, वक्तुं प्रक्रमेथा आरभेथाः।

अत्र द्वितीयचरणे सहोक्तिरलङ्कारः, तथा स्तनितेषु वचनत्वारोपस्य प्रकृतकथनप्रक्रमोपयोगितया परिणामश्च, अनयोः परस्परनिरपेक्षतया संसृष्टिः ॥३७॥

**सञ्जीवनी**—तामिति। तां प्रियां स्वस्य जलकणिकाभिर्जल-विन्दुभिः शीतलेन अनिलेन उत्थाप्य प्रबोध्य। एतेन तस्याः प्रभुत्वात् व्यजनानिलसमाधिर्व्यज्यते। यथाह भोजराजः—"मृदुभिर्मर्द्दनैः पादे

शीतलैर्व्यंजनैस्तनौ। श्रुतौ च मधुरैर्गीतैः निद्रान्तो बोधयेत् प्रभुम् ॥" इति। अभिनवैर्नूतनैर्मालतीनां जालकैः समं जातीमुकुलैः सह। "सुमना मालती जातिः" इति "साकं सत्रा समं सह" इति "क्षारको जालकं क्लीवे कलिका कोरकः पुमान्" इति च अमरः। प्रत्याश्वस्तां सुस्थिताम् अन्यत्र पुनरुच्छ्वसिताम्। श्वसेः कर्त्तरि क्तः, "आदितश्च" इति चकारादिट्प्रतिषेधः। एतेनास्याः सौकुमार्यं गम्यते। त्वत्सनाथे तत्सह्निते। "सनाथं प्रभुमित्याहुः सह्निते चित्ततापिनि" इति शब्दार्णवः। गवाक्षे स्तिमितनयनां कोऽसाविति विस्मयनिश्चलनेत्रां मानिनीं मनस्विनीम् अनौचित्यासहिष्णुमित्यर्थः। विद्युत् गर्भः अन्तःस्था यस्य स विद्युद्गर्भः अन्तर्लीनविद्युत्क इत्यर्थः। "गर्भोऽपवारकेऽन्तःस्थे कुक्षिस्थे चार्भके मतः" इति शब्दार्णवः। दृष्टिप्रतिघातेन वक्तुर्मुखावलोकनप्रतिबन्धकत्वात् न द्योतितव्यमिति भावः। धीरो दृढ़ः सन्, अन्यथा स्खलनवादित्वेन अनाश्वासनप्रसङ्गादिति भावः, स्तनितान्येव वचनानि तैः, वक्तुं प्रक्रमेथा उपक्रमस्व। विध्यर्थे लिङ्। "प्रोपाभ्यां समर्थाभ्याम्" इति आत्मनेपदम् ॥३७॥

हिन्दी—पानीके बिन्दुवोंसे ठण्डावायु करके वह बालाको उठा कर, नये जातिमुकुलोंके समान सुस्थित और तुम्हारे आश्रित गवाक्षके उपर निश्चलनयना मानिनीको बिजलीवाले धीर तुम गर्जनरूप वचनोंसे कहना प्रारम्भ करें ॥३७॥

বাঙ্গালা—হে মেঘ! তুমি বিদ্যুৎকে ভিতরে আবদ্ধ রাখিয়া এবং ধীর হইয়া, নিজের জলবিন্দুতে সুশীতল বায়ুদ্বারা সেই প্রিয়তমাকে জাগাইয়া, নূতন মালতীফুলের কলিকার সহিত প্রকৃতিস্থা এবং তোমার অধ্যুষিত গবাক্ষের প্রতি নিশ্চলনয়না সেই মানিনীকে গর্জ্জনরূপ বচনদ্বারা বলিতে আরম্ভ করিবে ॥৩৭॥

भर्त्तुर्मित्रं प्रियमविधवे ! विद्धि मामम्बुवाहं
तत्सन्देशैर्हृदयनिहितैरागतं त्वत्समीपम्।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥३८॥

अन्वयः—(हे) अविधवे ! मां भर्त्तुः प्रियं मित्रं विद्धि, हृदयनिहितैः तत्सन्देशैः त्वत्समीपं आगतं यः अम्बुवाहं मन्द्रस्निग्धैः ध्वनिभिः अबलावेणिमोक्षोत्सुकानि पथि श्राम्यतां प्रोषितानां वृन्दानि त्वरयति ॥३८॥

चञ्चला—इदानीं प्रियासमीपे वक्तव्यमुपदिशति भर्त्तुरिति। हे अविधवे ! जीवितभर्त्तृके !। एतेन अमङ्गलवार्त्ताप्रदाननिवृत्तिर्द्योतिता। मां भर्त्तुर्निजपत्युः, प्रियं मित्रं सखायम्, विद्धि जानीहि। ननु शुभानुध्यायितामात्रेण किं तव भर्त्तुर्मित्रत्वमित्याह प्रियमिति। कार्य्येणापि प्रीतिकरमित्यर्थः। किं तत् कार्य्यमित्याह तदित्यादि। हृदयनिहितैश्चित्तस्थापितैरविस्मृतैरित्यर्थः, तस्य भर्त्तुः सन्देशैर्वाचिकैः, त्वत्समीपमागतम् अभिधातुं तद्वृत्तान्तमादाय तवान्तिकमागतमित्यर्थः। ननु तथापि जात्या त्वं कोऽसि इत्याह अम्बुवाहमिति। मेघम्। अथ एतावदेव तव भर्त्तुः प्रीतिकरत्वम्, उत अन्यदप्यस्तीत्याह य इत्यादि। यः अम्बुवाहः, मन्द्रस्निग्धैर्गम्भीरमधुरैः, ध्वनिभिः शब्दैर्गर्जितैरित्यर्थः, अबलानां स्त्रीणां विरहिणीनामिति भावः, वेणिमोक्षाय विरहकालीनवेणिमोचनाय उत्सुकानि उत्कण्ठितानि; पथि विदेशे, श्राम्यतां मदनवेदनया श्रान्तिमनुभवताम्, प्रोषितानां विदेशवासिनां जनानाम्, वृन्दानि समूहान्, त्वरयति प्रियान्तिक-

(३८) तत्सन्देशान्मनसि निहितात्। सान्द्रस्निग्धैः। इति पाठभेदौ।

मुपगन्तुं सत्वरीकरोति। एतेन तव भर्त्तारमपि त्वरयामीति द्योतितम्।

अत्र विशेषणानामुक्तविधाभिप्रायविशेषैः प्रयुक्तत्वात् परिकरालङ्कारः। तथा तृतीयपादे वाक्यसमाप्तावपि तदन्तर्गतस्य वृन्दानीत्यस्य विशेषणतया चतुर्थपादस्य पुनरात्तत्वात् समाप्तपुनरात्ततादोषः; स तु तृतीयस्थाने चतुर्थपादं चतुर्थस्थाने च तृतीयपादं पठित्वा परिहरणीयः। यच्छब्दस्य उत्तरवाक्यगतत्वाच्च तच्छब्दाकाङ्क्षेति न न्यूनपदतादोषः ॥३८॥

सञ्जीवनी—सम्प्रति दूतस्य श्रोतृजनाभिमुखीकरणचातुरीमुपदिशति भर्त्तुरिति। विधवा सभर्तृका न भवतीति अविधवा। हे अविधवे! सभर्तृके!। अनेन भर्तृजीवनसूचनादनिष्टागमशङ्कां वारयति। मां भर्त्तुस्तव पत्युः प्रियं मित्रं प्रियसुहृदं तत्रापि हृदयनिहितैः मनसि स्थापितैः तत्सन्देशैः तस्य भर्त्तुः सन्देशैः त्वत्समीपमागतं भर्तृसन्देशकथनार्थमागतमित्यर्थः। अम्बुवाहं मेघं विद्धि जानीहि। न केवलमहं वार्त्ताहरः किन्तु घटकोऽपि इत्याशयेनाह य इति। यः अम्बुवाहः अबलानां स्त्रीणां वेणयस्तासां मोक्षे मोचने उत्सुकानि पथि श्राम्यतां श्रान्तिमापन्नानां प्रोषितानां प्रवासिनां पान्थानामित्यर्थः। वृन्दानि सङ्घान् मन्द्रस्निग्धैर्गम्भीरश्राव्यैः ध्वनिभिर्गर्ज्जितैः करणैः त्वरयति। पान्थोपकारिणो मे किमु वक्तव्यं सुहृदुपकारित्वमिति भावः ॥३८॥

हिन्दी—हे सभर्तृके! मुझको तुम्हारे पतिका प्रिय दोस्त और हृदयमें स्थापित उनकी वार्त्ता लेकर तुम्हारे सामने पंहुचा हुआ मेघ जानो। जो स्निग्ध एवं गम्भीर गर्ज्जनोंसे स्त्रीके वेणीमोचनमें उत्सुक रास्तामें दुःखभोग करते हुये प्रवासियोंको घर पंहुचानेमें जल्दी करनेवाला है ॥३८॥

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैव ।
श्रोष्यत्यस्मात् परमवहिता सौम्य ! सीमन्तिनीनां
कान्तोदन्तः सुहृदुपगतः सङ्गमात् किञ्चिदूनः ॥३९॥

**বাঙ্গালা**—হে অবিধবে ! আমি তোমার ভর্ত্তার প্রিয়সুহৃৎ মেঘ, তাহারই সংবাদ চিত্তে বহন করিয়া তোমার নিকট আসিয়াছি জানিবে। যে আমি গম্ভীর ও মধুর শব্দে, রমণীগণের বেণী মোচন করিবার নিমিত্ত উৎকণ্ঠিত কামার্ত্ত প্রবাসী পুরুষগণকে (সেই রমণীগণের নিকট) তাড়াতাড়ি পাঠাইয়া থাকি ॥৩৮॥

**अन्वयः**—इति आख्याते (सति) मैथिली पवनतनयं इव सा उन्मुखी उत्कण्ठोच्छ्वसितहृदया (सती) त्वां वीक्ष्य सम्भाव्य च एव अस्मात् परं अवहिता श्रोष्यति ; (हे) सौम्य ! सीमन्तिनीनां सुहृत् उपगतः कान्तोदन्तः सङ्गमात् किञ्चित् ऊनः ॥३९॥

**सञ्जला**—इत्याख्यात इति । इति "भर्त्तुर्मित्रम्" इत्यादिप्रकारेण आख्याते उक्ते सति, मैथिली सीता, पवनतनयं हनूमन्तमिव, सा मम प्रियतमा, उन्मुखी भवदभिमुखी, उत्कण्ठया औत्सुक्येन उच्छ्वसितम् उत्फुल्लं हृदयं यस्याः सा तादृशी च सती, त्वां मेघम्, वीक्ष्य साग्रहं दृष्ट्वा, सम्भाव्य चैव सम्मान्य च । चैव इत्येकमेवाव्ययं समुच्चयार्थे । "बलान्तकस्याभिभवेन चैव" इति भट्टिव्याख्याने भरतोऽप्येवम् । अस्मात् भर्त्रा सह मिलनवृत्तान्तात् परम्, अवहितैव त्वद्वाक्यश्रवणे दत्तावधानैव सती श्रोष्यति त्वद्वाक्यमिति शेषः । श्रोतुरवधानाभावे वक्तुरुक्ति-

(३९) सम्भाव्य चैवम् । सम्भाष्य चैव । सुहृदुपनतः । इति पाठान्तराणि ।

रनर्थिकैवेति भावः। ननु कथमवहिता श्रोष्यति इत्याह सौम्येति। हे सौम्य! शान्तमूर्त्ते! सीमन्तिनीनां स्त्रीणाम्, सुहृदः कान्तस्यैव मित्रात् उपगतो लब्धः। अत्र सुहृत्पदेन प्रतारणाभावो व्यज्यते। कान्तस्य प्रियतमस्य उदन्तो वृत्तान्तः, सङ्गमात् कान्तेनैव सह सम्मेलनात् किञ्चिदूनः प्रायेणैव तत्तुल्यः सुखसम्पादक इत्यर्थः। अतएवावहिता श्रोष्यतीति भावः।

अत्र प्रथमचरणे श्रौती उपमा, परञ्च सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, अनयोः परस्परनिरपेक्षतया संसृष्टिः। केचित्तु कार्य्य-कारणभावे अर्थान्तरन्यासं ब्रुवन्ति ॥३९॥

सञ्जीवनी—भर्त्तृसख्यादिज्ञापनस्य फलमाह इतीति। इति एवम् आख्याते सति, पवनतनयं हनूमन्तम्, मैथिली सीतेव सा मत्प्रिया उन्मुखी औत्सुक्येन उच्छ्वसितहृदया विकसितचित्ता सती, तां वीक्ष्य सम्भाव्य सत्कृत्य च, अस्मात् भर्त्तृमैत्रीज्ञापनात् परम्, सर्वं श्रोतव्यम्, अवहिता अप्रमत्ता सती श्रोष्यत्येव। अत्र सीताहनूमदुपमानादस्याः पातिव्रात्यं मेघस्य दूतगुणसम्पत्तिश्च व्यज्यते। तद्गुणास्तु रत्नाकरे—"ब्रह्मचारी बली धीरो मायावी मानवर्जितः। धीमानुदारो निःशङ्को वक्ता दूतः स्त्रियां भवेत् ॥" इति। ननु वार्त्तामात्रश्रवणादस्याः को लाभ इत्याशङ्क्य अर्थान्तरं न्यस्यति—हे सौम्य! साधो! सीमन्तिनीनां वधूनाम्। "नारी सीमन्तिनी वधूः" इत्यमरः। सुहृदा सुहृन्मुखेन उपगतः प्राप्तः। सुहृत्पदं विप्रलम्भशङ्कानिवारणार्थम्। कान्तस्य उदन्तो वार्त्ता कान्तोदन्तः। "वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः। सङ्गमात् कान्तसम्पर्कात् किञ्चिदून ईषदूनः तद्वदेवानन्द-कारीत्यर्थः ॥३९॥

हिन्दी—एवंप्रकार कहनेसे मैथिली हनूमान्जीको जैसे, तैसे वह उन्मुखी

तामायुष्मन् ! मम च वचनादात्मनश्चोपकर्त्तुं
ब्रूया एवं तव सहचरो रामगिर्य्याश्रमस्थः ।
अव्यापन्नः कुशलमबले ! पृच्छति त्वां वियुक्तः
पूर्व्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥४०॥

उत्कण्ठासे उत्फुल्लचित्तवाला तुमको देखकर और सत्कारकर इसके ( मेरे बन्धु जाननेबाद ) अतीव मनःसन्निवेशपूर्वक सब वार्त्ता सुनेगी । ( क्योंकि ) हे सौम्य ! सीमन्तिनीके वारेमें बन्धुसे प्राप्त हुआ स्वामीके संवाद सम्भोगसे किञ्चित् न्यून है ( अर्थात् अतीव प्रिय है ) ॥३९॥

**বাঙ্গালা**—হে মেঘ ! তুমি এইরূপ বলিলে, সীতাদেবী হনূমান্‌কে দেখিয়া যেরূপ সম্মানিত করিয়াছিলেন, সেইরূপ আমার প্রিয়তমা অভিমুখী হইয়া, তোমাকে দেখিয়া ও সম্মানিত করিয়া, ঔৎসুক্যবশতঃ উৎফুল্লচিত্ত হইয়া, ইহার পর ( সমস্ত বৃত্তান্ত ) একাগ্রচিত্তেই শ্রবণ করিবেন। কারণ, বন্ধুর নিকট প্রাপ্ত প্রিয়তমের বৃত্তান্ত, স্ত্রীলোক-দিগের পক্ষে প্রিয়তমের সহিত সম্মেলন হইতে কিঞ্চিন্মাত্র ন্যূন ॥৩৯॥

**अन्वयः**—( हे ) आयुष्मन् ! मम वचनात् च आत्मनः उपकर्त्तुं च तां एवं ब्रूयाः, ( हे ) अबले ! तव सहचरः अव्यापन्नः वियुक्तः रामगिर्य्याश्रमस्थः त्वां कुशलं पृच्छति, सुलभविपदां प्राणिनां एतत् एव पूर्व्वाभाष्यं ॥४०॥

**चञ्चला**—इदानीं सन्देशमाह तामिति । हे आयुष्मन् ! निस्वार्थ-भावेन परोपकारप्रवृत्तः प्रशस्तायुष्क ! मम वचनाच्च अनुरोधवाक्याच्च, आत्मनः स्वस्य उपकर्त्तुंच परोपकारकरणात् पुण्यजननेन उपकारं

(४०) ब्रूयादेवं । ब्रूया एवं । वियुक्तां । पूर्व्वाभास्यं । पूर्व्वाभाष्यं । भूतानां हि क्षयिषु करणेष्वाद्यमाश्वास्यमेतत् इति पाठान्तराणि ।

कसुंस्व, तां मत्प्रियाम्, एवं ब्रूयाः । किन्तदित्याह—हे अबले ! विरहयातनया दुर्बलीभूते ! तव सहचरः सहवासी । अत्र स्वाम्यादिशब्दाप्रयोगेण आत्मनः स्वामित्वाभिमानो नास्तीति द्योतितम् । अव्यापन्नो न मृतः । तर्हि कथं नागत इत्याह वियुक्त इति । कुबेरशापेन विच्छिन्न इत्यर्थः । तेन च शापावसानं विना कथमागच्छेदिति भावः । अहो ! तदा किं रमण्यन्तरमुपेत इत्याह रामेति । रामगिरेश्चित्रकूटस्य आश्रमेषु तपोवनेषु तिष्ठतीति सः । एतेन तत्र गणिकाद्यभावात् रमण्यन्तरमनुपेत एव तिष्ठतीति द्योतितम् । तन्मां किं ब्रवीतीत्याह त्वां कुशलं पृच्छति त्वं जीवनकुशलवत्यसीति जिज्ञासत इत्यर्थः । ननु विषयान्तरं परिहाय कथं कुशलमेव पृच्छतीत्याह पूर्वेति । सुलभा अनायासेनैव प्राप्या विपदो येषां तेषां प्राणिनाम्, एतदेव कुशलमेव पूर्वाभाष्यं प्रथमं प्रच्छनीयम् । जीवनस्यैव कुशलाभावे विषयान्तरप्रश्नस्य निरवकाशत्वादिति भावः ।

अत्र विशेषणानामुक्तरूपाभिप्रायविशेषैः प्रयुक्तत्वात् परिकरालङ्कारः । "एतदेव पूर्वाभाष्यम्" इत्येतदर्थं प्रति "सुलभविपदाम्" इति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः, तस्यापि च उक्तपरिकरेण सह निरपेक्षतया संसृष्टिः । तथा प्रथमचरणे वचनादिति पञ्चम्यन्ततया उपकर्त्तुमिति च तुमुनन्ततया भग्नप्रक्रमतादोषः, स तु "तां निर्बन्धं मम फलयितुञ्चात्मनश्चोपकर्त्तुम्" इति पाठेन परिहार्य्यः । एवं पाठे तु फलयितुमित्यत्र फलवन्तं कर्त्तुमिति वाक्ये इनि सति "मन्तुवन्तुवीनां लुक् च" इति वन्तुप्रत्ययस्य लोपः । न च वचनादित्यनन्तरम् उपकर्त्तुमित्यनन्तरञ्च स्थितियोग्यस्य चकारद्वयस्य अन्यत्रावस्थानादक्रमतादोषद्वयञ्चेति वाच्यम्; प्राक् स्थितावपि अन्वयि-

पदसमभिव्याहारेण श्रोतुरुद्वेगाजननात् तथात्वे च रसापकर्षाभावादिति सुधीभिर्भाव्यम् ॥४०॥

सञ्जीवनी—सम्प्रति सन्दिशति तामिति। हे आयुष्मन्! प्रशंसायां मतुप्। परोपकारश्लाघ्यजीवितेत्यर्थः। मम वचनं प्रार्थनावचनं तस्माच्च आत्मनः स्वस्य उपकर्त्तुञ्च परोपकारेणात्मानं कृतार्थयितुमित्यर्थः। उपकारक्रियां प्रति कर्म्मत्वेऽपि "तस्यानुकरोति" इत्यादिवत् सम्बन्धमात्रविवक्षायामात्मन इति षष्ठी न विरुध्यते। यथाह भारविः—"सा लक्ष्मीरुपकुरुते यया परेषाम्" इति। तथा श्रीहर्षञ्च—"साधूनामुपकर्त्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम्। न कुतूहलि कस्य मनश्चरितञ्च महात्मनां श्रोतुम् ॥" इति। तथा च "क्वचित् द्वितीयादर्शनात् सर्वत्र न तथा" इति नाथवचनमनाथवचनमेव। तां प्रियाम् एवं ब्रूयाः त्वमिति शेषः। किमित्याह—हे अबले! तव सहचरो भर्त्ता रामगिरेश्चित्रकूटस्य आश्रमेषु तिष्ठतीति रामगिर्य्याश्रमस्थः सन् अव्यापन्नो न मृतः। अमरणे हेतुमाह—वियुक्तो वियोगं प्राप्तो दुःखी एवंविधः सन् त्वां कुशलं पृच्छति। दुह्यादित्वात् पृच्छतेर्द्विकर्म्मकत्वम्। तथाहि सुलभविपदाम् अयत्नसिद्धविपत्तीनां प्राणिनाम् एतदेव कुशलमेव पूर्वाभाष्यम् एतदेव प्रथममवश्यं प्रष्टव्यम्। "कृत्याश्च" इत्यावश्यकार्थे ण्यप्रत्ययः ॥४०॥

हिन्दी—हे आयुष्मन्! मेरे वाक्यसे और उपकार से अपनेको आनन्दित करनेके वास्ते इसतौरसे तिनको कहना; कि अब रामगिरिकी आश्रमसें रह कर, जीवित और विरही तेरी सहचर है अबली! तुम्हारी कुशल संवाद पूछता है। (क्योंकि) सुलभ विपत्तिवाले जीवको पहेला यह कुशल पूछना ही ठिक् है ॥४०॥

बाङ्गला—हे आयुष्मन्! आमार अनुरोधे एवं निजेरओ उपकारेर जन्य प्रियतमाके एइरूप बलिबे—"हे अबले! तोमार

अङ्गेनाङ्गं प्रतनु तनुना गाढ़तप्तेन तप्तं
सास्रे णास्रद्रुतमविरतोत्कण्ठमुत्कण्ठितेन।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्त्ती
सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥४१॥

সহচর মরেন নাই; তিনি তোমা হইতে বিচ্ছিন্ন হইয়া রামগিরির আশ্রমে অবস্থান করিতেছেন এবং তথা হইতেই তোমার মঙ্গল জিজ্ঞাসা করিতেছেন। কারণ, প্রাণিগণের বিপদ অনায়াসেই হইতে পারে; সুতরাং প্রথমে মঙ্গল জিজ্ঞাসা করাই কর্ত্তব্য ॥৪০॥

**अन्वयः**—दूरवर्त्ती वैरिणा विधिना रुद्धमार्गः तनुना गाढ़तप्तेन सास्रेण उत्कण्ठितेन समधिकतरोच्छ्वासिना अङ्गेन प्रतनु तप्तं अस्रद्रुतं अविरतोत्कण्ठं उष्णोच्छ्वासं अङ्गं तैः सङ्कल्पैः विशति ॥४१॥

**वल्लभा**—अङ्गेनेति। हे कान्ते! दूरवर्त्ती। तथापि कथं नागच्छतीत्याह वैरिणा शत्रुभूतेन, विधिना कुवेरशापसम्पादकेन दैवेन, रुद्धो मार्ग आगमनपथो यस्य सः, तव सहचर इत्यर्थः, तनुना विरह-वेदनया क्षीणीभूतेन, गाढ़तप्तेन दुःखातिरेकादत्यन्तसन्तप्तेन, सास्रेण प्रवलमनोदुःखात् नयनजलसहितेन, सञ्जाता उत्कण्ठा सम्मेलनाय औत्सुक्यं यस्मिन् तेन, समधिकतरोच्छ्वासिना तीव्रनिश्वासत्यागिना, अङ्गेन स्वकीयदेहेन, प्रतनु विरहादेव क्षीणीभूतम्, तप्तं वियोगदुःखा-धिक्यादेव तापयुक्तम्, अस्रद्रुतं दुःखादेव नयनजलसिक्तम्, अविरता उत्कण्ठा सम्मेलनौत्सुक्यं यस्मिन् तत्, तथा उष्णोच्छ्वासम् अन्तः-सन्तापादुष्णनिश्वासयुक्तम्, अङ्गं तव देहम्, तैः सम्भवपरत्वेन प्रसिद्धैः,

(४१) दीर्घोच्छ्वासं। सङ्कल्पैर्वा। इति पाठभेदौ।

सङ्कल्पैः केवलमनोवृत्तिभिः, विशति प्रविशति संयुक्तावस्थायामिव एकीकरोतीत्यर्थः ।

अत्र तन्वादीनामुद्देशक्रमेण प्रतन्वादीनामुद्दिष्टत्वात् यथासंख्यमलङ्कारः । तथा तवाङ्गमिव ममाङ्गमपि प्रतनु सञ्जातमित्याद्युपमा व्यज्यत इति वस्तुना अलङ्कारध्वनिः ॥४१॥

सञ्जीवनी—अङ्गेनेति । किञ्च, दूरवर्त्ती दूरस्थः । न चागन्तुं शक्यत इत्याह—वैरिणा विरोधिना विधिना दैवेन रुद्धमार्गः प्रतिबद्धवर्त्मा स ते सहचरः तनुना कृशेन गाढ़तप्तेन अत्यन्तसन्तप्तेन सास्रेण साश्रुणा उत्कण्ठा वेदना अस्य जाता उत्कण्ठितं तेन उत्कण्ठितेन । "तदस्य सञ्जातम्" इत्यादिना इतच् प्रत्ययः । उत्कण्ठतेर्वा कर्त्तरि क्तः । समधिकतरम् अतिप्रबलम् उच्छ्वसितीति समधिकतरोच्छ्वासी तेन दीर्घनिश्वासिनेत्यर्थः । ताच्छील्ये णिनिः । अङ्गेन स्वशरीरेण, प्रतनु कृशं तप्तं वियोगदुःखेन म्लुष्टम्, अस्रद्रुतम् अश्रुक्लिन्नम् । "अस्रु नेत्राम्बु रोदनञ्चास्रमस्रु च" इत्यमरः । अविरतोत्कण्ठम् अविच्छिन्नवेदनम् उष्णोच्छ्वासं तीव्रनिश्वासम् । "तिग्मं तीक्ष्णं खरं तीव्रं चण्डमुष्णं पटु स्मृतम्" इति हलायुधः । अङ्गं त्वदीयं शरीरं तैः स्वसंवेद्यैः सङ्कल्पैर्मनोरथैः विशति एकीकरोतीत्यर्थः । अत्र समानुरागित्वद्योतनाय नायकेन नायिकायाः स्वसमानावस्थत्वमुक्तम् ॥४१॥

हिन्दी—दूर रहनेवाला पथ च शत्रु दैवसे रुद्धमार्ग वह तुम्हारी सहचर कृश, अत्यन्त सन्तप्त, अश्रुयुक्त, आंसुवोंसे क्लिन्न, अविच्छिन्नवेदन और तीव्रनिश्वासवाले तुम्हारी अङ्ग सो सङ्कल्पसे एक करता है ॥४१॥

बाङ्गाला—তোমার সহচর দূরে রহিয়াছেন এবং প্রতিকূল দৈব তাঁহার আগমনের পথ রুদ্ধ করিয়া রাখিয়াছেন; সুতরাং তিনি কৃশ, অত্যন্তসন্তপ্ত, নয়নজলসিক্ত, উৎকণ্ঠিত এবং অত্যন্তনিশ্বাসত্যাগী স্বকীয়

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृश्यः
त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥४२॥

শরীরদ্বারা, বিরহবশতঃ নিতান্তকৃশ, সন্তপ্ত, অশ্রুজলসিক্ত, সর্ব্বদা উৎকণ্ঠাপূর্ণ এবং উষ্ণনিশ্বাসময় তোমার শরীরে সেই সকল কল্পনার বলে প্রবেশ করিতেছেন ॥৪১॥

अन्वयः—यः ते सखीनां पुरस्तात् यत् अपि शब्दाख्येयं आननस्पर्शलोभात् कर्णे कथयितुं लोलः अभूत् किल, सः श्रवणविषयं अतिक्रान्तः त्वां लोचनाभ्यां अदृश्यः उत्कण्ठाविरचितपदं इदं मन्मुखेन आह ॥४२॥

चञ्चला—शब्देति । यस्तव सहचरः, ते तव सखीनां पुरस्तादग्रतः, यद् वस्तु, शब्देन यथासम्भवमुच्चवाक्येन आख्येयं वक्तव्यं भवति, तदपि वस्तु, आननस्पर्शलोभात् तव मुखस्पर्शाकाङ्क्षावशात्, तवैव कर्णे कथयितुं लोलः अभिलाषी अभूत् किल ; स इदानीं श्रवणविषयं वाक्योच्चारणे तव श्रवणयोग्यदेशम्, अतिक्रान्तः । त्वां शब्दागम्यदेशेऽपि लोचनं गच्छतीत्याशयेनाह—लोचनाभ्यामदृश्यो द्रष्टुमशक्यः अतिदूरवर्त्ती सन्नित्यर्थः, उत्कण्ठया विरचितानि संगृहीतानि पदानि यस्य तत्ताद्दृशम्, इदं वक्ष्यमाणं वाक्यम्, अहमेव मुखं तेन, वाक्प्रकाशकत्वादिति भावः, आह ब्रवीति, अतस्तदुक्तवदेवेदं त्वया विश्वास्यमित्याशयः ।

अत्र मन्मुखेनेति निरङ्गं केवलरूपकमलङ्कारः ॥४२॥

सञ्जीवनी—सम्प्रति स्वावस्थानिवेदनाय प्रस्तौति शब्दाख्येयमिति ।

(४२) शब्दाख्येयं यदपि किल तद् यः सखीनां पुरस्तात् । इति पाठान्तरम् ।

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां वर्हभारेषु केशान्।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्मिन् क्वचिदपि न ते चण्डि! सादृश्यमस्ति॥४३

हे अवले! यस्ते प्रियः सखीनां पुरस्तादग्रे आननस्पर्शं त्वन्मुखसम्पर्कं लोभात् गार्द्ध्यात् अधरपानलोभादित्यर्थः। शब्दाख्येयं शब्देन रवेण आख्येयम् उच्चैर्वाच्यमपि यत्, तद्वचनमपीति शेषः, कर्णे कथयितुं लोलो लालसः अभूत् किल। "लोलुपो लोलुभो लोलो लालसो लम्पटोऽपि च" इति यादवः। श्रवणविषयं कर्णपथमतिक्रान्तः, तथा लोचनाभ्यामदृश्यः, अतिदूरत्वात् द्रष्टुं श्रोतुञ्च न शक्य इति भावः। स ते प्रियः, त्वाम् उत्कण्ठया विरचितानि पदानि सुप्तिङन्तशब्दाः वाक्यानि वा यस्य तत् तथोक्तम्। "पदं शब्दे च वाक्ये च" इति विश्वः। इदं वक्ष्यमाणम् "श्यामास्वङ्गम्" इत्यादिकं मन्मुखेनाह मद्वावधानेन स एव ब्रूते इत्यर्थः॥४२॥

हिन्दी—हे अबले! जो तुम्हारी सखियोंके आगे आननस्पर्श के लोभसे शब्दों करके कथनीय वचनभी कर्णमें कहनेके वास्ते अभिलाषी होता था। कर्णपथसे अतिक्रान्त और नयनोंसे अदृश्य जो तुम्हारी प्रिय तुमको उत्कण्ठासे रचित हुआ है जिनका ऐसे वाक्य कहता है॥४२॥

বাঙ্গালা—হে অবলে! তোমার সখীগণের সম্মুখে যে কথা, যথাসম্ভব উচ্চবাক্যেও বলা যাইতে পারে, তাহাও যিনি তোমার মুখের স্পর্শলোভে কাণে কাণে বলিবার জন্য অভিলাষী হইতেন, তিনি শুনিবার

(৪৩) চকিতহরিণীপ্রেক্ষিতে। বক্তচ্ছায়াং। হন্তৈকস্থং। ইতি পাঠভেদাঃ।

যোগ্য স্থান অতিক্রম করিয়া রহিয়াছেন এবং তাঁহাকে চোখেও দেখিবার সম্ভব নাই; তাই তিনি উৎকণ্ঠাবশতঃ পদ রচনা করিয়া আমারূপ মুখদ্বারা তোমাকে ইহা বলিতেছেন ॥৪২॥

অন্বয়:—শ্যামাসু অঙ্গং চকিতহরিণীপ্রেক্ষণে দৃষ্টিপাতং শশিনি বক্ত্রচ্ছায়াং শিখিনাং বর্হভারেষু কেশান্ প্রতনুষু নদীবীচিষু ভ্রূবিলাসান্ উৎপশ্যামি, হন্ত, (হে) চণ্ডি! একস্মিন্ ক্বচিৎ অপি তে সাদৃশ্যং ন অস্তি ॥৪৩॥

চঞ্চলা—শ্যামাস্বিতি। হে প্রিয়ে! শ্যামাসু প্রিয়ঙ্গুলতাসু, তব অঙ্গং গাত্রম্, উৎপশ্যামি উৎপ্রেক্ষে সম্ভাবয়ামীতি যাবৎ, তথৈব কৃশত্বাৎ কোমলত্বাচ্চেতি ভাবঃ; চকিতায়াঃ কুতোঽপি ত্রস্তায়া হরিণ্যাঃ প্রেক্ষণে দর্শনে তব দৃষ্টিপাতং দর্শনম্, উৎপশ্যামি; তথৈব চঞ্চলমনোহরত্বাদিত্যাশয়ঃ; শশিনি চন্দ্রে, বক্ত্রচ্ছায়াং তব মুখকান্তিম্, উৎপশ্যামি; তদ্বদেবাহ্লাদকারিত্বাদিত্যভিপ্রায়ঃ; শিখিনাং ময়ূরাণাম্, বর্হভারেষু পিচ্ছসমূহেষু, কেশান্ তব কুন্তলান্, উৎপশ্যামি; তথৈব নিবিড়গাঢ়কৃষ্ণকোমলত্বাদিতি ভাবঃ; তথা প্রতনুষু অতিক্ষুদ্রাসু ন পুনর্মহতীষু সাম্যাসম্ভবাদিত্যাশয়ঃ, নদ্যা বীচিষু তরঙ্গেষু, তব ভ্রুবোর্বিলাসান্ বিভ্রমান্, উৎপশ্যামি; তদ্বদেব ঘনচঞ্চলত্বাদিত্যভিপ্রায়ঃ। অতএব, হন্ত খেদে, হে চণ্ডি! কোপনস্বভাবে! ইদন্তু পূর্বানুভবানুসারেণ সম্বোধনম্। একস্মিন্ ক্বচিদপি বস্তুনি, তে তব, সাদৃশ্যং পূর্ণসাম্যং নাস্তি তৎ কুতো মে সমাশ্বাস ইতি ভাবঃ।

অত্র উৎপশ্যামীত্যেকয়া ক্রিয়য়া প্রিয়তমাভাববর্ণনাঙ্গত্বেন প্রস্তুতানাম্ অঙ্গদৃষ্টিপাতাদীনাং কর্মতয়া অভিসম্বন্ধাত্তুল্যযোগিতালঙ্কারঃ, তথা চতুর্থচরণার্থং প্রতি পূর্বচরণত্রয়গতবাক্যার্থো হেতব ইতি বাক্যার্থহেতুকং কাব্যলিঙ্গঞ্চ অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

अस्यानुरूपं श्लोकयुगलं यथा रघुवंशे अष्टमसर्गे—

"कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम्।
पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः॥
त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया।
विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः॥" ॥४३॥

सञ्जीवनी—सदृशप्रतिकृति-स्वप्नदर्शन-तदङ्गस्पृष्ट-स्पर्शाख्याश्चत्वारो विरहिणां विनोदोपायाः। तथा चोक्तं गुणपताकायाम्—"वियोगे चायोगे प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म्म स्वपनसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारोऽनङ्गव्यथितमनसां कोऽपि गदितः॥" इति। तत्र सदृशवस्तुदर्शनमाह श्यामास्विति। श्यामासु प्रियङ्गुलतासु। "श्यामा तु महिलाह्वया। लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली" इत्यमरः। अङ्गं शरीरम् उत्पश्यामि सौकुमार्य्यादिसाम्यात् अङ्गमिति तर्कयामीत्यर्थः। तथा चकित-हरिणीनां प्रेक्षणे दृष्टिपातम्, शशिनि चन्द्रे वक्त्रच्छायां मुखकान्तिम्, तथा शिखिनां बर्हिणां बर्हभारेषु केशान् प्रतनुषु स्वल्पासु नदीनां वीचिषु। अत्र वीचीनां विशेषणोपादानेन अनुक्तगुणग्रहदोषः भ्रूसाम्य-निर्वाहाय महत्त्वदोषनिराकरणार्थत्वात्तस्य। तदुक्तं रसरत्नाकरे—"न्यनु त्पादे गुणोत्कर्षे भावोक्तौ दोषवारणे। विशेषणाद्विशेष्यस्य नास्त्यनुक्तगुणग्रहः॥" इति। गुणो विशेषणम्। "भ्रूविलासान्" इत्यत्र "भ्रूपताकाः" इति पाठे भ्रुवः पताका इवेत्युपमितसमासः। उत्पश्या-मीति सर्वत्र सम्बध्यते। तथापि नास्ति मनोनिर्वृतिरित्याशयेनाह हन्तेति। हन्त विषादे। "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषा-दयोः" इत्यमरः। हे चण्डि! कोपने! "चण्डस्त्वत्यन्तकोपनः" इत्यमरः। गौरादित्वात् ङीष्। उपमानकथनमात्रेण न कोपितव्य-

**त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम्**
**आत्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम्।**
**अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे**
**क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥४४॥**

मिति भावः। क्वचिदपि कस्मिन्नपि एकस्मिन् वस्तुनि ते तव साद्दश्यं नास्ति अतो न निर्वृणोमीत्यर्थः। अनेनास्याः सौन्दर्य्यमनुपममिति व्यज्यते ॥४३॥

**हिन्दी**—प्रियङ्गुलताओं में अङ्गको, भीत हरिणीके नयनों में दर्शनको, चन्द्रमें मुखकान्तिको, मयूरके पिच्छभार में केशको और नदीके स्वल्प तरङ्ग में भ्रूविकारको मैं देखता हूं। हे कोपने! अतः दुःख है; कि कहीं एकही चीजमें तुम्हारी साद्दश्य दिखाइ नहीं पड़ता ॥४३॥

**বাঙ্গালা**—প্রিয়তমে! শ্যামালতায় তোমার শরীর, চকিত হরিণীর দৃষ্টিতে তোমার দৃষ্টি, চন্দ্রে তোমার মুখের শোভা, ময়ূরের পিচ্ছসমূহে তোমার কেশকলাপ এবং নদীর ক্ষুদ্র ক্ষুদ্র তরঙ্গে তোমার ভ্রূবিলাস দেখিতে পাইতেছি; কিন্তু হায়! কোপনস্বভাবে! কোনও এক পদার্থে তোমার সাদৃশ্য নাই ॥৪৩॥

**अन्वयः**—शिलायां धातुरागैः प्रणयकुपितां त्वां आलिख्य यावत् आत्मानं ते

(४४—४५) श्लोकयोर्मध्ये क्वचिदयमधिकः श्लोकः। यथा—

धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्य बाले!
दूरीभूतं प्रतनुमपि मां पञ्चबाणः क्षिणोति?।
घर्मान्तेऽस्मिन् विगणय कथं वासराणि व्रजेयुः
दिक्संसक्तप्रवितत घनव्यस्तसूर्य्यातपानि ॥

चरणपतितं कर्त्तुं इच्छामि, तावत् मुहुः उपचितैः अस्रैः मे दृष्टिः आलुप्यते, क्रूरः कृतान्तः तस्मिन् अपि नौ सङ्गमं न सहते ॥४४॥

चञ्चला—त्वामिति। शिलायाम् अन्यचित्राधाराभावात् प्रस्तर-खण्डोपरि, धातुरागैः अपरचित्रवर्णाभावात् गैरिकादिरञ्जनद्रव्यैः, प्रणयकुपितां कुतोऽपि कारणात् कृतमानाम्, त्वां तव प्रतिमूर्त्तिम्, आलिख्य चित्रयित्वा, यावत् यदेत्यर्थः, आत्मानं स्वकीयप्रतिमूर्त्तिम्, ते तव चरणपतितं चरणपतितावस्थयेति तात्पर्य्यम्, कर्त्तुं चित्रयितु-मिच्छामि ; तावत्तदैवेत्यर्थः, मुहुर्वारं वारम्, उपचितैः शोकोदयात् प्रवृद्धीभूय उपागतैः, अस्रैर्नयनजलैः, मे मम, दृष्टिर्नयनम्, आलुप्यते आच्छाद्यते। ततश्च तथाभूतमात्मानं न चित्रयितुमर्हामीति भावः। तथा च क्रूरो नृशंसः, कृतान्तो विधिः, तस्मिन्नपि साक्षात् का कथा चित्रेऽपि, नौ आवयोः, सङ्गमं सम्मेलनम्, न सहते सोढुं न शक्नो-तीत्यर्थः, अश्रुणा नयनावरणादिति भावः।

अत्र दृष्टिलोपरूपस्य कार्य्यस्य विधिकर्तृकसम्मेलनासहनरूपेण कारण-समर्थनादर्थान्तरन्यासः, असहनं प्रति क्रूरपदार्थस्य हेतुत्वात् काव्य-लिङ्गम्, तथा तस्मिन्नपीत्यनेन 'साक्षात्सम्मेलने का कथा' इत्यर्थस्य आपतनादर्थापत्तिश्च, इत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः। तथा कृतान्तशब्दस्य नानार्थत्वेऽपि यमार्थ एव प्रसिद्धत्वात् अत्र तु अप्रसिद्धे दैवार्थे प्रयोगात् निहतार्थत्वदोषः ; स च 'कृतान्तः' इत्यत्र 'विधाता' इति पाठेन समाधेयः।

द्वितीयार्द्धानुरूपं द्वितीयार्द्धं यथा शाकुन्तले—

"बाष्पस्तु न ददात्येनां द्रष्टुं स्वप्नगतामपि ॥" ॥४४॥

सञ्जीवनी—सम्प्रति प्रतिकृतिदर्शनमाह त्वामिति। हे प्रिये!

प्रणयेन प्रेमातिशयेन कुपितां कुपितावस्थायुक्तां त्वां त्वत्प्रतिकृति-मित्यर्थः। धातवो गैरिकादयः। "धातुर्वातादिशब्दादिगैरिकादि-ष्वजादिषु" इति यादवः। त एव रागा रञ्जकद्रव्याणि। "चित्रादि रञ्जकद्रव्ये लाक्षादौ प्रणयेच्छयोः। मात्सर्यादौ च रागः स्यादारुण्ये रञ्जने पुमान्॥" इति शब्दार्णवः। तैर्धातुरागैः शिलायां शिलापट्टे आलिख्य निर्म्माय आत्मानं मां मत्प्रतिकृतिमित्यर्थः, ते तव चित्रगताया इत्यर्थः, चरणपतितं कर्त्तुं तथा लिखितुं यावदिच्छामि तावत् इच्छासम-कालमेव मुहुरुपचितैः प्रवृद्धैः अस्रैरश्रुभिः कर्त्तृभिः। "अस्रमश्रुणि शोणिते" इति विश्वः। मे दृष्टिरालुप्यते आव्रियत इत्यर्थः। ततो दृष्टिप्रतिबन्धात् लेखनं प्रतिबध्यते इति भावः। क्रूरो घातुकः। "नृशंसो घातुकः क्रूरः" इत्यमरः। कृतान्तो दैवम्। "कृतान्तो यम-सिद्धान्तदैवाकुशलकर्म्मसु" इत्यमरः। तस्मिन्नपि चित्रेऽपि नौ आवयोः। "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नौ" इति नावादेशः। सङ्गमं सहवासं न सहते। सङ्गमलेखनमप्यावयोरसहमानं दैवमावयोः साक्षात् सङ्गमं न सहते इति किमु वक्तव्यमित्यपिशब्दार्थः॥४४॥

हिन्दी—हे प्रिये! प्रेमातिशयसे कुपित तुमको गैरिकादियोंसे प्रस्तर में अङ्कित करके जब मैं (मानभङ्गके वास्ते) तुम्हारी चरणमें अपनेको पतित करनेकी कोशिश करता हुं। ठिक तब ही वर्द्धित प्रांशुवोंसे मेरी दृष्टि लुप्त होती है, अतः तिस (चित्र) में भी दैव इसलोगोंको मिलने नहीं सहता है॥४४॥

বাঙ্গালা—প্রিয়তমে! প্রস্তরের উপরে গৈরিকপ্রভৃতি ধাতুরাগ-দ্বারা তোমার প্রণয়কুপিত মূর্ত্তি চিত্রিত করিয়া, যেমন তোমার চরণতলে পতিত আপনার মূর্ত্তি চিত্র করিতে ইচ্ছা করি, তখনই অশ্রুরাশি আবির্ভূত হইয়া দৃষ্টিলোপ করিয়া দেয়। অতএব নৃশংস বিধাতা চিত্রেও আমাদের সম্মেলন সহ্য করিতে পারে না॥৪৪॥

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोः
लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिशलयेष्वश्रुलेशाः पतन्ति ॥४५॥

अन्वयः—स्वप्नसन्दर्शनेषु मया कथं अपि लब्धायाः ते निर्दयाश्लेषहेतोः आकाशप्रणिहितभुजं मां पश्यन्तीनां स्थलीदेवतानां मुक्तास्थूलाः अश्रुलेशाः तरुकिशलयेषु बहुशः न पतन्ति (इति) न खलु ॥४५॥

चञ्चला—मामिति। हे प्रियतमे! स्वप्ने सन्दर्शनानि तेषु, मया, कथमपि अतिकष्टेन, लब्धायास्ते तव, निर्दयाश्लेषहेतोः गाढालिङ्गनार्थम्, आकाशे शून्यस्थाने प्रणिहितभुजं प्रसारितबाहुं माम्, पश्यन्तीनां स्थलीदेवतानां वनदेवतानाम्, मुक्तावत् स्थूलाः पीवराः, अश्रुलेशा नयनजलबिन्दवः, तरुकिशलयेषु तदाश्रयीभूतवृक्षपल्लवेषु, बहुशो न पतन्ति इति न खलु अपि तु पतन्त्येवेत्यर्थः, मम दुःखदर्शनेन तमसापि शोकोदयादिति भावः।

अत्र वनदेवतानामश्रुलेशपतनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः "मुक्तास्थूलाः" इति समासगतलुप्तोपमया सङ्कीर्यते। तेन चानुरागातिशयो व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। तथा निर्दयपदं गाढार्थे अवाचकमित्यवाचकत्वदोषः। स तु "गाढसंश्लेषहेतोः" इति पाठेन समाधेयः ॥४५॥

सञ्जीवनी—अधुना स्वप्नदर्शनमाह मामिति। सुप्तस्य विज्ञानं स्वप्नः। "स्वप्नः सुप्तस्य विज्ञानम्" इति विश्वः। सन्दर्शनं संवित्। "दर्शनं समये शास्त्रे दृष्टौ स्वप्नेऽक्षिण संविदि" इति शब्दार्णवः। स्वप्न-

भित्त्वा सद्यः किशलयपुटान् देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः।
आलिङ्ग्यन्ते गुणवति! मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥४६॥

---

सन्दर्शनानि स्वप्नज्ञानानि। चूतच्छादिवत् सामान्यविशेषभावेन सह प्रयोगः। तेषु मया कथमपि महता प्रयत्नेन लब्धाया गृहीताया दृष्टाया इति यावत्, ते तव निर्दयाश्लेषो गाढ़ालिङ्गनं स एव हेतुस्तस्य निर्दयाश्लेषार्थमित्यर्थः। "षष्ठी हेतुप्रयोगे" इति षष्ठी। आकाशे निर्विषये प्रणिहितभुजं प्रसारितबाहुं मां पश्यन्तीनां स्थलीदेवतानां मुक्ता मौक्तिकानीव स्थूला अश्रुलेशा वाष्पविन्दवः तरुकिशलयेषु। अनेन चेलाञ्चलेनाश्रुधारयासमाधिर्ध्वन्यते। बहुशो न पतन्तीति न, किन्तु पतन्त्येवेत्यर्थः। निश्चये नञ्द्वयप्रयोगः। तथा चालङ्कारिक-सूत्रम्—"प्रतिनिश्चयसिद्धार्थं नञ्द्वयप्रयोगः सिद्धः" इति। "महात्म-गुरुदेवानामश्रुपातः क्षितौ यदि। देशभ्रंशो महादुःखं मरणञ्च भवेद् ध्रुवम् ॥" इति। क्षितौ देवताश्रुपातनिषेधदर्शनात् यक्षस्य मरणाभाव-सूचनार्थं तरुकिशलयेषु पतन्तीत्युक्तम् ॥४५॥

हिन्दी—स्वप्नदर्शनमें किसी तौरसे प्राप्त हुई तुमको गाढ़ आलिङ्गन करनेके वास्ते आसमानमें प्रसारित भुजवाले मुझको देखती हुई स्थली देवताके मुक्ताके माफिक स्थूल अश्रुविन्दु वृक्षपल्लवोंसे बहुशः नहीं पतित होती है एवं नहीं ॥४५॥

বাঙ্গালা—স্বপ্নদর্শনের বেলায় অতিকষ্টে তোমাকে লাভ করিয়া গাঢ় আলিঙ্গনের নিমিত্ত আমি শূন্যস্থানে বাহুযুগল প্রসারিত করিয়াছি—

ইহা দেখিয়া বনদেবতাগণের মুক্তার ন্যায় স্থূল অশ্রুবিন্দু যে বৃক্ষের পল্লবে বহুবার পতিত হয় না, এমন নহে ॥৪৫॥

अन्वय:—सद्य: देवदारुद्रुमाणां किशलयपुटान् भित्त्वा तत्क्षीरस्रुतिसुरभय: ( सन्त: ) ये तुषाराद्रिवाता: दक्षिणेन प्रवृत्ता: ( हे ) गुणवति ! एभि: पूर्व्वं तव अङ्गं यदि किल स्पृष्टं भवेत् इति ते मया आलिङ्ग्यन्ते ॥४६॥

चञ्चला—भित्त्वेति। सद्यस्तत्क्षणात्, देवदारुद्रुमाणां देवदारु-नामकवृक्षाणाम्, किशलयपुटान् पुटाकाराग्रभागनवपल्लवान्, भित्त्वा वेगेन भङ्क्त्वा, तेषां देवदारुद्रुमाणां क्षीरस्रुतिभिर्निर्यासक्षरणै: सुरभय: शोभनगन्धशालिन: सन्त:, ये तुषाराद्रिवाता:, दक्षिणेन पथा, प्रवृत्ता-श्चलिता:, हे गुणवति ! सौन्दर्य्यसौकुमार्य्यादिगुणशालिनि ! एभि-स्तुषाराद्रिवातै:, पूर्वम् अत्रोपस्थिते: प्राक्, तव अङ्गं यदि किल स्पृष्टं भवेत् इति सम्भावनया, तवाङ्गसंस्पर्शादेवेदं सौरभमिति मननादिति भाव:, ते तुषाराद्रिवाता हिमाचलवायव:, मया आलिङ्ग्यन्ते, प्रियजनस्पर्शिवस्तुस्पर्शनेनापि विरहिणां तापशान्तिर्भवतीति आशावशा-दित्याशय:।

अत्र दारुद्रुमशब्दयो: पर्य्यायत्वेन आपाततस्तदर्थस्य पुनरुक्ततया अवभासनात् परञ्च देवदारुनामकवृक्षाणामित्यर्थावगमेन तदपगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कार: ॥४६॥

सञ्जीवनी—इदानीं तदङ्गस्पृष्टवस्तुस्पर्शनमाह भित्त्वेति। देवदारु-द्रुमाणां किशलयपुटान् पल्लवपुटान् सद्यो भित्त्वा ये तत्क्षीरस्रुतिसुरभय: तेषां देवदारुद्रुमाणां क्षीरस्रुतिभि: क्षीरनिष्यन्दै: सुरभय: सुगन्धय:। तुषाराद्रिवातत्वे लिङ्गमिदम्। ये वाता: दक्षिणेन दक्षिणमार्गेण। तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानात् तृतीया, समेन यातीति-वत्। तत्रापि करणत्वस्य प्रतीयमानत्वात् "कर्त्तृकरणयोरेव तृतीया"

संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात्।
इत्थं चेतश्चटुलनयने! दुर्लभप्रार्थनं मे
गाढ़ोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥४७॥

इति भाष्यकारः। प्रवृत्ताश्चलिताः। हे गुणवति! सौशील्यसौकुमार्य्यादि-गुणसम्पन्ने! ते तुषाराद्रिवाताः पूर्वं प्राक् एभिर्वातैः तव अङ्गं स्पृष्टं भवेद् यदि किलेति सम्भावितमेतदिति बुद्ध्वेत्यर्थः। "वार्त्ता-सम्भाव्ययोः किल" इत्यमरः। मया आलिङ्ग्यन्ते आश्लिष्यन्ते। अत्र वायूनां स्पृश्यत्वेऽपि अमूर्त्तत्वेन आलिङ्गनायोगात् आलिङ्ग्यन्ते इत्यभिधानं यक्षस्य उन्मत्तत्वात् प्रलपितमित्यदोष इति वदन् निरुक्तकारः स्वयमेवोन्मत्तप्रलापीति उपेक्षणीयः ॥४६॥

हिन्दी—देवदारुवृक्षके पल्लवपुटोंसे तत्क्षणात् छेदन करके उनके क्षीरनिष्यन्दसे सुगन्धित दक्षिणादिशासे प्रवृत्त जो ठण्डी हवा है; हे गुणवति! अगर वह तुम्हारी अङ्ग स्पर्श कियी होगी इसवास्ते उनको आलिङ्गन करती हुं ॥४६॥

বাঙ্গালা—সদ্য দেবদারুবৃক্ষের নব পল্লব ভগ্ন করিয়া, তাহার নির্য্যাস নির্গত হওয়ায় সুগন্ধি হইয়া, যে হিমালয়ের বায়ু দক্ষিণদিকে প্রবাহিত হইয়া থাকে; হে গুণবতি! ঐ বায়ু তোমার অঙ্গ যদি স্পর্শ করিয়া থাকে ইহা মনে করিয়া, আমি সেই বায়ুকে আলিঙ্গন করিয়া থাকি ॥৪৬॥

अन्वयः—दीर्घयामा त्रियामा क्षण इव कथं संक्षिप्येत, अहः अपि सर्वावस्थासु कथं मन्दमन्दातपं स्यात्, (हे) चटुलनयने! इत्थं दुर्लभप्रार्थनं मे चेतः गाढ़ोष्माभिः त्वद्वियोगव्यथाभिः अशरणं कृतं ॥४७॥

चञ्चला—संक्षिप्येतेति। दीर्घा विरहवशात् दीर्घत्वेन प्रतीयमाना यामाः प्रहरा यस्या सा, त्रियामा रात्रिः, क्षणः क्षणकाल इव कथं केन प्रकारेण संक्षिप्येत संक्षिप्तीक्रियेत मया खर्वीक्रियेतेत्यर्थः। अहर्दिनमपि, सर्वावस्थासु ग्रीष्मादिषु सर्वेष्वेव कालेषु, कथं मन्दमन्दः अल्पाल्प आतपो यस्मिन् तत् तादृशं स्यात् मम सम्बन्धे भवेत्। हे चटुलनयने! चञ्चलनेत्रे! इत्थमेवं दुर्लभा असम्भवा प्रार्थना यस्य तत्तादृशम्, मे मम, चेतश्चित्तम्, गाढोष्माभिः अत्यन्तसन्तापाभिः, त्वद्वियोगव्यथाभिः त्वदीयविरहवेदनाभिः, अशरणं रक्षकहीनं निरुपायं कृतम्।

अत्र क्षण इवेति श्रौती उपमा, तथा दीर्घयामा त्रियामेत्यत्र यामेति शब्दार्थयोः पौनरुक्त्यात् सम्बन्धभेदेन तात्पर्य्यमात्रतो भेदाच्च लाटानुप्रासः; अनयोरेकपादरूपैकाश्रयानुप्रवेशरूपः सङ्करः। केचित्तु छेकानुप्रासं वदन्ति; तन्न, छेकानुप्रासस्य सामान्यरूपतया विशेषभूतलाटानुप्रासेतरविषयकत्वात् सामान्यविशेषन्यायात् अन्यथा "स्मेरराजीवनयने!" इत्यादौ दर्पणोदाहरणेऽपि छेकानुप्रासस्य दुर्निवारप्रसङ्गात् ॥४७॥

सञ्जीवनी—संक्षिप्येतेति। दीर्घा यामाः प्रहरा यस्यां सा दीर्घयामा विरहवेदनया तथा प्रतीयमानेत्यर्थः, त्रियामा रात्रिः। आद्यन्तयोरर्द्धयामयोः दिनव्यवहारात् त्रियामेति क्षीरस्वामी। क्षण इव कथं केन आकारेण संक्षिप्येत लघूक्रियेत, अहरपि सर्वावस्थासु सर्वकालेष्वित्यर्थः, मन्दमन्दो मन्दप्रकारः। "प्रकारे गुणवचनस्य" इति द्विरुक्तिः। "कर्म्मधारयवदुत्तरेषु" इति कर्म्मधारयवद्भावात् सुपो लुक्। मन्दमन्दातपम् अत्यल्पसन्तापं कथं स्यात् न स्यादेव। हे चटुलनयने! चञ्चलाक्षि! इत्थम् अनेन प्रकारेण दुर्लभप्रार्थनम् अप्राप्यमनोरथं

**नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे**
**तत् कल्याणि ! त्वमपि सुतरां मा गमः कातरत्वम्।**
**कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा**
**नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥४८॥**

---

मे मम चेतः गाढ़ोष्माभिरतितीव्राभिः त्वद्वियोगव्यथाभिः अशरणमनाथं कृतम् ॥४७॥

**हिन्दी**—दीर्घ प्रहरवाली रात्रि किस तरहसे लघु की जावे। दिवसभी सब अवस्थाओं में किस तरहसे अल्पसन्तापवाला होवेगा, अपि तु ऐसा कभी नहीं हो सकता। हे चञ्चलनयने ! इस प्रकारसे अप्राप्त हुआ मनोरथ जिनका, ऐसा मेरा चित्त अतितीव्र तुम्हारी वियोगव्यथाओंसे अनाथ किया है ॥४७॥

**বাঙ্গালা**—রাত্রির প্রহরগুলিকে দীর্ঘ বলিয়া বোধ হয়; সুতরাং সেই রাত্রিকে ক্ষণকালের ন্যায় কি প্রকারে সংক্ষিপ্ত করিব এবং কি প্রকারেই বা সকল সময়ে দিনের বেলায় অল্প অল্প তাপ হয়—এইরূপে দুর্ল্লভ বিষয়ের প্রার্থনাকারী আমার চিত্তকে অত্যন্ত সন্তাপজনক তোমার বিরহবেদনা একেবারে নিরুপায় করিয়া ফেলিয়াছে ॥৪৭॥

**अन्वयः**—ननु बहु विगणयन् आत्मना एव आत्मानं अवलम्बे, तत् (हे) कल्याणि ! त्वं अपि सुतरां कातरत्वं मा गमः, कस्य अत्यन्तं सुखं उपनतं एकान्ततः दुःखं वा (उपनतं भवति), दशा चक्रनेमिक्रमेण नीचैः उपरि च गच्छति ॥४८॥

**चञ्चला**—नन्विति। सम्बोधने ननुशब्दः, हे प्रियतमे इत्यर्थः। बहु विगणयन् अनेकधा विचारयन्, आत्मनैव स्वयमेव, आत्मानं जीवनम्, अवलम्बे धारयामि। न पुनः परोपदेशेन अन्यविधाश्वास-

---

(४८) न त्वात्मानं। आत्मना नावलम्बे। सुखमुपगतं। इति पाठान्तराणि।

वस्तुलाभेन वा अवलम्बे इत्येवशब्दव्यवच्छेद्यम्। तत्तस्मात् हे कल्याणि! शुभे! त्वमपि, सुतरामत्यन्तं कातरत्वं विरहेण विह्वलत्वम्, मा गमः न प्राप्नुहि। ननु तादृशमतुलनीयं सुखमनुभूयैव ईदृशं दारुणं दुःखमनुभवन्ती कथं कातरत्वं न गच्छामीत्याह कस्येति। जगति कस्य जनस्य अत्यन्तं धारावाहिकरूपेण सातिशयं सुखम्, उपनतम् उपस्थितं भवति? एकान्ततो धारावाहिकरूपेण सातिशयम्, दुःखं वा उपनतं भवति? अपि तु कस्यापि नेत्यर्थः। ननु कथमीदृग्-भवतीत्याह नीचैरिति। दशा लोकानामवस्था, चक्रनेमिक्रमेण रथ-चक्रादिप्रान्तभागानुसारेण, नीचैः अधः, उपरि ऊर्द्ध्वं च, गच्छति। तथा च विधातृनियमेनैव लोकानामवस्थायाः परिवर्त्तनशीलत्वात् सुखदुःखयोश्च तदन्तर्गतत्वेन परिवर्त्तनावश्यम्भावात् यथा तादृशसुखा-नन्तरं तवेदृशमिदानीं दुःखं तथा दुःखानन्तरमपि तादृशसुखमवश्यमेव भविष्यतीति मत्वा कातरत्वं मा गम इत्याशयः।

अत्र प्रथमे चरणे 'आत्मनैव' इति एवशब्देन 'परोपदेशादिना' इत्यर्थस्य व्यपोहनादार्थी परिसंख्या, तृतीये तद्गतसामान्येन पूर्वगत-विशेषसमर्थनादर्थान्तरन्यासः, 'कस्यापि न' इत्यर्थान्तरस्य आपतना-दर्थापत्तिः, 'उपनतम्' इत्येकया क्रियया सुखदुःखयोः कर्त्तृतया अन्वया-त्तुल्ययोगिता च इत्येतेषामेकपादरूपैकाश्रयानुप्रवेशरूपः सङ्करः, तथा चतुर्थे दशाया नीचोपरिगमनरूपेण कारणेन सुखदुःखयोर्धारावाहिक-भावेन उपस्थित्यभावरूपस्य कार्य्यस्य समर्थनादपरोऽर्थान्तरन्यासः, 'चक्रनेमिक्रमेण' इत्यत्र अर्थपर्य्यालोचनया सादृश्यावगमादार्थी उपमा च, अनयोरपि पूर्व्ववदेव एकाश्रयानुप्रवेशरूपः सङ्करः। एवञ्च तादृशयोः सङ्करयोश्च प्रागुक्तया परिसंख्यया सह परस्परनिरपेक्षतया पर्य्यवसाने पुनः संसृष्टिः।

द्वितीयार्द्धानुरूपः श्लोको यथा महाभारते वनपर्वणि षोड़शाधिकद्विशततमाध्याये—

"सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।
चक्रवत् परिवर्त्तन्ते दुःखानि च सुखानि च॥"

"पर्य्यायेणोपसर्पन्ते नरं नेमिमरा इव" इति द्वितीयार्द्धपाठोऽपि दृश्यते॥४८॥

सञ्जीवनी—न च मदीयदुःशापश्रवणेन भेतव्यमित्याह नन्विति। नन्वित्यामन्त्रणे। "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः। ननु प्रिये! बहु विगणयन् "शापान्ते सति एवमेवं करिष्यामि" इत्यावर्त्तयन् आत्मानम् आत्मनैव स्वेनैव। "प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया। अवलम्बे धारयामि यथाकथञ्चित् जीवामीत्यर्थः। तत्तस्मात् कारणात् हे कल्याणि! सुभगे! त्वत्सौभाग्येनैव जीवामीति भावः। "बह्वादिभ्यश्च" इति ङीप्। त्वमपि सुतरामत्यन्तं कातरत्वं भीरुत्वं मा गमः गच्छ। गमेर्माङि लुङ्। "न माङ्योगे" इत्यड़ागमाभावः। तादृक्सुखिनोरावयोः ईदृशे दुःखे कथं न बिभेमि इत्याशङ्क्याह कस्येति। कस्य जनस्य अत्यन्तं नियतं सुखम् उपनतं प्राप्तम्, एकान्ततो नियमेन दुःखं वा उपनतम्। किन्तु दशा अवस्था चक्रस्य रथाङ्गस्य नेमिवदन्तः। "चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्" इत्यमरः। तस्याः क्रमेण परिपाट्या। "क्रमः शक्तौ परिपाट्याम्" इति विश्वः। नीचैः अधः उपरि च गच्छति प्रवर्त्तते, जन्तोः सुखदुःखे पर्य्यावर्त्तेते इत्यर्थः॥४८॥

हिन्दी—हे प्रियतमे! अभिशापके बाद मैं ऐसा करूंगा इति विचार करता हुआ आपही अपनेको रक्षा करता हूं। (किसि तरहसे जीवित हूं) अतः हे कल्याणि! तुमभी भी नितान्त कातर न हो जाना। किसका अत्यन्त सुख प्राप्त होता

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान् मासान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥४९॥

है, किसका वा अत्यन्त दुःख। चक्रके मँथेके माफिक अवस्था नीचसे उपर और उपरसे नीच घूमती है ॥४८॥

**बाङ्गाला**—প্রিয়তমে! আমি নানাপ্রকার বিবেচনা করিয়া আপনিই আপনাকে স্থির রাখিয়া থাকি। অতএব হে শুভে! তুমিও কাতর হইও না। কারণ, এই জগতে কাহার ধারাবাহিক সুখ বা দুঃখ উপস্থিত হইয়া থাকে? লোকের অবস্থা, চক্রের প্রান্তভাগের ন্যায় নীচে ও উপরে যাইয়া থাকে ॥৪৮॥

**अन्वयः**—शार्ङ्गपाणौ भुजगशयनात् उत्थिते (सति) मे शापान्तः (भवेत्), लोचने मीलयित्वा शेषान् चतुरः मासान् गमय, पश्चात् आवां विरहगणितं तं तं आत्माभिलाषं परिणतशरच्चन्द्रिकासु क्षपासु निर्वेक्ष्यावः ॥४९॥

**चञ्चला**—शापान्त इति। शार्ङ्गपाणौ नारायणे, भुजगशयनात् अनन्तनागदेहशय्यातः, उत्थिते सति कार्त्तिकशुक्लैकादश्यामित्यर्थः मे मम, शापान्तः कुबेरदत्तशापस्यावसानम्, भवेदिति शेषः। अतएव लोचने नयनद्वयम्, मीलयित्वा मुद्रयित्वा, यथा मच्छून्यतादर्शनं न स्यादिति भावः। साधारणवदुक्तिरियम्। शेषान् अवशिष्टान्, चतुरः कियद्दिनाधिकान् चतुःसंख्यकान् मासान्, गमय अतिवाहय। पश्चात्

(४९) मासानन्यान्। मासानेतान्। विरहजनितं। विरहगुणितं। इति पाठभेदाः।

शापान्तात् परम्, आवां त्वञ्च अहञ्च, विरहगणितं विरहावस्थायां सङ्कल्पितम्, तं तम् आत्मनोः स्वयोः अभिलाषम् अभिलषितविषयम्, परिणता परिपूर्णा भोगिनां भोगसाधनाय सर्वथोपयुक्तेत्यर्थः, शरच्चन्द्रिका शरत्कालीयज्योत्स्ना यासु तासु तथोक्तासु, चपासु रात्रिषु, निर्वेक्ष्याव उपभोक्ष्यावहे । "इषश्च ऊर्जश्च शारदावृतुः" इति तिथितत्त्वधृतश्रुत्यनुसारात् कार्त्तिकमासस्य शरत्त्वमेवेति बोध्यम् ।

अत्र अनन्त इति सर्पविशेषे वक्तव्ये भुजग इति सर्पसामान्याभिधानात् विशेषे अविशेषाख्यदोषः ; स तु "विष्णूत्थानान्मम खलु परं भावि शापावसानम्" इति पाठेन समाधेयः ॥४९॥

सञ्जीवनी—न च निरवधिकमेतत् दुःखमित्याह शापान्त इति । शार्ङ्गं नाम धनुः पाणौ स्थितं यस्य तस्मिन् शार्ङ्गपाणौ विष्णौ । "सप्तमी विशेषणे" इत्यादिना बहुव्रीहिः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" इति वक्तव्यात् पाणिशब्दस्योत्तरनिपातः । भुजगः शेष एव शयनं तस्मादुत्थिते सति मे शापान्तः शापावसानम्, भविष्यतीति शेषः । शेषान् अवशिष्टान् चतुरो मासान् मेघदर्शनप्रभृति हरिबोधनदिनान्तमित्यर्थः । दशदिवसाधिक्यन्तु नात्र विवक्षितमित्युक्तमेव । लोचने मीलयित्वा निमील्य गमय धैर्य्येणातिवाहयेत्यर्थः । पश्चादनन्तरम्, त्वञ्च अहञ्च आवाम् । "त्यदादीनि सर्वैर्नित्यम्" इत्येकशेषः । विरहे गणितम् 'एवमेव करिष्यामि' इति मनसि आवर्त्तितं तं तम् । वीप्सायां द्विरुक्तिः । आत्मनोरावयोः अभिलाषं मनोरथं परिणताः शरच्चन्द्रिका यासां तासु चपासु रात्रिषु निर्वेक्ष्यावः भोक्ष्यावहे । विशतेर्लृट् । "निर्वेशो भृतिभोगयोः" इत्यमरः । अत्र केचित् "नभोनभस्ययोरेव वार्षिकत्वात् कथमाषाढादिचतुष्टयस्य वार्षिकत्वमुक्तम्" इति चोदयित्वा "ऋतुत्रयपक्षाश्रयणाददविरोधः" इति पर्य्यहारि, तत् सर्वमसङ्गतम् ।

भूयश्चाह त्वमयि ! शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वरं विप्रबुद्धा।
सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे
दृष्टः स्वप्ने कितव ! रमयन् कामपि त्वं मयेति ॥५०॥

अत्र गतशेषास्त्वत्वारो मासा इत्युक्तं कविना, न तु ते वार्षिका इति तस्मादनुक्तोपालम्भ एव। यच्च नाथेनोक्तं कथमाषाढ़ादिचतुष्टयात् परं शरत्काल इति। तथापि आ कार्त्तिकसमाप्तेः शरत्कालानुवृत्तेः परिणतशरच्चन्द्रिकासु इत्युक्तम्, न तु तदैव शरत्प्रादुर्भाव उक्त इत्यविरोध एव ॥४९॥

**हिन्दी**—अहिशयनसे विष्णुमहाराजके उठनेमे बाद मेरे शापका अवसान होगा। आंख मुद कर बाकी चार महीना अतिवाहित करो। पीछे हमलोग विरहावस्थामें कल्पित बहु बहु आत्माभिलाष पूर्ण शरच्चन्द्रिकावाली रात्रियोंमें भोगेंगे ॥४९॥

**বাঙ্গালা**—নারায়ণ অনন্তশয্যা হইতে উঠিলে পর আমার শাপের অবসান হইবে; অতএব তুমি চোখ দু'টী বুজিয়া অবশিষ্ট চারি মাস অতিবাহিত কর। তাহার পর শরতের পরিপূর্ণজ্যোৎস্নাসমন্বিত রাত্রিতে আমরা বিরহের সময় মনে মনে কল্পিত সেই সকল অভীষ্ট বিষয়গুলি উপভোগ করিব ॥৪৯॥

**अन्वयः**—भूयः च आह—अयि ! त्वं पुरा शयने मे कण्ठलग्ना (सती) निद्रां गत्वा किं अपि सस्वरं रुदती विप्रबुद्धा असकृत् पृच्छतः च मे सान्तर्हासं इति कथितं (हे) कितव ! मया स्वप्ने कां अपि रमयन् त्वं दृष्टः ॥५०॥

**चञ्चला**—इदानीमभिज्ञानमाह भूय इति। भूयश्चाह तव भर्त्ता

(५०) त्वमपि। भूयश्चापि त्वमसि शयने। सत्वरं विप्रबुद्धा। इति पाठान्तराणि।

पुनरपि मन्मुखेन इदमाहेत्यर्थः। किन्तदित्याह त्वमित्यादि। अयि! प्रियतमे! त्वं पुरा पूर्वम्, शयने शय्यायाम्, मे मम, कण्ठलग्ना सती, निद्रां गत्वा किमपि अनिर्वचनीयम्, तथा सस्वरं सशब्दम् उच्चैःस्वरमित्यर्थः यथा स्यात्तथा, रुदती सती, विप्रबुद्धा जागरिता आसीरिति शेषः। अनन्तरञ्च असकृत् वारं वारम्, पृच्छतः "कथं रोदिषि" इति जिज्ञासमानस्य, मे मम समीपे, सान्तर्हासं जागरणात् परं स्वप्नदृष्टवृत्तान्तस्य अलीकत्वेन मनोगतहास्येन सह, इति कथितं त्वया उत्तरं दत्तम्, किन्तदित्याह दृष्ट इति। हे कितव! धूर्त्त! गूढ़भावेन परस्त्रीरमणादिति भावः। मया भार्य्यया स्वप्ने, कामपि अन्यां स्त्रियं रमयन् त्वं भर्त्ता दृष्टः। वासगृहे जनान्तराभावेन केवलाभ्यां युवाभ्यामेव विदितस्यास्य वृत्तान्तस्याभिधानादहं तव भर्त्तुर्विश्वस्त एव दूत इति अस्यैव च वृत्तान्तस्य अभिज्ञानत्वमिति च वक्तुर्मेघस्याभिप्रायः॥५०॥

सञ्जीवनी—सम्प्रति तस्या मेघवञ्चकत्वशङ्कानिरासाय अतिगूढ़मभिज्ञानमुपदिशति भूय इति। हे अबले! भूयः पुनरपि आह त्वद्भर्त्ता मन्मुखेनेति शेषः। मेघवचनमेतत्। किमित्यत आह। पुराशब्दश्चिरातीते। "स्यात् प्रबन्धे चिरातीते निकटागामिके पुरा" इत्यमरः। पुरा पूर्वं शयने मे कण्ठलग्नापि। त्वं गले बद्धस्य कथमपि गमनं न सम्भवेदिति भावः। निद्रां गत्वा किमपि केन वा निमित्तेनेत्यर्थः। सस्वरं सशब्दम् उच्चैरित्यर्थः, रुदती सती विप्रबुद्धा आसीरिति शेषः। असकृत् बहुशः पृच्छतः रोदनहेतुमिति शेषः, मे मम हे कितव! त्वं कामपि रमयन् मया स्वप्ने दृष्ट इति त्वया सान्तर्हासं समन्दहासं यथा तथा कथितश्च इति त्वद्भर्त्ता भूयश्चाह इति योजना॥५०॥

हिन्दी—हे अबले! फिरभी तुम्हारी स्वामी मेरे मुखसे कहते है—कि पहले बिछोनामें मेरे कण्ठलग्नाभी तुम निद्रित होकर कुछ कारणसे सशब्द रोती हुई

**एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा**
**मा कौलीनादसितनयने! मय्यविश्वासिनी भूः।**
**स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगात्**
**इष्टे वस्तुन्युपचिततरसाः प्रेमराशीभवन्ति ॥५१॥**

जागरित हुयीथी। जब बार बार मैंने पुछता भया, तब तुमने हंसकर हमको जवाब दिया, कि हे धूर्त्त! मैंने तुमको किसी औरतसे स्वप्नमें रमण करता हुआ देखा ॥५०॥

**বাঙ্গালা**—আপনার স্বামী পুনরায় বলিয়াছেন—হে প্রিয়তমে! তুমি পূর্ব্বে একদিন শয্যাতে আমার কণ্ঠলগ্ন অবস্থায় নিদ্রিত হইয়া অনির্ব্বচনীয় উচ্চৈঃস্বরে কাঁদিতে কাঁদিতে জাগিয়াছিলে। আমি বারংবার রোদনের কারণ জিজ্ঞাসা করিতে লাগিলাম, তখন তুমি মনে মনে হাসিয়া আমার নিকট বলিয়াছিলে যে, "হে ধূর্ত্ত! আমি স্বপ্নে তোমাকে অন্য কোন রমণীর সহিত রমণ করিতে দেখিয়াছি" ॥৫০॥

**अन्वयः**—(हे) असितनयने! एतस्मात् अभिज्ञानदानात् मां कुशलिनं विदित्वा कौलीनात् मयि अविश्वासिनी मा भूः, विरहे किं अपि स्नेहान् ध्वंसिनः आहुः, तु अभोगात् ते इष्टे वस्तुनि उपचितरसाः प्रेमराशीभवन्ति ॥५१॥

**चम्पूला**—एतस्मादिति। हे असितनयने! कृष्णवर्णनेत्रद्वये! एतस्मात् पूर्वोक्तात्, अभिज्ञानदानात् गूढ़वृत्तान्तरूपजीवनचिह्नार्पणात्, मां कुशलिनं जीवनविषये मङ्गलवन्तं जीवितमेवेत्यर्थः, विदित्वा ज्ञात्वा, कौलीनात् लोकवादात् "स्त्रीविच्छिन्नो यक्षः ध्रुवमेव अपरां स्त्रियमिदानीं गृहीतवान्" इति सम्भावितजनप्रवादादित्यर्थः मयि अविश्वासिनी

(५१) चकितनयने!। विरहव्यापदस्त्वभोग्या इष्टे वस्तुन्युपचितरसाः। इति पाठभेदौ।

स्वमालासक्तत्वे विश्वासहीना मा भून् भव। कथमेतदित्याह स्नेहा-
निति। विरहे विच्छेदसमये, किमपि केनापि कारणेन भार्य्यायां पुरुषान्तरस्य भर्त्तुश्च अबलान्तरस्य भोगेनेत्यर्थः, स्नेहान् अनुरागान्, ध्वंसिनो विनाशशीलान्, आहुः प्रेमतत्त्वज्ञा इति शेषः, तु किन्तु, अभोगात् दम्पत्योः पुरुषान्तररमण्यन्तरभोगाभावात्, ते स्नेहाः, इष्टे वस्तुनि पत्यौ पत्नाञ्च, उपचिताः सङ्कल्पवशात् प्रवृद्धाः रसाः सुखा-स्वादायेच्छा ते तादृशाः सन्तः प्रेमराशीभवन्ति प्रेमरूपत्वेन परिणमन्ते। तथा च आवामुभाविव परस्परपरीक्षितचित्तवृत्तौ इत्यतो यथाहं पुरुषान्तरभोगाभावं निश्चित्य त्वयि अविश्वासी न भूतः, तथा त्वमपि अबलान्तरभोगाभावं निश्चित्य मयि अविश्वासिनी मा भूरिति भावः। सञ्जीवनीव्याख्यानन्तु चिन्त्यम्।

अत्र द्वितीयचरणवाक्यार्थं प्रति द्वितीयार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥५१॥

सञ्जीवनी—एतस्मादिति। एतस्मात् पूर्वोक्तात्, अभिज्ञायते अनेनेति अभिज्ञानं लक्षणं तस्य दानात् प्रापणात् मां कुशलिनं क्षेमवन्तं विदित्वा ज्ञात्वा, हे असितनयने! कुले जनसमूहे भवात् कौलीनात् लोकप्रवादात् 'एतावता कालेन परासुर्नोचेत् आगच्छति' इति जनप्रवादा-दित्यर्थः। "स्यात् कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम्" इत्यमरः। मयि विषये अविश्वासिनी मरणशङ्किनी मा भूः न भव। भवतेर्लुङ्, "न माङ्योगे" इत्यडागमप्रतिषेधः। न च दीर्घकालविप्रकर्षात् पूर्वस्नेह-निवृत्तिः शङ्क्या इत्याह स्नेहानिति। किमपि किञ्चिन्निमित्तं न विद्मत इति शेषः, स्नेहान् प्रीतीः विरहे सति अन्योन्यविप्रकर्षे सति ध्वंसिनः विनश्वरान् आहुः। तत्तथा न भवतीत्यभिप्रायः। किन्तु ते स्नेहाः

आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥५२॥

अभोगात् विरहे भोगाभावात् हेतोः । प्रसज्यप्रतिषेधेऽपि नञ्‌समास इष्यते । इष्टे वस्तुनि विषये उपचितो रसः स्वादो येषु ते उपचितरसाः सन्तः प्रवृद्धतृष्णा इत्यर्थः । "रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोः" इति विश्वः । प्रेमराशीभवन्ति वियोगासहिष्णुत्वमापद्यन्त इत्यर्थः । स्नेहप्रेम्णोरवस्थाभेदाद्भेदः । तदुक्तम्—"आलोकनाभिलाषौ रागस्नेहौ ततः प्रेमा । रतिशृङ्गारौ योगे वियोगतो विप्रलम्भश्च ॥" इति । तदेव स्फुटीकृतं रसरत्नाकरे—"प्रेक्षा दिदृक्षा रम्येषु तच्चिन्ता त्वभिलाषकः । रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्प्रवणक्रिया ॥ तद्वियोगासहं प्रेम रतिस्तत्सहवर्त्तनम् । शृङ्गारस्तत्समः क्रीड़ा संयोगः सप्तधा क्रमात् ॥" इति ॥५१॥

**हिन्दी**—इस अभिज्ञानसे मुझको कुशली जान कर हे असितनयने ! लोकप्रवादसे मेरे ऊपर अविश्वासिनी न हो । कुछ निमित्तसे विरहावस्थामें कुछ स्नेह नष्ट होते है, परन्तु वे स्नेहभोगाभावसे इष्टवस्तुमें प्रवृद्धतृष्ण होते हुए प्रेमराशि होते है ॥५१॥

**বাঙ্গালা**—হে অসিতনয়নে ! এই অভিজ্ঞান-দানবশতঃ আমাকে কুশলী জানিয়া, লোকের কথায় আমার প্রতি বিশ্বাসহীন হইও না। কারণ, প্রেমতত্ত্বজ্ঞ ব্যক্তিরা বলিয়া থাকেন যে, বিচ্ছেদের সময় কোনও

(५२) आश्वास्यैनां । प्रथमविरहेणार्द्रशोकां । प्रथमविरहादुग्रशोकां सखीं मे । शैलादस्मात् । इति पाठभेदाः ।

কারণে স্নেহ বিনষ্ট হইয়া যায়; কিন্তু সেই স্নেহই আবার ভোগ না হওয়ায় এবং প্রিয়বস্তুবিষয়ে আকাঙ্ক্ষা বৃদ্ধি পাওয়ায় প্রেমরাশিতে পরিণত হয়॥৫১॥

অন্বয়:—প্রথমবিরহোদগ্রশোকাং তে সখীং এবং আশ্বাস্য ত্রিনয়নবৃষোৎখাতকূটাৎ শৈলাৎ আশু নিবৃত্তঃ (সন্) সাভিজ্ঞানপ্রহিতকুশলৈঃ তদ্বচোভিঃ মম অপি প্রাতঃ-কুন্দপ্রসবশিথিলং জীবিতং ধারয়েথাঃ॥৫২॥

চঞ্চলা—আশ্বাস্যেতি। প্রথমবিরহেণ পূর্বমননুভূতত্বাৎ দুঃসহেনেতি ভাবঃ, উদগ্র উগ্রো মহানিত্যর্থঃ শোকো যস্যাস্তাম্, তে তব সখীং মৎপ্রিয়াম্, এবম্ অনেন পূর্বোক্তমদ্বার্ত্তাদানেন, আশ্বাস্য সান্ত্বয়িত্বা, ত্রিনয়নবৃষেণ মহাদেববৃষভেণ উৎখাতাঃ জাতিস্বভাবাৎ শৃঙ্গেণ উৎপাটিতাঃ কূটাঃ শৃঙ্গাণি যস্য তস্মাৎ, শৈলাৎ কৈলাসপর্বতাৎ, আশু শীঘ্রম্, নিবৃত্তঃ প্রত্যাবৃত্তঃ সন্, সাভিজ্ঞানং মম বিশ্বাসার্থং মদ্দেব সচিহ্নং প্রহিতং প্রেরিতং কুশলং মাঙ্গলিকবৃত্তান্তো যেষু তৈঃ, তস্যাস্তব সখ্যা মৎপ্রিয়ায়া ইত্যর্থঃ বচোভির্বাক্যৈঃ মমাপি প্রাতঃ প্রাতঃ-কালে যঃ কুন্দপ্রসবঃ কুন্দকুসুমং তদ্বৎ শিথিলং তদ্বিরহশোকেন পতনোন্মুখমিত্যর্থঃ, জীবিতং জীবনম্, ধারয়েথা অবস্থাপয় রক্ষেত্যর্থঃ।

অত্র কুন্দপ্রসবশিথিলমিতি সমাসগতা লুপ্তোপমালঙ্কারঃ। ত্রিনয়ন-বৃষোৎখাতকূটাদিতি বিশেষণাৎ তথাত্বেন স্থানস্য অতীবোচ্চাবচতয়া তত্রাবস্থানং তবাপি নিতরামসম্ভবমেবেতি বস্তুনা বস্তুধ্বনিঃ। অতএব ন অপুষ্টার্থত্বদোষোঽপি। তথা কৈলাসশৈলাদিতি শৈলবিশেষে বক্তব্যে শৈলাদিতি সামান্যাভিধানেন বিশেষে অবিশেষাখ্যদোষোঽপি ন প্রসক্তঃ ত্রিনয়নেত্যাদিবিশেষণেনৈব তাদৃশবিশেষলাভাৎ॥৫২॥

সঞ্জীবনী—ইত্থং স্বকুশলং সন্দিশ্য তৎকুশলসন্দেশানয়ন-

कच्चित् सौम्य ! व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां तर्कयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥५३॥

मिदानीं यावत आश्वास्येति। प्रथमविरहेण उदग्रशोकां तीव्रदुःखाम्, तैं सखीम्, एवं पूर्वोक्तरीत्या आश्वास्य उपजीव्य त्रिनयनस्य त्र्यम्बकस्य वृषेण उत्खाता अवदारिताः कूटाः शिखराणि यस्य तस्मात्। "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः। शैलात् कैलासात् आशु निवृत्तः सन्, साभिज्ञानं सलक्षणं यथा तथा प्रहितं प्रेषितं कुशलं येषु तैः तस्याः त्वत्सख्याः वचोभिः ममापि प्रातःकुन्दप्रसवमिव शिथिलं दुर्बलं मम जीवितमपि धारयेथा स्थापय। प्रार्थनायां लिङ्। ॥५२॥

हिन्दी—प्रथम विरहसे अत्यन्तशोकातुर तुम्हारी सखीको इसप्रकार आश्वस्त कर, महादेवके वृषसे विदीर्ण हुये शिखर जिनका, ऐसे पर्व्वतसे शीघ्र निवृत्त तुम सचिह्न-प्रेरित कुशलयुक्त औरसकी वाणियोंसे सुबाके नक्त कुन्दफूलोंके सदृश शिथिल मेरेभी जीवन रक्षा करो ॥५२॥

বাঙ্গালা—হে মেঘ! প্রথমবিরহবশতঃ অত্যন্তশোকার্ত্তা তোমার সখীকে এইভাবে আশ্বস্ত করিয়া, মহাদেবের বৃষকর্ত্তৃক উৎপাটিতশৃঙ্গ কৈলাসপর্ব্বত হইতে প্রতিনিবৃত্ত হইয়া, চিহ্নের সহিত ও মঙ্গলসংবাদ-যুক্ত তাঁহার (প্রিয়তমার) বাক্যদ্বারা, প্রাতঃকালের কুন্দপুষ্পের ন্যায় শিথিল আমার জীবন রক্ষা করিবে ॥৫২॥

अन्वयः—(हे) सौम्य! मे बन्धुकृत्यं त्वया इदं व्यवसितं कच्चित् प्रत्यादेशात्

(५३) प्रत्याख्यानं न खलु। प्रत्यादेशां न खलु। इति पाठभेदौ।

भवतः धीरतां न खलु तर्कयामि, निःशब्दः अपि याचितः (सन्) चातकेभ्यः जलं प्रदिशसि, हि ईप्सितार्थक्रिया एव सतां प्रणयिषु प्रत्युक्तं ॥५३॥

चञ्चला—कच्चिदिति। हे सौम्य! शान्तमूर्त्ते! मे मम बन्धुकृत्यं मित्रस्य कार्य्यम् इति कृत्वा त्वया, इदं व्यवसितम् अध्यवसितं कच्चित् करिष्याम्येव इति निश्चितं किमित्यर्थः। ननु मम तूष्णीम्भावदर्शनादेव त्वदीयकार्य्ये प्रत्याख्यानं जातमिति निश्चये सति कुतस्तव ईदृक् प्रश्नावसर इत्याह प्रत्यादेशादिति। प्रत्यादेशात् 'न खल्विदं करिष्यामि' इति प्रत्याख्यानात् भवतो धीरतां तूष्णीम्भावम्, न खलु तर्कयामि सम्भावयामि प्रत्याख्यानवशादेवायं भवतस्तूष्णीम्भाव इति न मनसि करोमीत्यर्थः; तूष्णीम्भावे सत्यपि प्रत्याख्यानाभावदर्शनेन तद्व्यभिचारादिति भावः। ननु कुत्र खलु त्वया तूष्णीम्भावेऽपि प्रत्याख्यानाभावो दृष्ट इत्याह निःशब्द इति। निःशब्दोऽपि गर्जनरहितोऽपि त्वम्, याचितो जलदानाय चातकैरेव प्रार्थितः सन्, चातकेभ्यः पक्षिविशेषेभ्यः, जलं वृष्टिवारि, प्रदिशसि प्रददासि। अतस्तूष्णीम्भावेऽपि प्रत्याख्यानाभावो दृष्ट एवेति भावः। ननु प्रत्युत्तरमकृत्वा कथं परकीयप्रार्थनां पूरयामि इति किं जानासीत्याह प्रत्युक्तमिति। हि तथाहि, ईप्सितार्थस्य अभिलषितविषयस्य क्रिया सम्पादनकार्य्यमेव, सतां सज्जनानाम्, प्रणयिषु बन्धुषु विषयेषु प्रत्युक्तं प्रत्युत्तरम्। तथा च सन्तः खलु जनाः प्रार्थककार्य्यसम्पादनमेव तदीयप्रार्थनावाक्यस्य उत्तरस्थानपाति कुर्वन्तीति भावः।

अत्र द्वितीयचरणार्थं प्रति तृतीयचरणवाक्यार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गम्, तथा चतुर्थचरणगतसामान्येन पूर्वगतविशेषस्य समर्थनादर्थान्तरन्यासः, एवम् ईप्सितार्थक्रियायां प्रत्युक्तत्वारोपस्य प्रकृत-

प्रणयितुष्टिसाधनोपयोगित्वात् परिणामश्च। एवञ्च परयोरेकाश्रयानुप्रवेशरूपः सङ्करः, तस्य च काव्यलिङ्गेन सह अङ्गाङ्गिभावेन पुनः सङ्करः। तथा प्रत्युक्तं खण्डितम् इति विरुद्धार्थस्यापि प्रतीतेर्विरुद्धमतिकारितादोषः, स तु "कार्य्याधानं प्रणयिषु सतां साधु प्रत्युत्तरं हि" इति पाठेन परिहार्य्यः ॥५३॥

सञ्जीवनी—सम्प्रति मेघस्य प्रार्थनाङ्गीकारं प्रश्नपूर्वकं कथयति कच्चिदिति। हे सौम्य! साधो! इदं मे बन्धुकृत्यं बन्धुकार्य्यम्। देवदत्तस्य गुरुकुलमितिवत् प्रयोगः। व्यवसितं कच्चित् करिष्यामीति निश्चितं किम्। "कच्चित् कामप्रवेदने" इत्यमरः। अभिप्रायज्ञापनं कामप्रवेदनम्। न च ते तूष्णीम्भावादनङ्गीकारं शङ्के, यतस्ते स एवोचित इत्याह—प्रत्यादेशात् करिष्यामीति प्रतिवचनात्। "उक्तिराभाषणं वाक्यमादेशो वचनं वचः" इति शब्दार्णवः। भवतस्तव धीरतां गम्भीरत्वं न तर्कयामि न समर्थये खलु। तर्हि कथमङ्गीकारज्ञानं तत्राह—याचितः सन् निःशब्दोऽपि निर्गर्जितोऽपि अप्रतिजानानोऽपीत्यर्थः, चातकेभ्यो जलं प्रदिशसि ददासि। युक्तञ्चैतदित्याह—हि यस्मात्, सतां सत्पुरुषाणां प्रणयिषु याचकेषु विषये ईप्सितार्थक्रियैव अपेक्षितार्थसम्पादनमेव प्रत्युक्तं प्रतिवचनम्, "क्रिया केवलमुत्तरम्" इत्यर्थः। "गर्जति शरदि न वर्षति वर्षति वर्षासु निःस्वनो मेघः। नीचो वदति न कुरुते न वदति सुजनः करोत्येव॥" इति भावः ॥५३॥

हिन्दी—हे सौम्य! क्या तुमने यह मेरा दोस्तका काम करनेकेवास्ते ठिक कर लिया है। निश्चित मैं करूंगा इस वचनसे तुम्हारे धैर्य नहीं कल्पना करता हूं (क्योंकि) प्रार्थित तुम शब्द न करभी चातकोंको पानी देते हो। कारण यह है कि सत्पुरुषके प्रणयीके उपर तिमृष्टोंका काम करना ही उत्तर है ॥५३॥

**एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्तिनो मे**
**सौहार्द्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या।**
**इष्टान् देशान् विचर जलद! प्रावृषा सम्भृतश्रीः**
**मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः॥५४॥**

इति श्रीकालिदासकृतौ मेघदूते काव्ये उत्तरमेघः।

---

**বাঙ্গালা**—হে শান্তমূর্ত্তি মেঘ! তুমি আমার এই কার্য্যকে বন্ধুর কার্য্য মনে করিয়া করিবে বলিয়া স্থির করিয়াছ কি?। আমার প্রার্থনার প্রত্যাখ্যানবশতই তোমার এই নীরবভাব ইহা আমি মনে করি না।

---

(५४) प्रियमनुचितं प्रार्थनं चेतसो मे। अनुचितप्रार्थनावर्त्तिनो मे। प्रियमनुचितं प्रार्थना चेतसो मे। जलद! विचर। क्वचिदपि च ते। इति पाठान्तराणि।

५४ श्लोकात् परमिमे प्रक्षिप्ताः श्लोकाः—

तस्मादद्रेर्निगदितमथो शीघ्रमेत्यालकायां
यक्षागारं विगलितनिभं दृष्टचिह्नैर्विदित्वा।
यत् सन्दिष्टं प्रणयमधुरं गुह्यकेन प्रयत्नात्
तद्गेहिन्याः सकलमवदत् कामरूपी पयोदः॥१॥

तं सन्देशं जलधरवरो दिव्यवाचाचचक्षे
प्राणांस्तस्या जनहितरतो रक्षितुं यक्षवध्वाः।
प्राप्योदन्तं प्रमुदितमनाः सापि तस्थौ स्वभर्त्तुः
केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु॥२॥

श्रुत्वा वार्त्तां जलदकथितां तां धनेशोऽपि सद्यः
शापस्यान्तं सदयहृदयः संविधायास्तकोपः।
संयोज्यैतौ विगलितशुचौ दम्पती हृष्टचित्तौ
भोगानिष्टानविरतसुखं भोजयामास शश्वत्॥३॥

কারণ, তোমার নিকট প্রার্থনা করিলে তুমি নীরব থাকিয়াও চাতকদিগকে জল দান করিয়া থাক। দেখ, অভীষ্ট কার্য্যসম্পাদন করাই প্রণয়িগণের প্রতি সৎপুরুষদিগের প্রত্যুত্তর হইয়া থাকে ॥৫৩॥

अन्वयः—( हे ) जलद ! सौहार्द्दात् वा विधुरः इति वा मयि अनुक्रोशबुद्ध्या अनुचितप्रार्थनावर्त्तिनः मे एतत् प्रियं कृत्वा प्रावृषा सम्भृतश्रीः इष्टान् देशान् विचर, एवं ते विद्युता विप्रयोगः क्षणं अपि मा च भूत् ॥५४॥

चञ्चला—एतदिति। हे जलद! मेघ! सौहार्द्दात् मां प्रति तव बन्धुयोग्यप्रणयवशात् वा, अथवा विधुरः अयं प्रियाविरहेण विह्वलः संवृत्तः इत्यतः मयि यक्षे मां प्रतीत्यर्थः, अनुक्रोशबुद्ध्या सन्देशहरणेन दया विधेया इति ज्ञानेन, अनुचितायाम् अतीवपरिश्रमेण पूरणीयत्वात् त्वां प्रति अयोग्यायां प्रार्थनायां वर्त्तत इति तस्य तादृशप्रार्थनापरायणस्येत्यर्थः। एतेनात्मनो विवेकविहीनतासूचनेन महानेवानुनयः सूचितः। मे मम यक्षस्य, एतत् प्रियतमान्तिके सन्देशहरणरूपम्, प्रियं प्रीतिकरं कार्य्यं कृत्वा, प्रावृषा वर्षाकालेन, सम्भृता वर्द्धिता श्रीः शोभा यस्य स तादृशस्त्वम्, इष्टान् देशान् विचर। एवं निजप्रियया ममेव, ते तव विद्युता निजप्रिययेति भावः, विप्रयोगो विरहः, क्षणमपि मा च भून्नैव भवतु।

अत्र पुंस्त्रीलिङ्गाभ्यां मेघविद्युतोर्नायकनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः। तथा सौहार्द्दादिति पञ्चम्यन्तेन प्रक्रम्य अनुक्रोशबुद्ध्या इति तृतीयान्ताभिधानात् भग्नप्रक्रमतादोषः, एवं पूर्व्वानुसारेण अनुक्रोशबुद्ध्या इत्यनन्तरं स्थितियोग्यस्य द्वितीयस्य वाशब्दस्य अन्यत्रावस्थानात् अक्रमतादोषश्च। एवञ्च "सौहार्द्दाद्वा विधुरमननाद्वाप्यनुक्रोशतो वा" इति पाठेन तयोः समाधानं विधेयम्। "प्रावृषा

सम्भृतश्रीः" इति विशेषणेन बलसम्पत्तिसूचनात् नानादेशविचरणयोग्यत्वं सूचितम्, अतएव देशानिति बहुवचनं प्रयुक्तम् ॥५४॥

कोटालिपाड़ोनशियानिवासी नवद्वीपुरेशस्य सभाप्रवासी ।
सत्काश्यपोऽध्यापनमुख्यकर्म्मा व्यधादिमां श्रीहरिदासशर्म्मा ॥

व्योम-वेद-वसु-चन्द्रसम्मिते वत्सरे शकवसुन्धरापतेः ।
सौरचैत्रग उपान्त्यवासरे पर्य्यपूरि खलु चञ्चलोज्ज्वला ॥

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीश-
भट्टाचार्य्यविरचितायां मेघदूतटीकायां
चञ्चलाभिधानायामुत्तरमेघः ॥०॥
समाप्ता चेयं चञ्चला ।

---

सञ्जीवनी—सम्प्रति स्वापराधसमाधानपूर्वकं स्वकार्य्यस्य अवश्यकरणं प्रार्थयमानो मेघं विसृजति एतदिति । हे जलद ! सौहार्द्दात् सुहृद्भावात् । "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः । विधुरो वियुक्त इति हेतोः मयि विषये अनुक्रोशबुद्ध्या करुणाबुद्ध्या वा, अनुचिता तव अननुरूपा या प्रार्थना प्रियां प्रति "सन्देशं मे हर—" इत्येवंरूपा तत्र वर्त्तिनो निर्बन्धपरस्य मे मम एतत् सन्देशहरणरूपं प्रियं कृत्वा सम्पाद्य प्रावृषा वर्षाभिः । "स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः" इत्यमरः । सम्भृतश्रीः उपचितशोभः सन् इष्टान् अभिलषितान् देशान् विचर यथेष्टदेशेषु विहरेत्यर्थः । "देशकालाध्वगन्तव्याः कर्म्मसंज्ञा ह्यकर्म्मणाम्" इति वचनात् कर्म्मत्वम् । एवं महत् क्षणमपि स्वल्पकालमपि ते तव विद्युता कलत्रेणेति शेषः, विप्रयोगो विरहः मा भूत् मास्तु । "माङि" इत्याशिषि लुङ् । "अन्ते काव्यस्य नित्यत्वात् कुर्य्यादाशिषमुत्तमाम् । सर्वत्र व्याप्यते विद्वान् नायकेच्छानुरूपिणीम् ॥"

इति सारस्वतालङ्कारे दर्शनात् काव्यान्ते नायकेच्छानुरूपोऽयमाशीर्वादः प्रयुक्त इत्यनुसन्धेयम् ॥५४॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां मेघसन्देशव्याख्यायां सञ्जीवनीसमाख्यायामुत्तरमेघः ॥०॥

समाप्ता चेयं सञ्जीवनी ।

---

**हिन्दी**—हे जलद ! सुहृद्भावसे अथवा वियोगी है इस हेतुसे मेरे विषयमें कृपाबुद्धिसे अनुचित प्रार्थना करनेवाले मेरे प्रिय करनेके बाद वर्षासे वर्द्धितशोभ होकर अपने अभिलषित देशों में विचरण करो । मेरे माफिक विद्युत्के साथ तुम्हारे विरह मुहूर्तके लिये न हो ॥५४॥

**বাঙ্গালা**—হে মেঘ ! ( আমি জানি যে, ) তোমার নিকট অনুচিত প্রার্থনায় প্রবৃত্ত হইয়াছি ; তথাপি আমার প্রতি সৌহার্দ্দবশতই হউক, অথবা 'এই ব্যক্তি বিরহে কাতর হইয়াছে' এই নিমিত্ত দয়াবুদ্ধিবশতই হউক আমার এই প্রীতিকর কার্য্য করিয়া, বর্ষার প্রভাবে সুশ্রী হইয়া, অভীষ্ট দেশে বিচরণ কর। কিন্তু আমার মত তোমার যেন ক্ষণকালের জন্যও বিদ্যুতের সহিত বিচ্ছেদ না হয় ॥৫৪॥

—o—

समाप्तमिदं काव्यम् ॥०॥